अस्यायम्भावः-संसारेऽस्मिन् सर्वाण्यपि वस्तूनि परिवर्तनशीलानि भवन्ति। संसारस्य सर्वाण्यपि वस्तूनि अग्रेसरन्ति विकासञ्चाप्नुवन्ति। इत्थं प्रत्येकमपि वस्तु परिवर्तनाधीनमस्ति। मानवजीवनेऽपि परिवर्तनं भवति। वयं जानीमो यज्जीवने नैकाः समस्याः समागच्छन्ति। तासां समाधानार्थमपि मानवः सर्वदैव प्रयत्नशीलो भवति, तत्र काठिन्यञ्चानुभवति। काठिन्यमनुभवन्नपि स्वानुभवपुञ्जेन समस्यायाः समाधानं कृत्वाः सः प्रगीदति। अयं वादो वर्तमानकालिकीं भविष्यत्कालिकीञ्च समस्यां समाधातुं निर्दिशति। अर्थात् अयं वर्तमानं तात्कालिकं भविष्यं प्रति जागरूको विद्यते। भूतकालिकं स्मरणं तु व्यर्थमेवेति मत्वा यो हि व्यतीतः, तस्य चर्चा न श्रेयस्करीति ब्रूते। अपि च वादोऽयं पूर्वनिर्धारितां परम्परां प्रथाञ्च न स्वीकरोति। तस्य चिन्तनमस्ति यत् समाजे चिरकालात् याः परम्पराः प्रथाश्चः प्रचलिताः सन्ति, तासामन्धानुकरणेन बन्धनेन च मानवस्य स्वाभाविको विकासोऽवरूद्धो भवति। अतः 'देशकालपरिस्थ्त्यनुगुणं कार्यं कृत्वा यो हि मानवः स्वविकासे तत्परो भवति, परिस्थित्या सह समाञ्जस्यञ्च संस्थाप्य कार्यं करोति, स एव सफलो जायते' इयमस्ति तस्यावधारणा।

संक्षेपेणेदं वक्तुं शक्यते यत् प्रयोजनवादस्य सिद्धान्तेषु परिवर्तन-प्रयोग-उपयोगिता-अनुभव-क्रियाणाञ्च प्राधान्यं विद्यते। एतान् सिद्धान्तान् अनुसृत्य या शिक्षाव्यवस्था आयोजिता भवति, सैव बालकस्य कृते कल्याणकारिणी उपयोगिनी च भवतीति तेषामभिमतम्।

शिक्षायां प्रयोजनवादस्य यदि योगदानमधिकृत्य विचारः क्रियते, तर्हि नूनं विज्ञातं भवति, यद्दर्शनमिदं शिक्षायां प्रवर्तिताः सर्वाः व्यवस्थाः प्रभावयति। पूर्वमेवास्मिन् प्रबन्धे प्रतिपादितं यदस्य वादस्योद्घोषः 'परिवर्तनमि'ति। इदं दृश्यमानं जगत् प्रतिक्षणं परिवर्तनशीलं विद्यते। अर्थात् सर्वेऽपि प्राणिनः अनेन परिवर्तनेन प्रभाविताः भवन्ति, तदनुरूपं कार्यमपि कर्तुं प्रेरिताः सन्तः अग्रेसरन्ति। यदि वयं स्वातन्त्र्यात् पूर्वं भारतवर्षं पश्यामस्तस्य स्मरणं चिन्तनं च कुर्मस्तदा स्फुटं भवति, यत् स्वातन्त्र्यादनन्तरं भारते सामाजिक-राजनैतिक-आर्थिक-शैक्षिकव्यवस्थासु कियत् परिवर्तनं दरीदृश्यते ? न केवलं दरीदृश्यते, अपि त्वनुभूयते फलञ्च प्राप्यते। अस्माकं भौतिकेऽस्मिन् शरीरेऽपि प्रतिक्षणं परिवर्तनं बोभूयते। इत्थं परिवर्तनशीलं हि जगत्। यदि तत्र वयं किमपि पूर्वनिर्धारितमपरिवर्तनशीलं तथ्यं विचारे संयोजयामस्तदा नूनमस्माकं विकासक्रमो अवरूद्धो भविष्यति। इत्थं परिवर्तनं जातम्, जायते यास्यति च। तत्र स्थिरत्वं न मानवकल्याणाय प्रवर्तते। वस्तुतस्तु शिक्षायां प्रयोजनवादस्य या विलक्षणा संकल्पना, तस्यां संकल्पनायां सुप्रसिद्धानां विलियमजेम्स-जॉनडीविमहोदयानां शिक्षाशास्त्रिणाम् अमूल्यं योगदानमिति चर्चा विहिता। विद्मो वयं यत् जॉनडीविमहोदयस्य द्वे सूत्रवाक्ये स्तः, एकं परिवर्तनमपरञ्चोपयोगितेति। अर्थात् परिवर्तनं संसारस्य नियमः। तस्य कथनमस्ति कस्यापि वस्तुनो वास्तविकी उपयोगितेयमेवास्ति यत् तत् मानवकल्याणायोपयोगि भवेत्। अतः या शिक्षाव्यवस्था मानवकल्याणाय प्रवृत्तास्सन्ति, सैव शिक्षेति। शिक्षायाः विविधानामङ्गानां सम्बन्धों मानवकल्याणाय भवेत्। यदि शिक्षाव्यवस्था मानवकल्याणं न चिन्तयति, तर्हि सा सर्वथा त्याज्या।

वादोऽयं चिन्तयति यत् 'ज्ञानस्य कृते ज्ञानम्' एव शिक्षायाः लक्ष्यं नास्ति।' शिक्षायाः यानि बौद्धिक-धार्मिक-सौन्दर्यात्मकान्यङ्गानि तत्र क्रियात्वं स्यादिति तान्यङ्गानि क्रियारूपेणायं वादः स्वीकरोति। अस्य मतमस्ति यत् आभिः क्रियाभिः बालकः स्वमूल्यानामादर्शानाञ्च निर्माणं करोति। एताः सर्वा अपि क्रियाः बालकानामावश्यकतां पूरयेयुः। तेषां कृते उपयोगिताञ्च सम्पादयेयुः। सन्दर्भेऽस्मिन् डीवीमहोदयस्य कथनेन एतस्य प्रतिपुष्टिर्भवति। तद्यथा-*"Philosophy is the theory of Eduction in its most general phase."*

अर्थात् दर्शनं शिक्षायाः प्रयोगेण व्यवहारेण चोत्पद्यते, अतः शिक्षासिद्धान्त एव दर्शनपदवाच्यः। विद्मो वयं जीवनदर्शनेन शिक्षादर्शनम्, शिक्षादर्शनेन च सम्पूर्णाः खलु शिक्षाव्यवस्थाः प्रभाविताः भवन्ति। पश्यामो वयम् आवैदिककालादारभ्य अद्य पर्यन्तं शिक्षाव्यवस्थायां समये-समये देशकालपरिस्थित्यनुसारं परिवर्तनं सञ्जातम्। वैदिककालिकं शिक्षातन्त्रं पूर्णतया आध्यात्मिकवातावरणेनाप्लावितमासीदिति। तस्मिन् सर्वप्रथममध्ययनाध्यापनविषयत्वेन 'वेद' एव स्वीकृतः आसीत्। तदनन्तरमेव तदङ्गभूतानां षडङ्गानामध्ययनाध्यापनप्रक्रिया प्रवर्तिता आसीत्। कालेऽस्मिन् प्रचलितविधिषु मौखिक-व्याख्या-शास्त्रार्थविधिप्रभृतयो विधयः प्रवर्तिताः आसन्। कण्ठस्थीकरणस्य सर्वाधिकं महत्त्वं स्वीकृतमासीत्। इयमवधारणा प्रचलिता आसीद्यत्-

**पुस्तकस्था तु या विद्या, परहस्तगतं धनम्।**
**कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम्।।** इति।

वेदमन्त्राणां शुद्धोच्चारणस्य महत्त्वं सर्वाधिकं स्वीकृतमासीत्। तत्र अध्यापककेन्द्रिता विषयकेन्द्रिता च शिक्षणव्यवस्था सर्वत्र प्रचलिता आसीत्।

**"स शुश्रुवान् मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।**
**प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया।।"** इति। - रघुवंश, १४/४६

एतेन प्राचीनकाले गुरोर्महत्त्वं कीदृशमासीदिति महाकविकालिदासस्य कथनेनात्र स्पष्टं भवति।

छात्राणां कृते इदं निर्दिष्टमासीत्। शनैः-शनैः यथा सर्वेषु तन्त्रेषु परिवर्तनं सञ्जातम्, तथैव शिक्षाव्यवस्थायामपि प्राचीनकालापेक्षया आमूलं परिवर्तनं सञ्जातम्। सर्वप्रथममत्र विषये छात्रकेन्द्रिता शिक्षणव्यवस्था प्रवर्तिता, यत्र विषयस्यापेक्षया बालकस्य प्रधानता स्वीकृता। अपि च शिक्षाक्षेत्रे समयानुसारं नूतनाः नूतनाः शिक्षणपद्धतयः अध्यापने समाद्रिताः सन्ति।

स्वाभाविकरूपेण वयं पश्यामः अनुभवामश्च कक्षायां शिक्षकाः छात्रान् सम्बोधयन्तः स्वजीवनदर्शनानुरूपमध्यापनं कुर्वन्ति। कृतेनानेनाध्यापनेन ते गौरवान्विताश्च भवन्ति। परन्तु नायं विषयो गौरवस्य, प्रत्युत चिन्तायाः विषयः। वस्तुतस्तु अध्यापको जीवनस्य शिक्षको भवति, न विषयविशेषस्येति। यदि कश्चन शिक्षकः छात्राणां जीवनसमस्याभ्यः अपरिचितः सन् केवलं विषयमेव पाठयति, तर्हि वस्तुतः सः शिक्षको नास्तीति वक्तुं शक्यते। अद्यत्वे संकल्पना क्रियते यत् शिक्षकस्य शिक्षकत्वमस्मिन् विषये एवास्ति, यो बालकानां कृत्स्नं जीवनरहस्यं विज्ञाय तान् पाठयेत्। हरबर्टमहोदयस्य कथनमस्मिन् सन्दर्भे प्रासङ्गिकमेवास्ति, तद्यथा-*"True Education is practicble only to a true philosopher."*

प्रयोजनवादो बालकस्य क्षमता-योग्यतानुरूपां शिक्षां प्रदातुं व्यवस्थां प्रकल्पयति। अत्र बालकेभ्यः स्वातन्त्र्यं दीयते, यत्र क्रिया-प्रयोग-अनुभवाधारिता च शिक्षाव्यवस्था समायोजिता भवति। याभिः व्यवस्थाभिः बालकाः स्व-स्वविकासं प्राप्तुं सर्वविधाभ्युदयश्चावाप्तुं सर्वदैव तत्पराः भवन्ति। इयं हि शिक्षाव्यवस्था बन्धनमुक्ता भवति। वादोऽयं पूर्वप्रचलितप्रथानामन्धानुकरणं न स्वीकरोति, प्रत्युत शिक्षैका एतादृशी प्रक्रिया वर्तते, यया बालकस्य जन्मजातशक्तीनां समुचिते खलु वातावरणे विकासो भवति। या हि शिक्षा बालकस्य योग्यताक्षमतानुसारं तेभ्यो

दीयते, सैव शिक्षा फलवती भवतीति अस्य वादस्य राद्धान्तः। अत्र शिक्षाव्यवस्थायां बालकेषु वैयक्तिकभिन्नतायाः सिद्धान्तमनुसृत्य शिक्षाव्यवस्थां कर्तुं चेष्टते। कथितमपि-

**वितरति गुरूः प्राज्ञे विद्या यथैव तथा जडे,**
**न तु खलु तयोर्ज्ञाने शक्तिं करोत्पयहन्ति वा।**
**भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा,**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः।** उत्तरराम २/४

श्लोकेऽस्मिन् वैयक्तिकविभिन्नताविषयमधिकृत्यैव चिन्तनं कृतं विद्यते।

निबन्धेऽस्मिन् शिक्षायां प्रयोजनवादमधिकृत्य संक्षेपेणैव चर्चा विहिता। जानीमो वयं यत् परिवर्तनन्त्वस्मान् सर्वानपि प्रभावयति। देशकालपरिस्थित्यनुसारं शिक्षाव्यवस्थायामपि आमूलं परिवर्तनं सञ्जातमिति विवादग्रस्तो विचारो नास्ति। शिक्षां प्रति या प्राचीनावधारणा सामाजिकानामासीत्, तासामपि परिवर्तनं नूनं दरीदृश्यते। साम्प्रतं शिक्षाव्यवस्थामधिकृत्य प्रतिदिनं नूतनं नूतनं चिन्तनं शिक्षाशास्त्रिभिः विद्वद्भिः क्रियते। अस्मिन् सन्दर्भे यदि प्रयोजनवादस्य सिद्धान्तान् वयं स्मरामस्तदा नूनं साम्प्रतमस्य वादस्य शिक्षाक्षेत्रे कृतं योगदानं विस्मर्तुं नैव शक्यते। यद्यपीदमस्ति सत्यं यद्वादोऽयं न सर्वथा निर्दुष्टः। अस्य केचन सिद्धान्ताः एतादृशाः सन्ति, ये सर्वेभ्यश्चिन्तकेभ्यो न रोचन्ते। शिक्षाक्षेत्रे योजनापद्धतेः विकासं कृत्वा वादोऽयं प्रशंसनीयं कार्यमकरोत्। साम्प्रतमपि शिक्षापद्धतेः विधिरयं सर्वमान्यः प्रतिभाति। शिक्षाक्षेत्रे प्रयोजनवादस्य या संकल्पना, तस्मिन् विषये इदमेव कथितुं शक्यते-

**'पुराणमित्येव न साधुसर्वम्, न चापि सर्व नवमित्यवद्यम्।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते, मूढः परप्रत्ययनेय बुद्धिः'** इति। मावि. मि. २

महाकविकालिदासेन यदुक्तम्, तदनुसारं प्राचीनार्वाचीनयोः ये शिक्षासिद्धान्ताः तेषु पारस्परिकं युगानुरूपं भारतीयपरम्परानुरूपञ्च सामञ्जस्यं संस्थाप्य बालकानां स्वाभाविके वातावरणे सर्वविधात्मको विकासो यथा स्यात् तथा सर्वैरपि शिक्षाविद्भिः चिन्तनीयमिति शम्।

## सहायकग्रन्थसूची


१. शिक्षा के सामान्य सिद्धान्त-त्यागी एवं पाठक
२. शिक्षा सिद्धान्त-एम.आर. स्वरूप सक्सैना
३. भारतीय शिक्षादर्शन-डॉ० रामशकल पाण्डेय
४. शिक्षा के दार्शनिक आधार-डॉ० रामशकल पाण्डेय
५. शिक्षादर्शन-डॉ० रामशकल पाण्डेय
६. विश्व के महान् शिक्षाशास्त्री-डॉ० वैद्यनाथ प्रसाद वर्मा
७. भारतीय शिक्षा का इतिहास-रामबाबू गुप्त
८. भारतीय दर्शन-म.म. डॉ० उमेश मिश्र
९. भारतीय दर्शन-डॉ० बलदेव उपाध्याय
१०. रघुवंशमहाकाव्यम्-कालिदासः
११. उत्तररामचरितम्-भवभूतिः
१२. मालविकाग्निमित्रम्-कालिदासः
१३. प्राचीनशिक्षापद्धतिः-डॉ० सुरेन्द्र झा
१४. सफल शिक्षणकला-त्यागी एवं पाठक


■ पता : पूर्व प्राचार्य, राष्ट्रिय संस्कृत संस्थान लखनऊ परिसर, लखनऊ

# गोवंश और गव्यों के वैदिक सन्दर्भ

■ रामचन्द्र पाण्डेय

वैदिक साहित्य में गौ का अत्यन्त आदरणीय स्थान है। गौ शब्द का प्रयोग पृथ्वी और सूर्य रश्मियों के लिए भी किया गया है। समस्त जैविक सृष्टि का आधार सूर्य और पृथ्वी ही है। सभी प्रकार के जीव-जन्तु एवं वनस्पतियाँ सभी पृथ्वी पर उत्पन्न होते हैं तथा सूर्य रश्मि के सहयोग से पृथ्वी द्वारा उनका भरण-पोषण होता है। इन दोनों प्रधान सृष्टि स्रोतों के प्रतिनिधि के रूप में गौ को माना जाता है। जब-जब पृथ्वी पर सन्तुलन बिगड़ता है भौतिक उत्पातों की वृद्धि होती है, जीवन असुरक्षित हो जाता है, तब-तब पृथ्वी गौ का रूप धारण कर सृष्टिकर्त्ता के समक्ष उपस्थित होती है। ऐसे अनेक अवसरों के उल्लेख पुराणों में उपलब्ध हैं। जिनसे गौओं की सृष्टि नहीं थी जब उनकी महती आवश्यकता समझी गई तब ऋषियों ने ''आङ्गिरा'' ऋषि से गौ प्राप्ति के लिए अनुरोध किया। आङ्गिरा ने घोर तपस्या कर गौओं को प्राप्त किया।[१]

उत्पत्ति के बाद सृष्टिकर्त्ता ब्रह्मा ने गौओं को आशीर्वाद के साथ आदेश दिया कि ''हे धनवान गो समूह! अपने दोहन स्थान में एवं दोहन के बाद विचरण स्थान में सुखपूर्वक रमण करो। इस लोक के सभी क्षेत्रों में, अपने पालक के घर में तेज के साथ निवास करो ''अन्यत्र न जाओ।''[२]

वैदिक काल में यज्ञ प्रमुख कर्म थे। यज्ञों के प्रभाव से प्राकृतिक सन्तुलन बना रहता है तथा सुभिक्ष एवं सुवृष्टि से समाज सुखी और सम्पन्न रहता है। इन सभी यज्ञों में हवि गव्य से विशेष रूप से दूध और घृत से तैयार की जाती थी। गोमय के कण्डों पर अग्नि का आवाहन होता था तथा गोमय के उपलों पर ही 'पुरोडाश' पकाया जाता था। अन्य गव्य तथा गोमूत्र स्थान एवं शरीर शोधन हेतु प्रयोग होते थे। इस प्रकार यज्ञ में सभी गव्यों (दूध, दही, घृत, गोमय, गोमूत्र) का प्रयोग होता रहा है गौओं के रखने (बाँधने) के स्थान को गोष्ठ कहा जाता था। जिस क्षेत्र में गोचारण होता था उसे भी गोष्ठ ही कहा जाता था। जहाँ गायों का दोहन होता था उस स्थान को 'योनि' कहा जाता था।

गायों के रक्षक देवता का नाम 'पूषा' है। इन्हें 'अनष्ट पशु' भी कहा जाता है। 'पूषा' सूर्य के अनेक नामों में एक है। ऋग्वेद में इसका इस प्रकार उल्लेख है-''अनष्ट पशु पूषा लोकों में विचरण करने वाली गौओं (पशुओं) की रक्षा करें।''[३]

**गौओं की संज्ञा एवं वर्ण (रंग)** - प्रायः चार वर्ण (रंग) की गौओं का उल्लेख मिलता है। १. रोहित (लाल), २. शुक्र (सफेद), ३. पृश्नि (चित्रित या चितकबरी), ४. कृष्णा (काली)। गौओं को उनके वर्णों से भी माना जाता था। अर्थात् वर्ण ही उनके नाम भी हो जाते थे यथा - रोहित, शुक्र, कृष्णा आदि।

वर्ण के अतिरिक्त इनके वर्गीकरण का आधार इनकी विभिन्न अवस्थाएँ भी थीं। यथा-सफेद गाय की संज्ञा 'कर्कि', गर्भिणी गाय की 'गृष्टि', दूध देने वाली की 'धेना या धेनु', बन्ध्या (जो प्रजनन योग्य नहीं होती) को 'स्तरी' या 'धेनुष्टरी', (जिसे केवल एक ही बच्चा हो काकबन्ध्या अर्थात् एक सन्तान के बाद पुनः प्रजनन न हो) या 'सूतवत्सा' जिसका गर्भपात होता हो उसकी 'वेहत्' संज्ञा होती है। जिस गाय का बछड़ा जन्म लेकर

नष्ट हो जाय तथा बछड़े के अभाव में वह गाय दूध न देती हो किन्तु कृत्रिम बछड़े को भी देखकर दूध देती हो उसे 'वान्या या निवान्या' कहा जाता था। इस प्रकार प्रकृति के अनुसार सात वर्गों में गायों का वर्गीकरण किया गया है। इतना ही नहीं समूह में से विशिष्ट गायों की पहचान के लिए उनके शरीर पर कुछ चित्र अंकित किए जाते थे। उन्हीं चित्रों के नाम से उन गायों का भी नामकरण होता था। यथा-जिस गाय के शरीर पर वंशी का चिन्ह होता था उसे कर्करिण्य, संज्ञा दी जाती थी। जिसके शरीर पर हंसिया का चिन्ह हो उसे दात्र करिण्य, स्तम्भ का चिन्ह हो तो स्थूल करिण्य, तथा आठ अंक का चिन्ह हो तो उसे अष्टकरिण्य या अष्ट कर्णि कहा जाता था। अपनी-अपनी गायों की पहचान के लिए प्रायः सभी लोग उनके शरीर पर कोई न कोई चिह्न लगा देते थे। उन्हीं चिह्नों के नाम से गौओं को पुकारते भी थे।

कुछ इस प्रकार की संज्ञाओं का भी उल्लेख वेदों में मिलता है, जिनसे उनकी (गाय-बछड़ों की) आयु का ज्ञान होता है। यथा दुधमुँहे बच्चे को 'धरण' कहा जाता था। इसी प्रकार डेढ़ (१)) वर्ष की बछड़ी को 'त्र्यवि' तथा बछड़े को 'त्र्यैवी' कहा जाता था। इस प्रकार के नामों (संज्ञाओं) से बछड़ों की आयु का भी ज्ञान हो जाता था। आयुबोधक संज्ञाओं की सूची निम्नलिखित है-

| **आयु** | **गाय (बछड़ी)** | **बैल (बछड़ा)** |
|---|---|---|
| सद्यः जात (दुधमुँहा) | धरण | धरण |
| डेढ़ (१)) वर्ष | त्र्यवि | त्र्यैवि |
| २ वर्ष | दित्यौही | दित्यवाह |
| अढ़ाई (२)) वर्ष | पञ्चावी | पञ्चावी |
| ३ वर्ष | त्रिवत्सा | त्रिवत्स |
| साढ़े तीन (३)) वर्ष | तुर्यौही | तूर्यवाह |
| ४ वर्ष | प्रष्टौही | प्रष्ठवाह |
| युवा बैल को | - | ऋषभ, वृष |
| गाड़ी खींचने वाले बैल को | - | अनड्वान |
| बधिया बैल को | - | महानिरष्ट |

**गोदोहन** - दिन में तीन बार गोदोहन होता था। तीनों संध्या काल गोदोहन काल होता था। प्रातः कालीन दोहन को प्रातर्दोह, मध्याह्न काल के दोहन को संगव दोह तथा सायंकालीन दोहन को सायंदोह कहा जाता था।[४]

'संगव' दोह का शाब्दिक अर्थ मध्याह्न काल का सूचक नहीं है। अतः सम्भव है संगव काल में ही दोहन होता रहा हो। 'संगव' काल मध्याह्न और प्रातःकाल के बीच का काल होता था।

**सामाजिक मान्यता** – गाय को सम्पत्ति का मानक माना जाता था। इसलिए आज भी इसे 'गोधन' कहा जाता है। एक बार वामदेव ऋषि ने क्रोध में आकर पूछा कि वह कौन है जो मेरे इन्द्र को १० गायों में खरीदना चाहता है।[५] यह तो हजार या दस हजार गायों से भी नहीं खरीदा जा सकता। शतपथ ब्राह्मण भी गायों को सम्पत्ति का सूचक मानता है। दक्षिणा के रूप में द्रव्य के स्थान पर गायों को देने का निर्देश देता है।[६]

ऋग्वेद तो गायों को धन ही नहीं अपितु, सर्वस्व ही मानता है। कहा गया है-गाय ही सूर्य है, गाय ही इन्दु है गाय ही सर्वस्व है[७] इत्यादि। इस प्रकार गायों की महत्ता प्रतिपादित करते हुए गौ की प्रार्थना की गई है – "गायें मेरे आगे हों। मेरे पीछे हो, गाय ही मेरा हृदय हो। हम सदैव गायों के बीच में निवास करें।[८]

अभिप्राय यही कि हमारे लिए सभी प्रकार से उपयोगी, सम्पत्ति सूचक तथा गव्यों के कारण यज्ञ आदि में अत्यन्त उपयोगी गायें हमारे पास सदैव प्रभूत मात्रा में रहें।

प्राचीन काल में स्पष्ट मान्यता थी कि 'यज्ञ' लोक कल्याण हेतु अत्यन्त आवश्यक है। यज्ञ से ही बादल बनते हैं। बादलों से वृष्टि होती है तथा वृष्टि से ही अन्न उत्पन्न होते हैं।[९] आज भी विविध प्रयोगों द्वारा यज्ञ की सार्थकता सिद्ध हो रही है तथा अन्नोत्पादन में भी यज्ञ की अनुकूल भूमिका सिद्ध हो रही है।

**अन्न की आवश्यकता** – महर्षि पराशर ने लिखा है कि अन्न ही प्राण है अन्न ही बल है, अन्न ही सभी कार्यों का साधक है। न केवल मनुष्य ही अपितु देवता और असुर आदि सभी का जीवन अन्न पर ही आश्रित है।[१०]

कण्ठ में, कानों में तथा हाथों में यदि स्वर्ण आभूषण हों तो भी अन्न के अभाव में उपवास ही होगा।[११] इसलिए कृषक को कृषि हेतु सावधान तथा स्वयं समर्पित रहना चाहिए। कृषि पाराशर में कहा गया है कि–

**पितुरन्तः पुरं दद्यात् मातुर्दद्यान्महानसम्।**
**गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत्।। ३.२**

अर्थात् पिता को अन्तःपुर (गृह की) सुरक्षा में लगा दें, माता को रसोई (किचन) में लगा दें। अपने समान व्यक्ति को गौओं की देखभाल में लगा दे तथा कृषि के लिए स्वयं ही जाना चाहिए। अर्थात् कृषि को दूसरों के आश्रित नहीं करना चाहिये। और भी कहा है–

**गोहितः क्षेत्रगामी च कालज्ञो बीजतत्परः।**
**वितन्द्रः सर्वसस्याढ्यः कृषको नावसीदति।। कृ.पा. ३.५**

गौओं का हित चाहने वाला, प्रतिदिन अपने खेतों पर जाने वाला कृषिकर्म योग्य काल जानने वाला, बीज विशेषज्ञ कृषक कभी भी कष्ट नहीं पाता।

**गोशाला** : जिसकी गोशाला मजबूत गोबर से रहित सदैव साफ सुथरी होती है उसके गाय बैल बिना पौष्टिक आहार के भी सदैव स्वस्थ एवं प्रसन्न रहते हैं।[१२]

इस प्रकार गोशाला, गोमय कूट, खाद आदि का विस्तृत विवेचन किया गया है। उनके विस्तार में न जाते हुए अब गव्यों के विवेचन पर प्रकाश डालते हैं।

**गव्य** - गाय से प्राप्त होने वाले पदार्थों को गव्य कहते हैं। ये पाँच प्रकार के होते हैं।

१. गोमूत्र, २. गोमय, ३. गो दुग्ध, ४. दही, ५. घृत।

इनमें कुशोदक मिला देने से सुरक्षित एवं शुद्ध पञ्च गव्य हो जाता है। पञ्च गव्य में वरुण आदि देवों का निवास माना जाता है। इसलिए इसके पान से आत्मशुद्धि तथा भूमि पर छिड़कने से भूमि की शुद्धि होती है। इसके निर्माण की विधि शास्त्रों में निम्नक्रम से दी गई है -

| | | |
|---|---|---|
| गोमूत्र | = | १ पल |
| गोमय | = | अंगुष्ठ की मोटाई का आधा |
| दूध | = | ७ पल |
| दही | = | ३ पल |
| घृत | = | १ पल |
| कुशोदक | = | १ पल |

**पलमात्रं तु गोमूत्रं अंगुष्ठार्ध तु गोमयम्।**
**क्षीरं सप्तपलं ग्राह्यम् दधि त्रिपलमीरितम्।।**
**सर्पिस्त्वेकपलं देयमुदकं पलमात्रकम्।।**

**पञ्चामृत** - गाय का दूध, दधि, घृत, मधु और शर्करा। इनके मिश्रण को पञ्चामृत कहा गया है। पञ्चगव्य और पञ्चामृत दोनों ही आत्मशुद्धि के पदार्थ होने के साथ-साथ यज्ञीय प्रमुख पदार्थ भी हैं। गाय के दूध में बने पुरोडास को दूध, दही और घृत से युक्त कर देने पर 'सान्नाय' नामक हविष्य बनता है। इसी हविष्य से दर्श और पौर्णमास यज्ञों में आहुतियाँ दी जाती हैं।

पञ्चगव्य और पञ्चामृत के स्नान करने तथा इनका पान करने से बाह्य-आन्तरिक और आध्यात्मिक शुद्धि के साथ-साथ शारीरिक बल एवं सौन्दर्य की वृद्धि होती है।

## पञ्चगव्यों का उपयोग

१. घृत - दीर्घायु की कामना से अग्नि में घृत की लक्षसंख्यक आहुति दी जाती है।[१४]

२. घृत के सेवन से बल और ओज की वृद्धि होती है। साथ ही साथ व्रण आदि के उपचार में भी घी का प्रयोग होता है। अन्धक-शिव युद्ध में अन्धक क्षत-विक्षत हो जाने पर शिव का रूप धारण कर पार्वती के पास जाता है। उसे देख पार्वती ने अपनी दासियों से कहा- पुराना घी, बीजिका, लवण और दही लाओ मैं स्वयं शिव के व्रणों का उपचार करूँगी।[१५]

## घृत की परिभाषा और लक्षण -

'पक्वनवनीतं घृतम्' अर्थात् पके हुए मक्खन को घृत (घी) कहते हैं। घृत स्वाद में मधुर होता है। यह बुद्धि, शुक्र, ओज, स्मृति और कफ को बढ़ाने वाला तथा वात-पित्त-विष, उन्माद, शोथ और दारिद्र्य को दूर करने वाला है।[१६]

**पुराने घृत का लक्षण** - दस वर्ष पुराना घृत उग्रगन्ध युक्त तथा लाक्षारस के समान होता है। इसे पुराण घृत कहते हैं। दस वर्ष से अधिक पुराना होने पर उसे 'प्रपुराण घृत' कहते हैं।

कांस्य पात्र में दस दिन भी रखा हुआ घृत विषाक्त हो जाता है। अतः वह त्याज्य होता है।

**नवनीत** - नवनीत दो प्रकार का होता है। १. दही से तत्काल निकाला हुआ नवनीत (मक्खन), २. दुग्ध से निकाला हुआ नवनीत। इन दोनों के गुणधर्मों में भी सामान्य अन्तर है। दही से उत्पन्न नवनीत बालक और वृद्धों के लिए प्रशस्त है। यह बलवर्द्धक होता है।[१७]

दुग्ध से उत्पन्न नवनीत नेत्र ज्योति को बढ़ाने वाला तथा रक्त दोष और पित्त दोष को नष्ट करने वाला होता है।[१८]

**दधि** - "क्षीरोत्तरावस्थाभावः दधिः" अर्थात् दुग्ध की अन्तिम अवस्था का अभाव हो जाना दधि कहलाता है। अर्थात् जब दुग्ध का स्वरूप पूर्णरूपेण बदल जाता है उसे दधि कहते हैं। यह वात वृद्धि करने वाला तथा पिपासा को शान्त करने वाला होता है।

रात्रि में दधि सेवन का निषेध किया गया है।[१९] यदि खाना ही हो तो उसमें शर्करा, मधु, मूँग तथा आँवला मिलाकर खाना चाहिए।

**तक्र** - तक्र (मट्ठा) तीन प्रकार का होता है।[२०]

१. दधि का घोल जिससे सम्पूर्ण घृत निकाल लिया गया हो।
२. दधि का घोल जिससे आधा घृत निकाल लिया गया हो।
३. दधि का घोल जिससे घृत न निकाला गया हो।

अन्य मत से तक्र (मट्ठा) पाँच प्रकार का होता है। १. घोल, २. मथित, ३. तक्र, ४. उद्स्वित तथा ५. छच्छिका।[२१] इनके लक्षण क्रमशः इस प्रकार हैं।

१. **घोल** - जल रहित दधि का घोल।
२. **मथित** - दधि का अच्छी तरह 'मथ' कर तैयार किया गया जल।
३. **तक्र** - दधि और उसकी मात्रा का १/४ जल।
४. **उद्स्वित्** - आधा दधि + आधा जल मिलाकर मन्थन द्वारा तैयार घोल।
५. **छच्छिका** - दधि की मात्रा से अधिक जल डाल कर मन्थन किया गया घृत रहित घोल।

**दुग्ध (क्षीर)** – दुग्ध को सम्पूर्ण भोजन माना जाता है। क्योंकि इसमें शरीर पोषक लगभग सभी तत्त्व पाए जाते हैं। दुग्धपान से आयु की वृद्धि होती है। इसीलिए जन्म दिन पर बच्चे को दुग्ध, गुड़ और तिल पिलाया जाता है।[२२] साथ ही क्षीर से बना हुआ भोज्य पदार्थ पायस (खीर) का हवन करने[२३] तथा इसका सेवन करने से बल–ओज और नैरूज्य की प्राप्ति होती है।[२४]

**क्षीर के भेद** – दूध (क्षीर) दो प्रकार का होता है। १. पेयूष, २. मोरट।

प्रसव काल से सात दिनों तक का दूध 'पेयूष' कहा जाता है। सात दिनों के बाद का दूध 'मोरट' कहलाता है।[२४]

**गोमूत्र** – शरीर की आभ्यन्तर एवं बाह्य शुद्धि करने वाला द्रव्य है किन्तु आयुर्वेद में इसके अन्य गुणों का उल्लेख करते हुए इसे औषधि के रूप में वर्णित किया है। इसके गुण–धर्म का विवेचन करते हुए लिखा है –

**गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम्।**
**लघ्वग्नि दीपनं मे यं पित्तलं कफ वातजित्।।**
**शूलगुल्मोदरानाह विरेका स्थापनादिषु।**
**मूत्रप्रयोगसा येषु गव्यं मूलं प्रयोजयेत्।।**

यह मूत्र के गुण और लक्षण को बताते हुए यह निर्देश दिया गया है कि जब भी मूत्र चिकित्सा देनी हो तो केवल गोमूत्र का ही प्रयोग करें।

**गोमय** – यज्ञाग्नि का आधार 'कण्डिका' के रूप में प्रयोग में आता है। कण्डिका भस्म आरोग्य कारक तथा कृमिनाशक कहा गया है। इसीलिए गोमय का प्रयोग पञ्चगव्य में शरीर शोधन हेतु भी किया जाता है। गौ और गौ से प्राप्त गव्यों का विचार करने से यह सिद्ध होता है कि गौ पालन और गौ सेवा निश्चय ही मानव मात्र के कल्याण के लिए है। अष्टाङ्ग हृदय की यह उक्ति "अन्नं गव्यं तु जीवनीयं रसायनम्" सर्वथा सत्य है। पुराणों में अनेक कथाएँ हैं जो गौ सेवा के महत्त्व को प्रतिपादित करती हैं। राजा दिलीप की गो सेवा सर्वविदित ही है। आज भी गो सेवा दुःख-दारिद्र्य और व्याधियों से छुटकारा दिलाकर मनुष्य को दीर्घायुष्य प्रदान करने में सक्षम है।

## संदर्भ–सङ्केत

१. "या आङ्गिरसस्तपसेह चक्रुस्ताभ्यः महि शर्म यच्छ" ऋग्वेद १०/१६२/२
२. "रेवती रमध्वमस्मिन् योनावस्मिन् गोष्ठेऽस्मिल्लोकेऽस्मिन् क्षये। इहैव स्त मापगाते।" सु.म.स. ३.२१
३. "पूषा त्वेतश्चाव्यतु प्रविद्वानवनष्टपशुर्भुवनस्य गोपाः।" १०/६६/३
४. तै. सं. ७/५/३/६
५. क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः। ४/२४/१०

६. महेचन त्वामद्रिवः परा शुल्काय देयम्। न सहसाय नाप्रताय वाजिनो न शताय शतामथ।। श.ब्रा.
७. अ.वे. ६/२८/५
८. गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः गावो मे हृदयः सन्तु, गवां मध्ये वसाम्यहम्।
६. यज्ञाद् भवति पर्जन्यः पर्जन्यादन्नसम्भवः।
१०. अन्नं प्राणा बलं चान्नं अन्नं सर्वार्थसाधनम्।
देवासुरमनुष्याश्च सर्वे चान्नोपजीविनः।। कृ.पा. १.६
११. कण्ठे कर्णे च हस्ते च सुवर्णं विद्यते यदि।
उपवासस्तथापि स्यादन्नाभेवन देहिनाम्।। १.५
१२. द्र. कृषि पाराशर ३.०
१३. गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदनम्। निर्दिष्टं पञ्चगव्यं तु पवित्रं मुनिपुङ्गवैः।।
१४. आयुः कामो घृतेनाग्नौ जुहुयाल्लक्ष संख्या।
१५. घृतमानय पौराणं बीजिका लवणं दधि।
व्रणभङ्गं करिष्यामि स्वयमेव पिनाकिनः।। वामन पुराण
१६. बुध्यग्नि शुक्रौजो मेदः स्मृतिकफकारित्वम्।
वातपित्तविषोन्मादरोगशोथालक्ष्मीज्वरनाशित्वम्।।
१७. बालवृद्धानां प्रशस्तत्वम्, बल कारित्वम्।
१८. दुग्धोत्थं नवनीतं तु चाक्षुष्यं रक्तपित्तनुत्।
१६. रात्रौ दधि न भुञ्जीत।
२०. समुद्धृतघृतं तक्रं अर्धोद्धृतघृतं तथा।
अनुद्धृतघृतं चान्यत् इत्येतत् त्रिविधं मतम्।।
२१. ससरं निर्जलं घोलं मथितं त्वसरोदकम्।
तक्रं पादजलं प्रोक्तं उदस्वित् अर्धवारिकम्।।
छाच्छिका सरहीनं स्यात् अच्छा प्रचुरवारिकम्।।
२२. सतिलं गुडसम्मिश्रं अञ्जल्यर्धमितं पयः।
मार्कण्डेयाद् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये।।
२३. स्वजन्म दिवसे मस्तु पायसैर्मधुरान्वितैः।
जुहोति तस्य वर्धन्ते कमलारोग्यकीर्तयः।।
२४. अमृतं शिशिरे वह्निः अमृतं क्षीरभोजनम्।
२५. आसप्तरात्रं प्रसवात् क्षीरं पेयषमूह्यते।
परतो मोरटं विद्याद् अप्रसन्नं कफात्मकम्।।

■ पता : ३८, मानस नगर, वाराणसी-५

# प्रयोगिक अद्वैतवेदान्तः

■ के.वी. सुब्बारायुडु

**शीर्षकः**–अद्वैतवेदान्तस्य प्रायोगिकता। प्रथमम् आदिशङ्कराचार्यस्य विषये किञ्चित् वक्तुमिच्छामि। मात्रापित्रोः भक्तिप्रभावेन क्षेत्राधिष्ठातृदेवता श्रीवटुकनाथ-भगवान् शङ्कर एव आदिशङ्कराचार्यरूपेण अवतरितः। अन्यथा साधारण मनुष्यस्य जीवनवृत्तम् एकस्मिन् श्लोके-यदुक्तमस्ति आचार्यशङ्करस्य जीवनविषये तदसम्भवमेव। तथा च–

**अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।**
**षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्।।**

द्वात्रिंशति अल्पे वयसि पद्भ्यामासेतुहिमाचलं गत्वा तदानींतन भेदवादिमतं, नास्तिकवादिमतं च प्रमाणपूर्वकं सुतर्केण, सर्वानुभवगम्यमार्गेण निरस्य अद्वैतवेदान्तमतं सुस्थापितम्। तेन समानता एकता च सम्पादिता। शङ्कराचार्यस्य अद्वैत-वेदान्तः एकतासम्पादने संरक्षणे च महत्त्वपूर्णभूमिकां निर्वहति। स्वामिविवेकानन्देन आचार्यशङ्करभगवत्पादप्रतिपादिताद्वैतवेदान्तमाश्रित्यैव विश्वधर्मसम्मेलने अमेरिकादेशे भारतदेशस्य वसुधैवकुटुम्बकभावनामुद्घोषितवान्। आचार्यशङ्करस्य व्यक्तित्वविषये किमधिकं वक्तव्यम्। तादृशः पुरुषविशेषः, न भूतो न भविष्यति।

वेदो नाम शाश्वतानन्तज्ञानराशिः। तज्ज्ञानं प्राणिनां लौकिकपारलौकिकपारमार्थिकाभ्युदयनिश्रेयसे विषयीकरोति। अस्य वेदस्य महत्वविषये आदिशङ्कराचार्यः "शास्त्रयोनित्वात्" इत्यस्मिन् ब्रह्मसूत्रभाष्ये वदति- अचिन्त्यरचनारूपस्य इत्यादि।

स वेदः संहिताभागः, ब्राह्मणभागः, आरण्यकभागः, उपनिषत् (वेदान्त) भागश्चेति आश्रमचतुष्टयनिर्वहणार्थं विभजितोऽस्ति। किन्तु विषयदृष्ट्या स्थूलरूपेण काण्डत्रयात्मको वेदः इत्यपि प्रसिद्धिरस्ति- (१) कर्मकाण्डः, (२) उपासनाकाण्डः, (३) ज्ञानकाण्डश्चेति। एवं काण्डत्रयात्मको वेद इति कथनेऽपि रहस्यमस्ति। तथाहि- प्राणिनामन्तः करणे दोषत्रयमस्ति। मलः, विक्षेपः आवरणश्चेति। तत्र मलो नाम- जन्मजन्मान्तरेषु सम्पादितपापविशेषः। अत्र शङ्करदृष्ट्या ब्रह्मज्ञानदृष्ट्या च पुण्यमपि पापविशेष एव पुनः जन्महेतुत्वात्। यतोहि- कदाचित् मानवस्य पुण्ये प्रवृत्तिः कदाचित् पापे प्रवृत्तिः दृश्यते। विक्षेपो नाम- चञ्चलता, अन्तः करणस्य स्थिरत्वाभावहेतुः। एकस्मिन् विषये मनसः स्थिरत्वं नास्ति। गीतायाम् अर्जुनेन कृष्णं प्रति उक्तम्- "चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्" इति। अस्माभिः ध्यानं क्रियते चेत् मनसः चञ्चलत्वं ज्ञातुं शक्यते। अयं विक्षेपदोषोऽपि सर्वेषामस्ति।

आवरणो नाम-आच्छादनम्-प्रतिबन्धकम्। यथा-अन्धकारेणाच्छादितो घटः पुरतः सत्येऽपि द्रष्टुं न शक्यते। एवमेव सर्वव्यापकं ब्रह्म आत्मरूपेण सर्वेषां शरीरेषु उपलभ्यमानोऽपि अहमहमित्यनुभूयमानोऽपि "आत्म च ब्रह्म", "तत्सृष्ट्वा तदेवानुप्राविशत्", "तत्त्वमसि" इति पौनः पुण्येन श्रुत्या गुरुभिश्च प्रतिपाद्यमानोऽपि न स्मर्यते। कारणमत्र आवरणदोष एव। अज्ञानस्य एकः शक्तिविशेषः। अस्यैव अज्ञानस्य अन्यः शक्तिविशेषः,

विक्षेपशक्तिनामकोऽस्ति। यदा आवरण शक्तिः वस्तुनो यथार्थज्ञानप्रतिबन्धिका भवति तदा विक्षेशक्तिः वस्त्वन्तरं कल्पयति। यथा शुक्तेरज्ञानस्य आवरणशक्तिः शुक्तिज्ञानमावृणोति प्रतिबन्धिका च भवति। तदा शुक्त्यज्ञानस्य विक्षेपशक्तिः शुक्तौ चाकचिक्यादिसादृश्यसमुद्भूतरजतसंस्कारसहाय्येन रजतकल्पनां करोति तदा इदं रजतमिति भवति। ब्रह्मणोऽज्ञानस्यावरणशक्तिः, ब्रह्म नास्ति न भाति इति बुद्धिं जनयति, ब्रह्मज्ञानमावृणोति, तदा विक्षेपशक्तिः, ब्रह्मणि नामरूपात्मकजगतः कल्पनां करोति। तेन स्वात्मानं जीव इति, अल्पज्ञ इति परिच्छिन्न इति च वदति। अत एव-गीतायामुच्यते "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति।

इत्थं सर्वेषु मनुष्येषु मलविक्षेपावरणाख्या दोषाः सन्ति। तेषां निर्मूलनाय एव वेदे कर्मकाण्डः, उपासनाकाण्डः ज्ञानकाण्डश्चेति काण्डत्रयमुक्तमस्ति।

इदं रहस्यमज्ञात्वा केचित् वेदतात्पर्यानभिज्ञाः द्वैतवादिनः याज्ञिकाः यज्ञादिकर्मण्येव केवलं रताः सन्ति। केचित् विशिष्टाद्वैतवादिनः केवलं भगवदुपासनायामेव रताः सन्ति। एतान् प्रति ईशावास्योपनिषत् वदति-

**"अन्धं तमः प्रविशन्ति येऽविद्यायां रताः।**
**ततो भूय इवते तमो य ३ विद्यायां रताः।।**

केवलमेकैकानुष्ठानं निन्दयित्वा उभयोः एकेनानुष्ठानेन प्रयोजनमस्तीति उक्तम्।

**"विद्या चाविद्यां च यस्तद्वेदोभयं सः।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।।" इति।**

अत्र अविद्या शब्देन वेदोक्त यज्ञादिकर्म, मृत्युशब्देन निषिद्धकर्म च उक्तम्। विद्या शब्देन उपासना उक्ता न तु ब्रह्मविद्या। ज्ञानकर्मणोः समुच्चयः कदापि न भवति परस्परविरोधात्। तेषां विरोधः पर्वतवदकम्प्यः इति शङ्कराचार्य उक्तवान् भाष्ये। अमृतशब्देन प्रकृतिलयादिसापेक्षामृतत्वप्राप्तिरेव न तु कैवल्यप्राप्तिः। कैवल्यप्राप्तिः ज्ञानादेव भवति।" ज्ञानादेव तु कैवल्यम्" इति श्रुतेः।

अतः आदिशङ्कराचार्येण पदवाक्यप्रमाणज्ञानेन अद्वैतवेदान्तप्रचारकेन वेदबोधितकाण्ड त्रयस्य मनुष्यमात्रं प्रति क्रमेणावश्यकमिति च अद्वैतवेदान्तसिद्धान्ते उक्तमस्ति। तथा हि- प्रथमभागस्य कर्मकाण्डस्य निष्कामभावेन फलाकांक्षारहितेन मुमुक्षुः अनुष्ठानं करोति चेत् मलदोषनिर्मूलनं भवति। गीतायामुक्तम्- "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। निष्कामकर्मानुष्ठानेन बुद्धिः शुद्धा भवति। उक्तमाचार्यैः- "तपो यज्ञदानादिभिः शुद्धबुद्धिः", "कर्माणिचित्तशुद्धयर्थम्" इति च।

द्वितीयभागेन उपासनाकाण्डेन विक्षेपदोषो दूरीक्रियते। यतो हि "कर्मणा जायते भक्तिः" इति शङ्कराचार्यैरुक्तम्। शुद्धान्तःकरणे भक्तिः प्रादुर्भवति। भगवद्भक्त्या भगवदुपासना क्रियते चेत् चित्तैकाग्रता लभ्यते। अत एवोक्तमाचार्यशङ्करेण- "ऐकाग्र्यार्थमुपासना" इति। गीतायामपि "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति। भगवदनुग्रहरूपसिद्धिं प्राप्नोति। भगवदनुग्रहं विना अद्वैतवासना नोदेति। दर्पणं शुद्धमस्ति किन्तु चञ्चलमस्ति चेत् तस्मिन् दर्पणे मुखप्रतिबिम्बं द्रष्टुं न शक्यते। अतः विक्षेपरहितमन्तःकरणमावश्यकम्। तस्मिन् शुद्धस्थिरान्तःकरणे स्वात्मदर्शनं कर्तुं शक्यते। अन्यथा न। अतः भगवद्भक्त्या क्रियमाणया भवदुपासनया चित्तैकाग्रता लभ्यते। तस्मिन् चित्ते अद्वैतवासना जागर्ति। उक्तं दत्तात्रेयेण-ईशानुग्रहादेव पुंसामद्वैतवासना" इति।

ततः वेदस्य तृतीयभागेन ज्ञानकाण्डेन आवरणदोषो निराक्रियते। आवरणदोषसत्त्वे आत्मसाक्षात्कारं कर्तुं न शक्यते। दर्पणं शुद्धमस्ति निश्चलमस्ति। तथापि तस्य, दर्पणस्योपरि आवरणमस्ति चेत् कदापि मुखप्रतिबिम्बदर्शनं न भवति। तद्वदन्तः- करणं शुद्धम् अस्ति स्थिरमस्ति। किन्तु अज्ञानावरणमस्ति चेत् आत्मसाक्षात्कारो न भविष्यति। अपिच विपरीतभावना चोदेति। रज्जुः मन्दान्धकारेण आवृत स्यात् तत्र भुजंगविषयक विपरीतभावना जायते। अतः अज्ञानावरणनाशः कर्तव्यः। अज्ञाननाशो ज्ञानेन भवति। उक्तं च गीतायाम्-

**"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।**
**तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम्।। इति।**

ज्ञानस्य लक्षणमाचार्यशङ्करेणोक्तम्- "अभेददर्शनं ज्ञानम्" इति। यथा एक एव कर्णः अज्ञानात् स्वात्मानं राधेयोऽहमिति चिन्तयति। स एव कर्णः यदा कुन्त्या कृष्णेन च "हे कर्ण भवान् न राधेयः किन्तु भवान् कौन्तेयः पाण्डवाग्रजः" इति सर्वमुपदिशति तस्येतिहासं, तदा कर्णः झटिति तस्मिन् समये एव नाहं राधेयः किन्तु कौन्तेय इति स्वात्मानं जानाति। एवमेव ब्रह्म अज्ञानात् एकमेव चैतन्यम् अज्ञानोपाधिवशेन जीवः इति अल्पज्ञोऽहमिति च अनुभवति। यदा तत्त्वमस्यादि महावाक्यैः जनितजीवब्रह्मैक्यज्ञानेन भेदजनकाज्ञानोपाधिनाशे सति "अहं ब्रह्मास्मीति" जीवन्नेव ब्रह्मसाक्षात्कारं करोति। ब्रह्मवित् ब्रह्मैव भवति। अतएवं गीतायामुक्तम्- गीताश्रवणसमाप्त्यनन्तरम् अर्जुनः वदति "नष्टो मोहः स्मृतिर्लब्धा" इति।

जीवेश्वरभेदः सोपाधिकः। सर्वेषां मनुष्यानामद्वितीयब्रह्मणि निष्ठा न भवितुमर्हति। निर्गुणनिराकारोपासना च कर्तुं न शक्यते। अतः तादृशानधिकारिणां मन्दानां हितायैव सगुणसाकारादिरूपकल्पना महर्षिभिः कृता। उक्तं सुरेश्वराचार्यैः-

**"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीयश्वराः।**
**ये मन्दाः तेऽनुकम्प्यन्ते सविशेषनिरूपणैः।।" इति।**

अद्वैतवेदान्तः अद्वैतभाषया वक्तुं न शक्यते। उक्तं चैकत्र-

**"चोद्यं वा परिहारो वा क्रियते द्वैतभाषया।**
**न चोद्यं न परिहारः क्रियतेऽद्वैतभाषया।।" इति।**

अतः अद्वैतं द्वैतशब्दघटितमस्ति। द्वैतनिषेधपूर्वकमेवाद्वैतसिद्धिः क्रियते। अभावज्ञानं प्रति प्रतियोगिज्ञानं कारणम् इति नियमानुसारं द्वैतनिषेधाय द्वैप्रतिपादनं द्वैतज्ञानं चावश्यकमस्ति। अद्वैतसिद्धौ मधुसुदन सरस्वती वदति "अद्वैतसिद्धेः द्वैतमिथ्यात्वपूर्वकत्वात् प्रथमं द्वैतमिथ्यात्वमुपपादनीयमिति। एवमद्वैतवेदान्तसिद्धान्ते- "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चते।" इत्युच्यते। अध्यारोपं प्रथमं भवति। आरोपसामग्रिः अज्ञानमेवास्ति। अज्ञानमिति प्रकृतिरिति पर्यायवाचकशब्दाः। तत्रापि सत्त्वप्रधानप्रकृतिः माया रजः प्रधान प्रकृतिः अविद्या इति उपाधिद्वयं कल्पयित्वा जीवेश्वरयोभेदं साधयन्ति। तमः प्रधानप्रकृत्या नामरूपात्मकजडजगत् कल्पितम्। एवं मायाविद्याभ्यां जीवत्वमीश्वरत्वं च एकस्मिन् चैतन्ये कल्पितम्। न तु सत्यमस्ति। अतः आचार्यः वदति-

**"बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्।**
**जीवत्वमीश्वरत्वं च तथा ब्रह्मणि कल्पितम्।।" इति।**

या मा सा माया। इति व्युत्पत्या इयं माया न सत् नासत् किन्तु सदसद्विलक्षणा अस्ति। अतः मिथ्या। तस्य कार्यं जगदपि मिथ्या एव। मिथ्या नाम सदसद्विलक्षणम्। ब्रह्मवत् पारमार्थिक कालत्रये सत्, माया न भवति, जगदपि न भवति। मरुजलवत् माया जगत् च अत्यन्तासदपि न भवति। सदसद्विलक्षणं भवति। सदसद्विलक्षणत्वं मिथ्यात्वमिति पञ्चपादिकाकारेण पद्मपादाचार्येणोक्तम्। विवरणकारेण प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्युक्तम्। अस्यायमर्थः- यत् कार्यं यस्मिन् कारणे अधिकरणे वा अस्तीति प्रतीयते तत् कार्यं तस्मिन् कारणे एव कालत्रयेऽपि नास्तीति विचार्यमाणे ज्ञायते तत् मिथ्या इत्युच्यते। यथा तन्तुषु वस्त्रमस्तीति सर्वेषां प्राकृतजनानामनुभावोऽस्ति। किन्तु अद्वैताचार्याणामनुसारं तत्र तन्तुषु वस्त्रं नास्त्येव। तन्तूनां पृथक्करणे सति तत्र वस्त्रं तन्तुभ्यः पृथक् न सिध्यति। अतः वस्त्रं कल्पितं मिथ्या। केवलं वाचारम्भणमेव वस्त्रमिति। ''वाचराम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्''। यत् यत्र कल्प्यते तस्य पृथक् सत्ता नास्ति। अतः शङ्कराचार्यो वदति। ''नाधिष्टानादि्भन्नत् आरोपितस्य'' इति। भ्रमो अधिष्ठानं विना न भवति। ब्रह्मणि यत् कल्पितं जगत् तत् ब्रह्मैव नातिरिक्तमस्ति। अतः कल्पितवस्तुनाशः अधिष्ठानावशेष एव। शङ्करो वदति ''अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः'' इति।

इत्थम् आचार्यशङ्करस्य अद्वैतवेदान्तः अनुभव सिद्धः न केवलं शास्त्रगम्यम्, प्रत्यक्षगम्यं युक्तियुक्तं च श्लोकेनैकेन शङ्कराचार्यः सर्वशास्त्रसिद्धान्तसारः उक्तः-

**''श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।**
**ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।।'' इति।**

जगद्गुरु शङ्कराचार्यः स्वाद्वैतसिद्धान्तम् प्रपञ्चात् प्राप्तवान्।'' जगदेव गुरुः यस्स जगद्गुरुः न तु जगतो गुरुः जगद्गुरुः'' इति विग्रहः। यतोहि दृश्यमानं जगत् आचार्यमुपदिशतिस्म-गच्छतीति जगत् नित्यं गमनशीलं, परिवर्तनशीलं दृष्टनष्टस्वभाववत् जगत् स्वयमनित्यं सत् नित्यं, निश्चलं, कूटस्थम् अविनाशि गमनाधारं ब्रह्म उपदिशति। अतः बुद्धिमतां सूक्ष्मग्राहिनां संसारसारग्राहिनां च जगदेव गुरुः। निरहंकारिणामहमर्थं बोधयति। अहं स्थूलः इति वदति कदाचित् मम शरीरं स्थूलमिति वदति। मम वस्त्रमिति कथने वस्त्रातिरिक्तः सः न तु वस्त्रमेव सः। तद्वत् मम शरीरमिन्द्रियाणि मनो बुद्धि, इत्यादिकथनमपि तेषामतिरिक्तमात्मानं बोधयति। स तु आत्मा एकः उच्यते- ''एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा इति। एकसंख्या नित्या। द्वित्वादिसंख्या अनित्या। इति तार्किकादिभिरप्यङ्गीक्रियते। किमर्थम्। एकम् एकम् इति द्वे- एक संख्यायां द्वित्यादिसंख्या कल्पिता अतः मिथ्या। द्वित्वादिसंख्यायाम् एकत्वं यद् दृश्यते तत् सत+यमेव। एकत्वं नास्ति चेत् द्वित्वादि संख्या एव न जायते। अतः अद्वैते यद्दैतं दृश्यते तत्कल्पितम् मिथ्या। द्वैते जगति यत् अद्वैतम् अहमहमिति सर्वेषु भूतेषु भाषासु देशेषु यदनुभूयते तत् सत्यमेव। यः सर्वान् जानाति, तस्य ज्ञाता नास्ति। यतोहि दृश्यं द्रष्टा कदापि न भवति यः द्रष्टा सः दृश्यं कदापि न भवति। इदमाचार्यस्य अद्वैतवेदान्तस्य गोपनीय सर्वानुभवगम्यप्रायोगिकसिद्धान्तोऽस्ति।

**''श्रुतिस्मृतिपुराणानामालयं करुणालयम्।**
**नमामि भगवत्पादं शङ्करं लोकशङ्करम्।।''**

इति सद्गुरुपरब्रह्मार्पणमस्तु।

■ पता : प्राचार्य राष्ट्रिय संस्कृत संस्थान एकलव्य परिसर, अगरतल्ला (त्रिपुरा)

# प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ३/३/४६
# अत्र बालमनोरमाकारा इत्थं व्याचक्षते

सुरेन्द्र पाठक

मात्रशब्दोऽत्रावधारणार्थः, मयूरव्यंसकादित्वात् नित्यसमासः। नियतलिङ्गस्योदाहरणम्-कृष्णः, श्रीः, ज्ञानम्। परिणाममात्रस्योदाहरणं द्रोण इति। ननु अत्र प्रतिपादिकार्थमात्रे प्रथमा स्यादिति चेत्, तन्न, तथा सति नामार्थयोरभेद एव संसर्गः इति व्युत्पत्त्या द्रोणाभिन्नो व्रीहिरिति बोधः स्यात्। न च अपप्रत्ययार्थबहुव्रीहौ इयं व्युत्पत्तिर्व्यभिचरितेति वाच्यम्, एकार्थीभावस्वीकारेणादोषात्।

वस्तुतस्तु अत्रार्थे लिङ्गे च प्रथमा एतावन्मात्रं सूत्रं कर्तव्यम्। तथाहि यस्मात् स्वादिविधिस्तस्यार्थे प्रथमा भविष्यति। तदर्थत्वञ्चनियतोपस्थितिकत्वमेव। एवञ्च मृडानी, हिमानीत्यादौ पुंयोगमहत्वादेरपि ङ्यन्तात् नियतोपस्थितिकतया प्रथमा सेत्स्यति। यदि तु अर्थशब्दो व्यक्तिविषयपरः स्वार्थो द्रव्यं लिङ्गञ्चेति त्रिकं प्रतिपादिकार्थ इत्यभ्युपेयते तदा लिङ्ग्रहणमपि न कार्यम्। अर्थे प्रथमा इत्येव निष्कृष्टं सूत्रस्वरूपं स्यात् द्रोणो वीहिरित्यादौ अपि द्रोणशब्दस्य तत्परिमिते लक्षणयेष्टसिद्धिः स्यात्। एकः द्वौ इत्याद्यपि अनुवादकविभक्त्यन्तप्रयोगेण सुसाधनम्। एवं सम्बोधने च इति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रसक्त्या मात्रग्रहणमपि न कार्यम्।

यत्तु प्राञ्चः प्रतिपादिकार्थः सत्तेति न्यासं चक्रुः यच्च तद्व्याख्यातृभिरुक्तं योर्थः सन्नेव केवलं भासते न जात्यादिरूपः इत्यादि तत्सर्वमुपेक्षास्पदम्। उच्चैः, नीच्चैः, इत्यादिशब्दानां सन्नित्याकारकप्रतीतिजनकत्वस्य सर्वतन्त्रविरूद्धत्वात्। यच्च पुनरपि प्राचा व्याख्यातं, यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिर्भवति स सर्वः प्रातिपदिकार्थः। यथा- उच्चैः नीचैरिति तदपि न स्पृहणीयम्। यतः प्रवृत्तिनिमित्तमात्रविषयको बोधो न सम्भवति, अनुभवविरोधात् यदपि च द्रोण परिमिति विध्यादौ द्रोणशब्दः सोऽयमिति अभिसम्बन्धात् यद्यपि च प्रवृत्तो भवति तत्र गौणमुख्यन्यायात् प्रथमाया प्राप्तौ परिमाणग्रहणं कृतमिति तदपि न युक्ततरं प्रतिभाति। पदकार्येष्वेवास्यन्यायस्यप्रवृत्तिरिति सिद्धान्तादिति।

## अत्र शेखरकृतमिदं व्याख्यानम्

प्रथमाविधायकमेतच्छास्त्रं क्रियायोगे एव प्रवर्तते। अस्ति क्रियायाः सर्वत्र सत्वात्। तिङ्र्थकर्त्रादिना अभेदान्वयेन तद्वारकः क्रिया योगो बोध्यः। अत एव अस्याः कारकविभक्तित्वेन व्यवहारः भाष्ये दृश्यते। लिङ्ग्रहणसामर्थ्यात् अत्र प्रातिपदिकार्थपदेन नियतोपस्थितिक एवार्थः गृहीतः। शक्यार्थमादायैव प्रथमाप्रवृत्तौ न लक्षणास्थलेदोषः। तटादिशब्दानाम् अनियतलिङ्गत्वात् तदर्थलिङ्गग्रहणम्। द्रोणो व्रीहिरित्यत्र प्रत्ययार्थे परिमाणे इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यतासंसर्गेण प्रकृत्यर्थस्य विशेषणता उक्तार्थानाम् अप्रयोगात् प्रातिपदिक प्रतिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च प्रथमाया प्राप्तौ वचनग्रहणं कृतम्। परिमाणशब्दश्च परिच्छेदकपर इत्येवं प्राचीनमतं व्याख्याय स्वमतं व्याख्यातुम् उपक्रमते, परे तु इत्यादिना।

अयमाशयः-अत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमितं तदाश्रयश्च ग्राह्यम्। स च मुख्य इवारोपितः तदाश्रयोऽपि अत्र लिङ्गग्रहणमेव मानम्। अन्यथा स्वमोर्नपुसंकात् इत्यादिशास्त्रप्रामाण्यात् लिङ्गस्यापि प्रातिपदिकार्थतया

तद्वैयर्थ्यं स्फुटं स्यात्। नन्वेवम् अनभिहिते प्रथमा इति वार्तिकनये अभिहितकारकस्य प्रथमार्थत्वम् ईदृशरीत्या सूत्रं व्याचक्षाणानां भवतां मते तन्मतेऽपि विरोध उपतिष्ठते इति चेत् न, शङ्कनीयम्।

तत्तत्प्रातिपदिकार्थनिष्ठकारकशक्तौ तिङादिभिरभिहितायां स्वार्थे प्रातिपदिकात् प्रथमेति वार्तिकार्थस्वीकारेणादोषात्। तटादिशब्दानामपि लिङ्गं वाच्यमेवर्विसर्गादयस्तु द्योतकाः। नियमांश निवेशे तु न मानम्, अत एव वृत्तिग्रन्थे प्रातिपदिकार्थः सत्तेति व्याख्यातम्। सत्तेति तु प्रवृत्तिनिमित्तोपलक्षणम्। आश्रयस्तु तदाक्षिप्तत्वात् न पृथगुक्तः। एवञ्च प्रातिपदिकार्थे इत्यस्यालिङ्गालिङ्प्रवृत्तिनिमित्तकाश्चाव्ययपुमादाय उदाहरणम्। द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद् विशेषान्वययूर्थः। एवञ्च तस्य लिङ्गवत् प्रातिपदिकार्थत्वाभावात् परिमाणग्रहणम्।

नियमांशनिवेशे तु न मानम्। एकः, द्वौ इत्यादिसिद्ध्यर्थं वचन ग्रहणं कृतम्। अन्यथा एतत् सूत्रोपस्थित अनभिहिते इत्यस्यात्रफलाभावात्। एतदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वेन प्रथमाया अप्राप्तिः स्यात्। कर्मणि द्वितीया इत्यादेः कर्मणि एव द्वितीयेति प्रत्ययनियमपक्षे अत्र मात्रग्रहणं कृतम्। कर्मणि द्वितीयैवेति अर्थनियमपक्षे तु इदं नावश्यकम्।

## युक्तायुक्तत्वसमीक्षा

ननु पञ्चकं प्रातिपदिकार्थः इति निष्कृष्टमते लिङ्गस्यापि प्रातिपदिकार्थत्वात् लिङ्गहणं व्यर्थमिति आशङ्कायांकौमुद्यां मूले उक्तम्-नियतोपस्थितिकः प्रातिपदिकार्थ इति। स्वार्थद्रव्यलिङ्गसंख्याकारकाणां पञ्चानां प्रातिपदिकशक्यत्वेपि लिङ्गग्रहणसामर्थ्यात् अत्र सूत्रे प्रातिपदिकार्थपदेन नियतोपस्थितिकस्यैवार्थस्य ग्रहणम्। तेन कर्माद्याधिक्ये प्रथमा न भवतीति भावः।

अत्र को नियतोपस्थितिपदार्थ इति जिज्ञासायां निरुच्यते-नियताव्यापिका-उपस्थितर्यस्य स नियतोपस्थितिकः प्रातिपदिकार्थः।

निपूर्वकयम् धातोर्व्यापकत्वमर्थः, आश्रयश्च क्तार्थः षष्ठ्यर्थश्च विषयता। तथा च व्यापकताश्रयोपस्थिति-विषयत्वं प्रातिपदिकार्थत्वमिति शब्दत आयाति। तत्र व्यापकत्वस्य यत्किञ्चिन्निष्ठ व्याप्यता निरूपितेन किन्निष्ठव्याप्यता निरूपिता उपस्थिति निष्ठव्यापकता इत्याकाङ्क्षायामुच्यते स्वविषयकश्रावणप्रत्यक्षसमवायित्व, स्वनिष्ठशक्तिज्ञानसमवायित्वोभय-सम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपित समवायसम्बन्धावच्छिन्न प्रातिपदिकनिष्ठ व्याप्यतानिरूपित समवायसम्बन्धावच्छिन्न व्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति ध्येयम्। प्रातिपदिकनिष्ठ व्याप्यता च न प्रातिपदिकत्वसामान्यरूपेण असम्भवात्, नापि तद्व्यक्तित्वेन, अव्यावर्तकत्वात्, किन्तु तत्तदानुपूर्वीप्रकारेणति बोध्यम्।

व्यापकतावदुपस्थितिविषयत्वमित्यस्य च व्यापकतावच्छेद-कोपस्थितीविषयताश्रयत्वमित्यर्थः। तेन घटपदजन्यघटत्वप्रकारोपस्थितौ उद्बोधकान्तरवशाद् कदाचित्पटादिभावेऽपि तद् विषयताया निरूपितोभयसम्बन्धेन घटादिप्रातिपदिकाधिकरणकान्तरीयघटादिविषय-कोपस्थित्यधिकरणाधिनिष्ठा भावीय प्रतियोगितावच्छेदकत्वान्नाति-व्याप्तिः।

ननु गृहीतशक्तिकस्यापि अपेक्षया अनुत्पन्नसंस्कारस्य, कालान्तरे लुप्तसंस्कारस्य वा पुरुषस्य शक्तिज्ञानसत्त्वेऽपि तदुपस्थितेरभावेन प्रातिपदिकनिष्ठव्याप्यतानिरूपिता व्यापकता उपस्थितौ न स्यादिति तु नाशङ्कनीयम्, तदर्थ स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्व-स्वविषयप्रत्यक्षसमवायित्वो भयस्य व्याप्यतावच्छेदकत्वोपगमात्।

नन्वत्रोपस्थितिपदेन स्मृतिर्गृह्यते, शाब्दबोधो वा, नाद्यः, तटशब्दाल्लिङ्गत्रयविषयकबोधस्य आकाङ्क्षाद्यभावेन युगपदनुदयेऽपि लिङ्गत्रयविषयकोपस्थितेर्युगपत्सम्भवेन लिङ्गत्रयोपस्थितेर्व्यापकत्वात् लिङ्गस्यापि उक्तप्रातिपदिकार्थत्वेन लिङ्गग्रहणवैयर्थ्यात्। नान्त्यः शाब्दबोधस्य यत्किञ्चिल्लिङ्गविषयकत्वेनोक्तदोषस्य वारणेऽपि घटादिपदशक्तिग्रहवतोऽपि पुरूषस्य योग्यताकाङ्क्षादिकारणविरहिणः घटकर्मत्वमानयनं कृतिः इत्यतो बोधाभावात् घटादिबोधेऽपि व्यापकत्वस्य दुर्घटत्वादिति चेत् न, स्वविशेष्यशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोध सामग्री समवायित्वस्य व्याप्यतावच्छेदक सम्बन्धस्य निवेशेनादोषात्।

नन्वेवमपि सर्वं वाक्यं क्रियया परिसमाप्यते इति क्रियाविशेष्यकस्यैव शाब्दबोधस्य वैयाकरणैः स्वीकारादुच्चार्यमाणप्रातिपदिकनिष्ठव्याप्तानिरूपित व्यापकतायाः क्रियाविषयकबोधे सत्त्वात् तादृशबोधीयविषयता श्रयत्वेन क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेत्, न प्रातिपदिकनिष्ठव्याप्यतानिरूपति-व्यापकतावद्बोधीयविषयताश्रयत्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं तत्वमिति विवक्षणेन क्रियायाः प्रातिपदिकनिष्ठशक्तिनिरूपकत्वाभावेन दोषाभावात्। यत्तु प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यञ्च स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकविषयतावत्त्वसम्बन्धेनेति, तन्न, हर्यादिनानार्थस्थले विष्णुत्वविष्णूवादीनां प्रातिपदिकार्थत्वानापत्तेः।

वस्तुतस्तु प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। शक्तिवैशिष्ट्यञ्च स्वज्ञानाधीनोपस्थिति प्रयोज्यत्व स्वज्ञानाधीनोपस्थिति प्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वोभय सम्बन्धेन। अत्र प्रथमसम्बन्धपददानात् साध्यत्वाविषयकबोधस्य कुत्राप्यजननात् तत्र द्वितीयसम्बन्धसत्त्वेऽपि नातिव्याप्तिः। द्वितीयसम्बन्धोपादानात् लिङ्गस्य तटादिप्रातिपदिकार्थत्वं न, चालनीन्यायेन सर्वलिङ्गनिष्ठाविषयतानां शक्तिप्रयोज्यबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वात्।

नानार्थस्थले तु शक्तिभेदात् न दोष इति। तदपि न, तत् पदस्थले शक्तेरैक्यात् घटादिपदार्थे तत्पदप्रातिपदिकार्थत्वानापत्तेः। एतेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यिञ्च स्वज्ञाधीनोपपस्थितिप्रयोज्यशाब्दबोधतात्वावच्छिन्न निरूपित व्यापकतावत्त्वसम्बन्धेन इत्यपास्तम्। नियमेन कस्यापि बोधानुदयात् निरूक्तविषयतात्वावच्छिन्नव्यापकत्वस्य दुर्लभत्वात्।

शेखरकृता परे तु इत्यादिना प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्तदाश्रयञ्च यद् व्याख्यातं तस्यायंभावः-स्वावच्छिन्नविषयताश्रयत्वं, स्वतादात्मयमेतदन्यतरसम्बन्धेन तत्पदप्रवृतिनिमित्तविशिष्टस्तत्तत्प्राति-पदिकार्थः। प्रवृत्तिनिमित्तलक्षणन्तु गदाधरमिश्रकृतप्रकाशग्रन्थेऽभिहितं वाच्यत्वे सतिवाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् इति। वाच्यत्वे सतिवाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् इति। वाच्यत्वनिवेशात् आकाशपदप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः। वाच्यप्रवृत्तित्वनिवेशात् गवादिपदवाच्यावयवसंयोगविशेषरूपाकृतौ नातिव्याप्तिः। वृत्तित्वस्य साक्षात्सम्बन्धेन विवक्षितत्त्वाच्च तस्याः स्वसमवायावयवसमवेतत्त्वेऽपि न क्षतिः। सोऽपि सम्बन्धो वाच्य एव ग्राह्य इति कालिदासादिना साक्षात् सम्बन्धेन गवादिवृत्तित्वेपि आकृतेर्न तत्त्वम्। एवं च साक्षात्वं न निवेश्यम्। तादृशपरम्परासम्बन्धस्य

वाच्यत्वाभावे नैवातिव्याप्तिरनवकाशात्। वाच्योपस्थितीयप्रकारतादलनिवेशात् आधाराधेयभावसम्बन्धेन हर्यादिपदवाच्येवृत्तिहर्यादिपदवाच्येन्द्रादौ नातिव्याप्तिः।

नन्वत्र लक्षणे पुंस्त्वत्वादावतिव्याप्तिः, वाच्यत्वादित्रयस्य तत्र सत्त्वात्। च चेष्टापत्तिः, प्रवृत्तिनिमित्तत्वेन तस्य तदाश्रयत्वेन पुंस्त्वादिलिङ्गस्यापि प्रातिपदिकार्थत्वापत्तौ लिङ्ग्रग्रहणवैयर्थ्यापत्तेरिति चेन्न, प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम्। वैशिष्ट्यञ्च-स्ववाच्यत्वं-स्ववाच्यवृत्तित्वं, स्वजन्यशाब्दबोधीयमुख्य विशेष्यतासमानाधिकरणोप-स्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वमेतत् त्रितयसम्बन्धेनेति परिष्कारेणादोषात्। पुंस्त्वादिलिङ्गनिष्ठविशेष्यतायाः प्रातिपदिकजन्य-बोधीयमुख्यविशेष्यतासमानाधिकरणत्वाभावात्। अत्र विशेष्यतानिरूपितत्वं प्रकारतायां साक्षात् परस्परासाधारणमिति पशुपदार्थप्रवृत्तिनिमित्तलाभत्वादौ नातिव्याप्तिः।

यद्वा-स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वं स्वप्रयोज्यधर्मितानिरूपितापदार्थ सम्बन्धावच्छिन्ना, सामानाधिकरण्य अवच्छेदकत्व सामानाधिकरण्यैवदन्यतरसम्बन्धावच्छिन्न-प्रतियोगिताकपदार्थान्तरनिष्ठ प्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता तदवच्छेदकत्वाभाववत्त्वमेतदुभयसम्बन्धेन प्रातिपदिकविशिष्टत्वं प्रातिपदिकप्रवृत्तिनिमित्तत्वम्। अत्र लक्षणे प्रकारत्वाभावोऽन्यतरसम्बन्धावच्छिन्न प्रतियोगिताको न निवेशनीयः। आद्यसम्बन्धोपादानेनैव पुंस्त्वादिलिङ्गे अतिव्याप्तिवारणादित्याहुः।

वस्तुतस्तु प्राचीनानां मते यदि अलिङ्गा नियतलिङ्गा अनियतलिङ्गाश्च प्रातिपदिकार्थपदेन संगृह्येन् तर्हि उच्चैः, नीचैः, कृष्णः, श्री, ज्ञानं, तटः, तटी, तटमित्यादीनां समेषां प्रयोगाणां निर्बाधितसिद्धौ सत्यां लिङ्गग्रहणस्य कथं स्वांशेचारितार्थ्य स्यादिति जिज्ञासा क्रियेत चेत् तर्हि तन्नये किं समाधानं स्यादिति विचारणायामिदमेव वक्तुं शक्यते यत् स्वार्थो द्रव्यं लिङ्ग चेति त्रिकं प्रातिपदिकार्थ इति पक्षमभ्युपेत्य इदं कथनं प्रमाणिकतया संग्रहीतुं शक्यते। तत्र लिङ्गार्थशून्ये उच्चैः, नीचैः, इत्यादौ कथं तावत् प्रातिपदिकार्थमात्रे प्रथमा स्यात्।

यदि तु सामान्ये नपुंसकमिति वचनेन तत्रापि नपुंसकलिङ्गं स्वीक्रियते तदा अलिङ्गमसंख्यमव्ययमिति भाष्यविरोध आयाति। न च नैव स्यात् प्रथमोत्पत्तिः तेभ्यः तर्हि का हानिरिति वाच्यम्, उच्चैः घटकसकारस्य तथा सति रुत्वानापत्तेः, ततः परस्य पतति इत्यादितिङन्तस्य "तिङ तिङः" इति निघातानापत्तेः। सुबन्ततदादित्वाभावे पदत्वाभावात् अपदं न प्रयुञ्जीत इति निषेधस्य सक्रान्त्यापत्तेश्च।

यदि तु उच्चैरूदात्तः इत्यादि सूत्रघटक उच्चैरित्यादिरूत्व घटित निर्देशमहिम्ना सुबुत्पत्तिरुत्प्रेक्षते, किं वा लक्ष्यानुरोधेन द्विकं त्रिकं वा उभयमपि प्रातिपदिकार्थ इति सिद्धान्तमभ्युपेत्य व्याख्यायते तदा चतुष्कं प्रातिपदिकार्थ इति पक्षमङ्गीकृत्य वचनग्रहणं परिमाणग्रहणञ्च निराकृत्य अर्थे प्रथमेति न्यासे एव निर्भरो विधेयः। यादृशं चोक्तं परमप्राचीनाचार्यैः तदेव च यथा कथञ्चित् समर्थितं बालमनोरमाकृद्भिः विशेषतो विचारे कृते सति अयमेव लघीयान् न्यासः सारभूततया समर्थितो भवति। नियतोपस्थिकः प्रातिपदिकार्थः प्रवृत्तिनिमित्तं तदाश्रययश्च प्रातिपदिकार्थः। सत्ता वा प्रातिपदिकार्थ इत्यादयः पक्षाः प्राचीनार्वाचीनपरमप्राचीन-शाब्दिकाचार्याणां बुद्धिवैभव प्रसूताः प्रातिपदिकार्थपद- घटितन्यासावलम्बिन इति न तत्तद्भिन्नमतेभ्यो विरोधशङ्कालेश इति सुधियो विचारयन्तु।

अत्र सूत्रे प्रातिपदिकग्रहणस्य फलं काशिकाकृतेदमुक्तम् यत् निपातस्यानर्थस्य प्रातिपदिकत्वम् तन्न वक्तव्यं भवति, प्रलम्बते, अध्यागच्छतीति। अत्र हि प्रलम्बते इत्यत्र प्रथमया पदत्वं साधितम्। न च षष्ठ्यामपि एतत् सिद्धं तथाहि कर्मादिषु द्वितीयादयो विहिता प्रकृत्यर्थमात्रे प्रथमेत्यादिकं पदमञ्जर्यां व्याख्यातं तत एवावगन्तव्यम्।

■ पता : व्याकरणविभागाध्यक्षः, रा.सं.सं., लखनऊ परिसरः, लखनऊ

# काव्यप्रकाशे शब्दचतुष्टयवादविमर्शः

■ शिवकुमार चतुर्वेदी

मम्मटमतेन निर्दोषत्वादिविशिष्टं शब्दार्थयुगलं काव्यम्। अर्थात् निर्दोपत्वादि-विशेषणविशिष्टौ शब्दार्थौ तत्काव्यमिति व्यवहर्त्तव्यौ। तद्धि अल्पदोषौ सगुणौ सालङ्कारौ शब्दार्थौ इति मन्यते घण्टापथः। अर्थात् तन्मतानुसारं दोषत्रयरहितं यत् शब्दार्थ तत् काव्यम्। दोषाश्च-अव्याप्तिः असम्भवश्च। इदं काव्यस्य निर्दुष्टं लक्षणम्। अस्यां दिशि काव्यप्रकाशकस्य प्रयासः 'तददोषौ शब्दार्थौ' इतीदं मम्मटसम्मतं काव्यलक्षणम्। अत्र तन्मते शब्दार्थयोः समष्टि काव्यम्। न केवलः शब्दः न तु केवलः अर्थः काव्यं काव्यपदस्य परामर्शकम्। अतएव 'शब्दार्थौ तत्' इत्यत्र शब्दार्थौ एतौ मिलित्वा एव काव्यपदवाच्यौ।

शब्दार्थौ इति एतस्य पदस्य विशेषणत्रयं लक्षणे प्रयुक्तम्। तच्च-अदोषौ, सगुणौ, अनलङ्कृती पुनः क्वापि। अर्थात् निर्दुष्टादिविशिष्टं शब्दार्थयुगलं काव्यम्, तौ सगुणौ-माधुर्यादिकाव्यगुणयुतौ काव्यम्, तौ सालङ्कारौ अपि काव्यम्। इदं काव्यलक्षणं (तददोषौ) अन्यैः आलङ्कारिकैः कृतकाव्यलक्षणेभ्याः[1] भृशं परिमार्जितम्।

मम्मटकृतकाव्यलक्षणे शब्दार्थयोः विवेचनाय सर्वप्रथमं शब्दस्वरूपानुशीलनम् आवश्यकं प्रतीयते। अतएव क्रमेण तयोः स्वरूपं निगदितवान् आचार्यः। तन्मते वाचको लाक्षणिको व्यंजकश्च त्रयो भेदाः शब्दस्य सन्ति। सूत्रे (५) 'अत्र' शब्दस्य विशिष्टः प्रयोगः। अनेन इदं वक्तुं शक्यते यत् अत्र व्यंजकशब्दः न स्वीकृतः। परन्तु व्यंजकशब्दं बिना न कोऽपि चमत्कारः दृश्यते। अतएव काव्ये एते त्रयो मन्यन्ते। एतेषु वाचकशब्दः मुख्यार्थबोधकः। अतः अयं शब्दः सूत्रे सर्वप्रथमं प्रयुक्तः। लाक्षणिकशब्दो वाचकशब्दाश्रितः। एतएव अयं वाचकानन्तरं प्रयुक्तः। व्यंजकशब्देन एतौ अपेक्ष्येते। अतः अस्य शब्दस्य वाचकलाक्षणिकानन्तरं तृतीयं स्थानम्। इत्थम् इदं विभागत्रयं केवलं शब्दस्य उपाधीनां वर्तते, नहि शब्दानाम्। यतः अमुक्शब्दः केवलं वाचकः अमुक शब्दः केवलं लक्षकः अमुक शब्दः केवलं व्यंजकः केवलं वाचकः अमुक शब्दः केवलं लक्षकः अमुक शब्दः केवलं व्यंजकः वा' शब्देषु एतादृशः कश्चित् नियतः विभागः न प्राप्यते। एक एव हि शब्दः वाचकः लक्षको व्यंजको भवितुम् अर्हति। विभागत्रयेतिमतं न शब्दानाम् अपितु शब्दस्य उपाधीनाम् इति अवगन्तव्यम्। यदा एक एव जनः उपाधिभेदात् वाचको भवितुमर्हति कदाचिच्च पाठको भवितुमहति। तथैव उपाधिभेदात् एक एव शब्दः कदाचित् वाचकः कदाचित् लक्षकः कदाचिच्च व्यंजकों भवितुम् अर्हति।

वाचकशब्दस्य स्वरूपं निरूपता मम्मटेन इदमुक्तं यत् यः शब्दः साक्षात् सेकेतितम् अर्थम् अभिधाशक्त्या अभिधत्ते स एव वाचकः। लोकव्यवहारे संकेतग्रहं बिना शब्दार्थाप्रतीतेः संतसाहाय्येन एव शब्द अर्थविशेषं प्रतिपादयति। अतएव अयं सिद्धान्तो निश्चीयते यत् यस्य शब्दस्य यस्मिनूनर्थे व्यवधानं बिना सङ्कतस्य ग्रहणं भवति सः शब्दः तस्य अर्थस्य वाचको भवति।

लोकव्यवहारे बालाकानां सङ्केतग्रहः यया प्रक्रिया 'अवापोद्वाप' इति अस्यां प्रक्रियायाम् उत्तमवृद्धः मध यमवृद्धं लेखनीम् आनेतुम् आदिशति पुनः लेखनीं विहाय मसिपात्रम् आनेतुम् आदिशाति। मध्यममवृद्धेन तदनुसारं मसिपत्रम् आनीतम्। ईदृशे व्यवहारे शब्दमेकं विहाय अन्यस्य एकस्मिन्नर्थे द्वितीयस्य अर्थस्य निवेशः आवाप-उद्वाप इति।

अतएव व्यवहारे आवापोद्वापद्वारा अन्वयव्यतिरेकाभ्यां सङ्केतः गृह्यते। अयं लोकव्यवहारः सङ्केतग्रहस्य प्रधानं साधनं परन्तु तदतिरिक्ता अन्या अपि उपायाः वर्तन्ते। इदं मन्यते यत् व्याकरणेन, उपमानेन, कोशेन, आप्तवाक्येन, व्यवहारशेषेन व्याख्यया, ज्ञानपदसान्निध्येन शक्तेः सङ्केतस्य वा ग्रहणं भवति। एतेषु प्रधानः उपायः व्यवहार इति। यतः अधिसङ्ख्यशब्दानां शक्तिग्रहः (सङ्कतग्रहणम्) व्यवहारेण भवति।[२]

एतेषु उपायेषु 'भू सत्तायाम्' इति धातुपाठतः अथवा ''साधकतमं करणम्'' इति सूत्रे भूधातोः करणादिपदस्य सङ्कग्रहः व्याकरणेन भवति। 'यथा गौः तथा गवय' उदाहरणामिदं उपमानप्रमाणस्य। यः गां जानाति परन्तु गाविं न जानाति। तस्मै एव 'गौः इव गविः भवति। अनेन वाक्येन गवयपदस्य सङ्कतग्रहः भवति। कोशेन आप्तवक्येनापि पदार्थानां नामानि ज्ञायन्ते बालकैः। व्याख्यापि सङ्कतग्रहस्य साधनम् अथ च वाक्यशेषेनसिद्धपदेन च अज्ञातार्थपदार्थः अपि ज्ञायते। इत्थं एते सर्वे सङ्कतग्रहस्य उपायाः।

सङ्कतग्रहः कुत्र भवति? अयं सङ्केतग्रहसम्बन्धी महत्त्वाधायकः प्रश्नः। अनेकैः विवेचकैः विविधैः प्रकारैः; अस्य प्रश्नस्य समाधिः प्रस्तुता। जातौ सङ्केतग्रह इति केचित्, व्यक्तौ इति केचित्, जातिविशिष्टव्यक्तौ इति केचित् च। यद्यपि सामान्यतः व्यवहारः कस्मिंश्चित् व्यक्तौ एव भवित। अतः सङ्कतग्रहः व्यक्तौ एव भवितव्यः। परन्तु व्यक्तौ सङ्केतग्रहो यदि मन्यते तर्हि आनंत्यव्यभिचारौ दोषौ सम्भवतः। यस्य शब्दस्य यस्मिन् अर्थे सङ्केतग्रहो भवति तेन शब्देन तस्यैव अर्थस्य प्रतीतिः भवति। सङ्कतग्रहं विना नार्थप्रतीतिः। अतः सङ्केतग्रहो मन्यते चेत् तर्हि यस्मिन् व्यक्तिविशेषे सङ्केतग्रह : तेन शब्देनैव तस्य व्यक्तिविशेषस्य उपस्थितिः भविष्यति। अन्यासां व्यक्तीनां प्रतीत्यर्थं प्रत्येक व्यक्तौ पृथक्-सङ्केतग्रहस्य स्वीकृतिरावश्यकी। अस्यां दशायाम् एकेन गोशब्देन सर्वासु गोव्यक्तिषु प्रतीयमानः पृथक सङ्केतग्रहः मन्यते चेत् तर्हि अनन्तशक्तीनां कल्पना आवश्यकी भविष्यति।

अयमेव अभिप्रायः आनंत्यदोषस्य। पुनः च व्यवहारेण वर्तमानदेशस्य, वर्तमानकालस्य गोव्यक्तिषु सङ्केतग्रहः भवेत्, भूतभविष्ययोः देशान्तरस्य कालान्तरस्य वा सर्वासां गोव्यक्तिषु सङ्केतग्रहः न सम्भवति। अतः व्यक्तौ सङ्तग्रहः न स्वीकारयोग्यः। अनन्तशक्तीनां कल्पनाऽपि एको दोषः आनत्यदोषनाम्ना ज्ञायते। तद्दोषरणाय यदि इदममुच्यते यत् अन्यासु सर्वासु व्यक्तिषु पृथक् शक्तिग्रहस्य आवश्यकता न भवति, कतपयासु व्यक्तिषु व्यवहारेण सङ्तग्रहो भवति, अवशिष्टानां व्यक्तीनां बोधः सङ्कतग्रहेण विनैव भवति; तर्हि व्यभिचारदोषो[३]; जायते। नियमोल्लघनं व्यभिचारशब्दस्य अर्थः। सङ्केतेन हि शब्दार्थ प्रतीतिरिति नियमः। सङ्केतं विनैव यदि गोशब्देन बह्वीनां गोव्यक्तीनां बोधो भवति तर्हि अस्य नियमस्य उल्लघनं भवति। व्यभिचारदोषः समापतति। इत्थं व्यक्तौ सङ्तग्रहस्वीकारे आनन्त्यदोषो भवति। तस्मात् युक्तिप्रयासे व्यभिचारदोषापत्तिः। अतः व्यक्तौ सङ्कतग्रहस्वीकारो न सम्भवति।

यथा सर्वासु गोव्यक्तिषु सङ्केतग्रहो न युक्त। तथैव कस्याञ्चिदेकव्यक्तौ अनन्तानां गोव्यक्तीनां युगपदुपस्थानासम्भवात् सङ्केगेहो न समीचीनः। यस्यां गोव्यक्तौ सङ्केतग्रहः तदतिरिक्तायाः गोशब्देन भानं न सम्भवति। व्यक्तिशक्तिवादे 'गौः' शुक्लवर्णवान् चलनक्रियवान् डित्थनामा' इति अभिप्रयेण 'गौः शुक्लः चलो डित्थः' इति प्रयोगे गवादिभिः चतुर्भिः अपि शब्दैरेका सैव गोव्यक्तिः उच्यते इति पदार्थभेदो न स्यात्। तत्र व्यक्तेरेव पदार्थत्वात्, तस्याश्च प्रकृते एकत्वात्। तथा च विषयविभागाभावे गवादिशब्दार्थानां घटः कलश

इत्यादीनाम् इव एकार्थवाचकत्वेन सहप्रयोगो न स्यात्। उपाधिशक्तिवादे जातिगुणक्रियासञ्ज्ञानां प्रवृत्तिनिमित्तभेदेन गवादिशब्दानां पर्यायस्वभावाद् भवति सहप्रयोग इति। तत्र जातिः गोत्वादिः संस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धो गवादिपदानाम् अभिधेया। अनुमानसिद्धा च घ्राणत्वरसनत्वादिः घ्राणरसनादिपदानाम्। आयं जातिरूपः शब्दः प्राणपद इति अभिधीयते प्राणनं प्राणो व्यवहारयोग्यता तं ददाति सम्पादयति। इति प्राणप्रदस्तन्निर्वाहकः। सर्वगोवृत्तिः जातिरिति। :प्राणप्रदत्वं च नरसिंहादीनां मतेषु यावद्वस्तुस्थितिसम्बन्धित्वम्' इति। भर्तृहरिमते 'गौः स्वरूपेण न गौः नापि अगौः गोत्वादिसम्बन्धन्धाद् गौः' अर्थात् गौः गोपदोद्देश्यः सास्नादिमान् धर्मी स्वरूपेण जातिरहितव्यक्तित्वमात्रेण इति अर्थः इति केचित् अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेण इत्यर्थः इत्यन्ये। न गौः। न गोव्यवहानिर्वाहकः। नाप्यगौः। नापि गोभिन्न इति व्यवहारस्य निर्वाहकः। तथा सति दूरात् अनभिव्यक्तसंस्थानतया गोत्वाग्रहणदशायां गविः गौ इति गौभिन्न इति वा व्यवहारः स्यात्। स्वरूपस्याविशेषात् घटे गौरिति गवि चागौरीति वा व्यवहार स्यात्। 'अगौः' इत्यत्र 'गोरतद्धितलुकि' इति टच्प्रयत्यो न भवति 'नञस्तत्पुरुषात्' इति निषेधात्। गोत्वाभिसम्बन्धात् गोत्ववत्तया ज्ञानात् गौः गोशब्दव्यवहार्यः। एवं च यावत् गोव्यवहारं तत्र गोपिण्डे गोपिण्डे सत्त्वात् प्राणपदत्वम्। एवं च नित्यम् अनेकानुगतं सामान्यं जातिरिति तल्लक्षणम् अवगन्तव्यम्।

महाभाष्यकारेण शब्दः चतुर्धा विभक्ताः - जातिशब्दाः गुणशब्दाः, क्रियाशब्दाः यदृच्छाशब्दाश्च।[४] व्यक्तौ शक्तिं मत्वा उक्तशब्दविभागः अपि नहि भवितुमर्हति। यतः यदा व्यक्तौ शक्तिः मन्यते तदा गौः शुक्लः चलः डित्थः इत्यादिभिः चतुर्भिः शब्दैः व्यक्तिरेव अवबुध्यते। अतः गौशब्दो जातिवाचकः शुक्लशब्दः गुणवाचकः चलशब्दः क्रियावाचकः डित्थशब्दश्च यदृच्छेति निपातः, वक्तुः यदृच्छया सन्निवेशितनामरूपः। इत्थं वक्त्रा यदृच्छया कल्प्यते इति संज्ञारूप-यृच्छात्मको डित्थादिशब्दः। एवं गोशुक्लादिशब्दानां व्यक्तिमात्रविश्रान्तौ वाच्यनिष्ठो विभागो न सङ्गच्छते, पाणिहस्तादिवत् पर्यायितया परिशिष्यते जात्यादेः असङ्केतित्वात् तस्याः व्यक्तेः यः उपाधिधर्म तत्रैव संकेतः। अतएव व्यक्तौ श्शक्तिं न स्वीकृत्य तस्या व्यक्तेः उपाधिभूतेषु जात्यादिषु धर्मेषु सङ्केतग्रहस्य औचित्यम्।

मम्मटमतानुसारं वैयाकरणमतेन च सङ्केतितः अर्थः जात्यादिभ्भेदात् चतुर्विधः- जातिः गुणः क्रिया यदृच्छा च। अथवा मीमांसकमते जातिरेव सङ्केतितार्थः। विद्याधरमते साक्षात् सङ्केतितार्थयुक्तशब्दो वाचको भवति। सङ्केतितार्थयुक्तशब्दो वाचको भवति। सङ्कतितस्तु जातिगुणक्रियाद्रव्येषु भवति। स चतुर्विधः। अथवा जातिमात्रसाक्षाद्व्य-वधानहीनः शब्दः। सङ्केतितश्च चतुर्विधः। यद्यपि अर्थक्रियाकारित्वेन प्रवृत्तिनिवृत्तियोग्या व्यक्तिः एव। तथापि आन्त्यदोषात् व्यभिचारदोषात् च तस्यां व्यक्तौ सङ्केतग्रहस्वीकारोऽनुचितः सङ्केतविषयो हि जातिः। साहित्यदर्पणकारेण अथ च महिमभट्टेन च सङ्केतितः चतुर्विधः स्वीकृतः।[५]

गुणः शुक्लादिः शुक्लादिपदानाम् अभिधेयः। शुक्लादिना हि लब्धासत्ताकं गवादिकं वस्तु व्यावर्त्यते। अर्थात् उत्पन्नस्य द्रव्यस्य गुणेन पश्चाद् योग इति। एवं च उत्पन्नस्य द्रव्यस्य क्षणम् एकं निर्गुणत्वम्। जातियुक्तस्य एव द्रव्यस्य उत्पत्तिः। 'जन्मना जायते जातिः' इत्युक्तेः। एवं जातिगुणयोः महान्भेद इति बहवः। अयं द्रव्यम् आश्रयते, तत एव च द्रव्यात् निवर्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते यः स गुणः। एतेन जातेः गुणत्वं वारितम्। सा (जातिः) हि द्रव्ये निविशमाना द्रव्यं न कदाचित् जहाति। न च भिन्नजातीयानि द्रव्याणि अभिविशन्ते। यद्यपि गवाश्वादिषु अस्ति तथापि प्राणित्वेन तेषाम् एकजातीयत्वम् एव।

क्रिया गुणात् भिन्ना। सापि द्रव्ये निविशते, कदाचिते, द्रव्यात् निवर्तते, निष्क्रियं हि द्रव्यं कदाचित् भवति, कदाचित् सक्रियम्, भिन्नजातीयानि च द्रव्याणि आश्रयति। सा तु उत्पाद्या एव न नित्या, तस्या द्वैविध्याभावात् गुणाभावः। इयं हि भावना उत्पादयितुः व्यापाररूपा साध्यत्वेन असत्त्वरूपत्वेन अभिधीयमाना भवति इति अस्य शब्दस्य रूढ़िः। क्रियापदेन तत्समुदायोऽभिधीयते। यत्र क्रमिको व्यापारः अस्ति तत्र रूढिः आदरणीया इति पौर्वापर्यारोपणे वा सर्वत्र फलस्य स्वजनकव्यापारगतपौर्वापर्यारोपणात् यौगिकत्वम्। किंच क्रमिकावयवानाम् एकदासत्त्वेऽपि यत्किञ्चित् अवयवसत्त्वकाले वर्तमानत्वव्यहारः। अवयवाक्यविनोः अभेदारोपात्। भूतभविष्यत्वव्यवहारस्तु सर्वेषाम् अवयवानां भूतभविष्यत्वयोरेव न तु यत् किचिंत् क्रियाभूतत्त्वादौ।

क्रमिततत्तद्व्यापारं प्रति गुणभूतैः गुणाभावेन भासमानैः अवयवैः उपलक्षितः एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिंस्तद्रूपः यस्मिजन्मनां व्यापाराणां समूहः क्रियेति। अत्र क्षणनश्वराणां व्यापाराणां मेलनाभावेन बुद्ध्या इति उक्तम्। तथा च- बुद्धिजन्मसंस्कारद्वारा तेषां मेलनसम्भवः।

भाष्ये प्रतिपादितं यत् 'क्रिया हि नामांधेयम् अत्यन्तापरिदृष्टा, पूर्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुम्' इति। व्यापारसमुदायात्मिकायाः क्रियाया दर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितं तस्याश्च अभिन्नबुद्धिविषयतया एकत्वव्यहार इत्यादि बोध्यम्। अथ च शुक्लादीनां चलादीनां च प्रतिव्यक्तिभेददर्शनात् आनन्त्यव्यभिचाराभ्यां व्यक्तिशक्तिवाददोषाभ्याम् इहापि कलुषाकरणम् इति चेत्, तेषां लाघवात् प्रत्यभिज्ञानबलात् चैकताया अभ्युपगमात्।

वक्त्रा स्वेच्छया डित्थादिशब्दानां प्रवृत्तिनिमित्तत्वे सन्निवेशितो धर्मः स च 'परम्परया व्यक्तिगतः चरमवर्णाभिव्यङ्ग्यः अखण्ड स्फोट इति एके। 'आनुपूर्व्यव्यवच्छिन्नो वर्णसमुदायः' इति अपरे। 'केवला व्यक्तिरेव' इतीतरे। तत्र आद्यमः तद्वये विशेषणज्ञानात् विशिष्टप्रत्ययः। तृतीयमते च निर्विकल्पात्मकः प्रत्ययः। यथा गवादौ गोत्वादिरिव, शुक्लादौ शुक्लादिः, पाकादौ पाकत्वादिः, डित्थादौ डित्थत्वादिरिति डित्थादीनां प्रकृत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात् तद्वृत्तिडित्थत्वादिजातिस्वीकारः। एवं शुक्लात्वादिजात्याश्रयस्य शुक्लादिगुणस्य एव आक्षेपः। पटादिपरत्वे तु लक्षणा एव मन्तव्यम्। उपाधौ सङ्कतग्रहाङ्गीकारे 'विशेष्यं नाभिधा गच्देत् क्षीणशक्तिः विशेषणे' इति न्यायात् 'गामानय' इत्यादौ गोपदादिनां गवादेः ग्रहः गवादेः आक्षेपेण लाभात् न सम्भवति। व्यक्तिविनाभावात् तु जात्या व्यक्तिः आक्षिप्यते। यथा- 'क्रियते' इत्यादौ कर्ता। 'कुरु' इत्यादौ कर्मेति। आक्षेपो न अनुमानम्। व्याप्त्यादिज्ञातव्यतिरेकेणापि व्यक्तेः अनुभवात्, किन्तु स्मरणमेव गोत्वादिप्रकारकगवादिस्मरणाभावेन गोत्वादिविशिष्टेशाब्दबोधानुपपत्तेः जातिशक्तं पदं वस्तुतः पदं वस्तुतः व्यक्तिम् एव अनुभावयति स्मारयति च। जातिशक्तम् उपाधिशक्तम् इति बोद्धव्यम्।

नार्थ लृकारोपदेशेन। यदृच्छाशक्तिजानुकरणप्लुत्या (द्य)र्थः।।वा।।' इतीदं प्रतीकं व्याख्यायता महाभाष्टीकाकारेण भर्तृहरिणा निगादित। यत् प्रयोगार्थं शास्त्रं, न च प्रयोगे लृकारो विनिवेशितस्वरूपों विद्यत इति, यदृच्छादिषु अस्ति लृकारप्रयोगः। यदृच्छा नाम या असतिप्रवृत्तिनिमत्त अर्थगतं प्रवर्तकं (निवर्तकं) वा नियमहेतुमन्तरेण प्रवर्तते निवर्तते वा सा यदृच्छ। डित्थशब्दो हि स्वरूपमात्रनिबन्धोयत्र तत्र प्रजुरूते, इदं तावदस्य नामधेयं करोमीति, तत्र तत्र निवर्तते। स्वरूपमात्रनिबन्धनानां च शब्दानां तस्य स्वरूपस्य रूपान्तरेण प्रत्यायिततुम् अशक्यत्वात् नास्ति

निवर्तकं शब्दान्तरम्। तत्र लृतकशब्दो नामधेयत्वेन नियुज्यमानः अनपेक्षित बाह्यनिमित्तोऽसति निवर्तके शब्दान्तरे स्वरूपनिबन्धनः साधुः, स किमित न प्रयुज्यते? तस्मात् लृकार एवाशब्दस्य प्रयोगाद् अच्कार्यप्रसिद्ध्यर्थं कर्तव्य उपदेश, यदि तत्रास्ति "ऋकारलृकारयोः सवर्णविधिः" (वा. १.१.६) इति। 'सति हि तस्मिन् ऋकार' एव अच्कार्यं प्रपिद्यते।

ततः "चतुष्टयी शब्दानां प्रवृत्तिरिति" प्रतीकं स्पष्टयता तेन कथितं यत् केचित् शब्दाः नियातार्थाः पर्यायाः तेषां शब्दानां नियताः अनुत्पाद्याः, पुरुषेण कर्तुः स्मरणात्। अस्ति तु संशयामो यो नामधेयत्वेन नियुज्मानः कस्मिंश्चिदर्थे अनियतः पौरुषेयेण व्यापारेण नियुज्यते। तत्र जातिशब्दो यदा जातौ प्रवर्तते तदापेक्षितनिमित्तवत्वात् शक्यते वक्तुं यदृच्छा स शब्द इति। अन्यान्यता पौरुषेया प्रवृत्तिः यथा जातेः अस्तित्वमतेन यावतच्चैते न तत्र शक्यन्ते पुरुषेण प्रयासः स्रष्टुम् इत्येव विशेषः।

यदा तु द्रव्ये निमित्तापेक्षया प्रवर्तते तदापि जातिशब्दाः। यदा तु अभिधेयं द्रव्यम् अस्य, द्रव्यशब्दः। एवं गुणशब्दोऽपि शुक्लादिः गुणाशब्दः, गुणसामान्ये यदृच्छाशब्दः गुणनिमित्तापेक्षया जातिशब्दः, गुणाभिधायित्वात् गुणशब्दः। एवं क्रियाशब्दः क्रियासामान्ये यदृच्छाशब्दः क्रियायां जातिशब्दः क्रियाशब्दो वा। यावति च शब्दे क्रियानुषङ्गः अस्ति सर्वस्य क्रियाशब्दत्वं कृदन्तेषु। इतरे विचारयन्ति यत् यदृच्छाशब्दा एव अमी जात्यादयस्तु केवलं भेदिका इति। अतः तिसृषु शब्दप्रवृत्तिषु नियतशब्दत्वं नियतार्थत्वं च। चतुर्थ्यां तु शब्दप्रवृतौ अस्ति पौरुषेयत्वम् इति।

साक्षाद्व्यवधानरहितः यत्र शब्दस्य सङ्केतोऽस्ति तत्र सोऽर्थः मुख्योऽस्ति। इति मन्यमानः सङ्केतितार्थगोचरशब्दस्य व्यापारः अपि अनिधारूपो मुख्यो भवति। अनुवाद्यर्थस्य विधेयार्थ परत्वं तात्पर्यम्।

मम्मटाचार्यमतेन यद्यपि[६] आनयनापनयनदिरूपायाः अर्थक्रियायाः[७] निर्वाहकत्वात् प्रवृत्तिनिवृत्तियोग्या[८] व्यक्तिरेव। अतः व्यवहारेण जायमानो सङ्केतग्रहः तस्यां व्यक्तौ एव भवितव्यः। पुनरपि आनत्यात्[९] व्यभिचारात्[१०] च व्यक्तौ सङ्केतग्रहः केचित्। अस्मात् हेतोः अस्य=तदुपाधौ एव सङ्केतः। गुणवाचकं शुक्लपदं च जातिवाचकं गौपदं च यदृच्छात्मकं संज्ञारूपं डित्थपदं च वर्तन्ते। एभिः शब्दैः केवलं व्यक्तेः उपस्थितौ 'गौः शुक्लः चलो डित्थः' इत्यादीनां[११] विषयविभागो न सम्भवति। तेषाम् उपाधिभूतधर्मेषु जातिगुणक्रियायदृच्छाशब्देषु एव सङ्केतग्रहः भवति।

उपाधिभेदद्वारा शब्दानां विभाग चतुर्विधः मुख्यतः अयमुपाधिः द्विधा-वस्तुधर्मा वस्तूनि समवेतः इत्यर्थः। यदृच्छासंनिवेशितः, या इच्छा यदृच्छा। यदृच्छेति निपातः। तया सन्निवेशितः स्वेच्छानियुक्तः। वस्तुधर्मः द्विविधः सिद्धः साध्यश्च। अनयोः साध्यरूपः वस्तुधर्मः क्रियेति उच्यते। सिद्धोऽपि वस्तुधर्मः द्विविधः। आद्यः पदार्थस्य प्राणपदः पदार्थस्य पदार्थोद्देश्यस्य प्राणनं प्राणो व्यवहारयोग्यता तत्पदतन्निर्वाहकः। विशेषः सजातीयेभ्यो व्यववर्तनात् "शिषः असर्वोपयोग' धातु १६१/६ इति धात्वनुसारात्। आधानं प्रत्ययः। प्राणपदत्वं जातित्वम्। तां विना वस्तुनः स्वरूपमेव न सिद्ध्येत्। जातेः प्राणपदत्वे सम्मतिः वर्तते। अतएव वाक्यपदीये हरिणा इद्मुक्तं यत् स्वरूपेण पिण्डमात्रेण गौः गौः इति व्यवहर्तुं न शक्यते अतिप्रसङ्गात्। अर्थात् गौः गौपदोदेश्यो धर्मी-स्वरूपेण उपाधि रहितव्यक्तिमात्रेण न गौः गोव्यवहारप्रयोजकः। गौः न अपि अगौः न गोभेदव्यवहार-प्रयोजकः। तदा गौः अपि अगौः स्यात्। प्राणप्रदां जातिं विना वस्तुतः स्वरूपमेव न सिद्ध्येत्। लब्धसत्ताकं प्राप्तव्यवहारयोग्यताकं

व्यवहारप्रयोजकं विशिष्टते=सजातीयेभ्यो व्यावर्तते।[१२] सिद्धस्य द्वितीयः भेदः गुणः।[१३] अतएव शुक्लादेः गुणस्य विशेषाधानहेतुत्वे उक्तवता काव्यप्रकाशकारेण निगदितं यत् अनेन उत्पन्नस्य द्रव्यस्य पश्चात् गुणेन विशेषणम् इति दर्शितम्। अतएव जातिगुणयोः महानुभेदः। साध्यस्य लक्षणम् निगदितवता तेनोक्तं यत् पूर्वापरीभूताः अधिश्रयणादयोऽवयवाः अस्याः पचनादिक्रियायाः तद्रूपः। पाकादिक्रियाया अपि नियत्वम्। तदुक्तं (वाक्यपदीये ३. का. १)-

**यावत् सिद्धम् असिद्धं वा साध्यत्वेन प्रतीयते।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते।।**

अत्र अवधेयं यत् अधिश्रयणादिव्यापारप्रचयः क्रिया तस्याः अवयवाः अधिश्रयणादयः समूहस्यात्र अनतिरिक्ततया व्यापाराणां प्रत्येक पाकत्वेन क्रमेण पाक इति भ्रम एवेति। अक्रमस्य क्रमप्राप्तिरित्यर्थः। क्रमस्य स्वरूपम् उक्तवता इदं विवेचितं यत् असंव्यवच्छेद्यस्वलक्षणं बुद्धिद्वारा निर्ग्राह्यं यस्य, उपाधिप्रत्ययानन्तरम् उपाधिविशिष्टप्रत्यायनम् इति अस्ति क्रमः। (सोऽत्राकूतः)

वक्तुः 'यदृच्छा' इत्यादिना उक्तं चतुर्थमुपाधि विशदयता इदं प्रतिपादितं यत् स्वरूपं=स्फोटस्वरूपम् अन्त्यवर्णबुद्ध्या नितरां ग्राह्यम्। पूर्वपूर्वबुद्ध्या तु ईषद्ग्राह्यम्। अन्त्यबुद्ध्या स्फुटतरावभासनात् संहतक्रमम्। स्फोटस्य एकत्वात् वा संहतक्रमम्। द्वितीयस्तु जात्यादिविभागपरिसमाप्तिद्योतकः। डित्थादिशब्दानाम् उपाधित्वं न स्वीकृतम्।[१४] अयमेव द्रव्यशब्दः, शब्दस्य यच्चातुर्विध्यं तदुक्तम्-

**शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः।**
**चातुर्विध्यात् अमीषान्तु शब्द उक्तः चतुर्विधः।।**

एवं डित्थादिशब्दानां प्रथमवर्णाप्रतीत्या किंचितप्रकाशितं अन्त्यवर्णबुद्ध एवं डित्थादिशब्दानां प्रथम वर्णाप्रतीत्या किन्चित्प्रकाशितं अन्त्युवर्णबुद्ध्या निःशेषतो ग्राह्यम्। संहतक्रमं स्वरूपम्। नानावर्णात्मकघटादिपदवर्णक्रमशून्यं शब्दस्वरूपपम्। डित्थादिषु अर्थेषु उपाधित्वेन वक्त्रा यदिच्छया कल्प्यते इति- संज्ञारूपयदृच्छात्मको डित्थादिशब्दः। तदाश्रितमेव (डितादिशब्दाश्रितमेव) शब्दस्वरूपं ध्वन्यात्मकम् अर्थेषु निवेश्यतेत्रउपाधित्वेन सङ्केत्यते। स्फोटशक्त्या एव स्वाश्रयपदविशिष्टधर्मिप्रतीतिः। जातिशक्तेः जातिविशिष्टव्यक्तिप्रतीतिवत्। डित्थादिपदस्य धर्मिणि बोध्यत्वमेव सम्बन्ध इति। संहृक्रमम् उपादाय इदं प्रपञ्चितं यत्पूर्वप्रयोगात् परप्रयोग इति जात्यादिशब्देषु क्रमः, सोऽत्र नास्ति, साक्षिप्रयोगत्वात् इति। उपाधित्वेन निवेश्यते। सङ्केताश्रयतया विशेषणत्वेन कल्प्यते।

डित्थादिषु अर्थेषु अप्रवृत्तित्वात् कथं विशेषणत्वमिति अस्य प्रश्नस्य समाधानं ददता सुधासागरे इदं प्रतिपादितं यत् डित्थादिपदं डित्थादीनाम् अविशिष्टाबोधकं भवतु इति इच्छात्मकसङ्कतसम्बन्धेन तद्वृत्तित्वात् तत्त्वम् अव्याहितम् इति भावः। न च डित्थादिपदज्ञानस्य स्वज्ञानहेतुत्वे आत्माश्रयः, विशेषणज्ञानस्य विशेषणविषयक-विशिष्टज्ञानहेतुत्ववत् स्वविशिष्टधर्मिज्ञानहेतुत्वेऽबाधात्। अवच्छेदकभेदात् डित्थादिपदज्ञानस्य तद्विशिष्टमृतिशाब्दबोधयोनिषु अत्यूहत्वात्। डित्थादिपदे शक्तिसिद्धौ च द्रव्यशब्दत्वं भट्टमते, शब्दस्य द्रव्यत्वात् अविरुद्धम् इति वदन्ति।

तदेवं प्राणपदा जातिः। विशेषाधानहेतुः गुणः। साध्यः क्रिया। यदृच्छाशब्दो डित्थादिरिति चतुर्धा उपाधिः उक्तः। तत्र सम्मतिं स्वीकुर्वता-भष्यकारेण प्रपञ्चितं यत् शब्दानमर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्यस्यत्रनामैकदेशे नामग्रहणम्' इति प्रवृत्तिनिमित्तम् इत्यर्थः। प्रवृत्तिनिमत्तत्वं च यञ्ज्ञानात् शब्दप्रवृत्तिः तत्त्वम्। तथा च शब्दानां प्रवृत्तिनिमित्तं चतुर्विधम्। एवं च उपाधेः (विशेषणस्य जात्यादेः) चातुर्विध्यात् शब्दस्यापि जातिशब्दो, गुणाशब्दः क्रियाशब्दः, यदृच्छाशब्दः इति चातुर्विधयम्।[१५]

काणादैः गुणत्वेन पठितेषु अणुत्वादिषु जातिव्यापकम् इति आशङ्क्यते। तेषां संङ्केतमात्र तत्। परमाणुलक्षणं तदता यदुक्तं तद् यथा-

**जलसूर्यमरीचिस्थं सूक्ष्मं यद्दृश्यते रजः।**
**तस्य षष्ठतमो भागः परमाणुः स उच्चते।।**

इत्यादिना परममहच्छब्दसङ्ग्रहः। वस्तुतस्तु परिमाणुव्यवहारः परमाणुत्वजातियोगादेव, अतो नातिव्यापकम्। विशेषाधानहेतुः गुणः इति अव्यापकं लक्षणम्। अणु महद्दीर्घं ह्रस्वं चेति कणादेन गुणत्वेन अभिमतानाम् आर्षत्वादीनां नित्यत्वेन विशेषाधायकत्वाभावात् इति आशङ्क्य तेषां वस्तुतो गुणत्वाभावात् अव्यापकत्वम् उक्तम। परमाण्वादीनाम् इति शब्दानामर्थे या प्रवृत्ति,[१६] सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवती। शब्दकोस्तुभकारमते तत्र यदृच्दाशब्दो नाम वक्त्रा स्वेचछया सन्निवेशितः।

स च अनेकविधः एकव्यक्तिसन्निवेशितो डित्थादिरेकः। तत्र न किञ्चित् अतिरिक्तं प्रवृत्तिनिमित्तम् आनन्त्यभिचारायोः अभावात्। किन्तु शक्यस्य एव अर्थस्य विषयताद्वयेन भानम्। तदुत्तरात्वादेः प्रकारत्वावच्छिन्नः स पदार्थः। यद्वा शब्दपराद् वाच्येऽर्थे वत्वादिः। एवं कादिशब्दानां कादीनाम् एकत्वमते तेषु शक्तिः। ततो डित्थपदार्थात् इव शक्यार्थे एवत्वादिः। एवं प्रदीपकारस्य विचारानुसारम् अर्थगतं प्रवृत्तिनिमित्तम् अपेक्ष्य यः शब्दः प्रयोक्तुः अभिप्रायेण प्रवर्तते स यदृच्छाशब्दो डित्थादिः। उद्योतकारस्य अस्मिन् विषये यो विचारः स यथा -

'शक्तिबोधनं प्रयोक्तुः अधीनम्। अन्यथा शब्दार्थसम्बन्धस्य अनित्यतापत्तिः। एवं च स्वेच्छया एकास्यां व्यक्तौ सङ्केत्यमानः शब्दो यदृच्छाशब्द इति बोध्यम्।'

गौतमेतरोक्तविभाजनानुसारं प्राणपदः तदविशेषाधानहेतुधर्मो गुणः परन्तु वैशेषिकदर्शनानुसारं परिमाणेऽपि गुणशब्दव्यवहारः। तत्र रूपमरसगन्धस्पर्शसङ्ख्यापरिमाणादिषु चतुर्विंशतिगुणेषु परिमाणस्यापि गणना कृता। अयं परिमाणः अणुमहदफभेदात् द्विविधः। पुनः उप-अणुपरिमाणो द्विविधः- अणुपरिमाणः परम-अणुपरिमाणः च। तथैव महत्परिमाणोऽपि द्विविध :- महत्परिमाणः परममहत्परिमाणश्च। एतेषु 'परमअणुपरिणामः केवलं परमाणुसञ्ज्ञकपदार्थे वर्तते। अयम् अणुपरिमाणः पारिमाण्डल्यपरिमाणनाम्नाऽपि प्रयुज्यते। परमाणुसंज्ञकपदार्थः पृथिव्यादीनां सूक्ष्मतमः अविभाज्योऽवयवः। अयं परमअणु-परिमाणः परमाणुरूपस्य सूक्ष्मतमदार्थस्य प्राणपदा धर्मः। अयं नास्ति विशेषाधानहेतुः। अतः परिभाषानसारं परमअणुपरिमाणस्य वाचकः परमाणुपरिमाणः जातिः। परन्तु वैशेषिकनये तत्र गुणशब्दव्यवहारः। अत्र किं कारणम्? इत्यस्य समाधनं ददता ग्रन्थकारेण उत्तरितं यत् परमअणुपरिमाणः वस्तुतः जातिशब्दः। लोके प्रसिद्धगुणवृद्ध्यादयः शब्दा अन्येषु अर्थेषु वर्तन्ते। परन्तु व्याकरणाशास्त्रे

तेषां प्रयोगः विशेषेषु अर्थेषु भवति। वैशेषिकानयेऽपि परमाणुपरिमाणस्य गणना गुणेषु कृता। उक्तसर्वेषां भेदानां तालिका अध एवं दीयते-




परम-अणुपरिणामात् प्रारभ्य परममहत्परिमाणादीनां प्राणप्रदत्वात् तेषां जातिशब्दत्वे औचित्स्वीकारोऽपि वैशेषिकदर्शने तेषां गुणमध्ये पाठात् तत्र गुणत्वं परिभाषया निर्धारितम्, यथा व्याकरणये परिभाषयोः नदीगुणवृद्ध्यादयो विशेषसांशब्दः निर्धारिताः।[१७]

ग्रन्थकारेणोक्तं यत् व्यक्तौ सङ्कतग्रहस्वीकारात् आनन्त्यव्यभिचारदोषौ आपततः। अतः व्यक्तौ सङ्केतग्रहं न मत्वा व्यक्तेः उपाधिभूतेषु जात्यादिषु धर्मेषु एद सङ्कतग्रहः स्वीकर्त्तव्यः। गोव्यक्तिषु एकैव अत एव तत्र सङ्केतग्रहस्वीकारे एकस्मिन्नेव स्थाने सङ्कतग्रहत्वात् सर्वासां गोव्यक्तीनां उपस्थितिः भवेत्। एवं शुक्लादिगुणः सर्वत्र एक एव। अतएव सकृत् सङ्केतग्रहे सर्वेषां शुक्लपदार्थानां तेनैव बोधो भवितुमर्हति। पृथक पृथक शक्तिग्रहो नावश्यकः।

आशङ्क्यते यद् हिम-पय-शङखद्याश्रेयेषु अनेकेषु शुक्लपदार्थेषु शुक्लत्वं भिन्नं भिन्न प्रतीयते। एवं ओदन-इष्टिपाकादिषु क्रियासु पाकादिक्रिया अपि भिन्ना भिन्ना भवति। अतएव एकत्र शुक्लपदस्य सङ्केतग्रहः व्यर्थः। यथा भिन्नासु गोव्यक्तिसु एकस्यां व्यक्तौ सङ्कतग्रहस्वीकारे आनन्त्यव्यभिचाराख्यौ दोषौ भवतः तथैव हिम-पयः शङखांदिषु आश्रितेषु शुलादिगुणेषु पाकादिक्रियासु भिन्नत्वेऽपि आनन्त्यव्यभिचाराख्यौ दोषौ भवितुमर्हतः। अतः एकत्र सङ्केतग्रहस्वीकारो व्यर्थ एव।

उपर्युक्तशङ्काया समाधानं ददता ग्रन्थकारेण इदं प्रतिपादितं यत् शुक्लादिगुणस्य पाकादिक्रियाणां भिन्नषु पदार्थेषु पृथक् पृथक् रूपं दृश्यते। तत्कारणं तेषां स्वाभाविको भेदो नास्ति अपितु तत्र उपाधिभेद एव। यथा-

एकमेव मुखं समतलेषु नतोदरेषु उन्नतोदरेषु च भिन्नेषु मुकुरेषु अथवा तैलजलादिषु भिन्नमेव प्रतीयते। परन्तु तेषाम् अयं भेदः पारमार्थिकः। स भेद औपाधिकः। अतः गुणक्रियादिषु सङ्केतग्रहस्वीकारे न कोऽपि दोषः अग्रे अयमेव विषयः प्रतिपादितः। स यथा–

"गुणक्रियायदृच्छानां वस्तुतः एकरूपाणाम् अपि आश्रयभेदाद् भेद इव लक्ष्यते। यथैकस्य मुखस्य खड्गमुकुरतैलोद्यालम्बनभेदात्।"

'सङ्केतितश्चतुर्भेदी जात्यादिः जातिरेव वा' इत्यत्र सङ्कतितस्यार्थस्य विषये १. जात्यादिः २. जातिरेव वेति पक्षद्वयं प्रदर्शितम्। अनयोः जात्यादिरयं पक्षः वैयाकरणानामथ च तेषाम अनुयायिनाम् आलङ्कारिकाणां वर्तते। 'जातिरेव वा' अयमपरः पक्षः मीमांसकानामस्ति। जात्यादिरूपप्रथमपक्षानुसारेण जातिगुणक्रियादृच्छारूपात्मकपदार्थस्य उपाधिभूतेषु चतुर्षु अर्थेषु सङ्केतग्रहो भवति। अस्य पक्षस्य आधारभूतं वचनं महाभाष्यकारस्य वर्तते- 'चतुष्टयी शब्दानां प्रवृत्तिः'। अस्माद् हेतोः इदं प्रमाणम् ग्रन्थकारेण उद्धृतम। तेन चतुर्णां शब्दानां प्रवृत्तिनिमित्त् उपपादितं च।

ततः 'जातिरेव वा' इत्ययं मीमांसानां अपरः पक्षो विद्यते। तेषां मते केवलं जातौ एव शक्तिग्रहः शब्दशक्तिर्वा। जातिरेव शब्दप्रवृत्तिनितमत्तं उचितम् इति तेषाम् इयं विचारणा। जातिशब्देषु यथा सङ्केतग्रहः तथैवतेषां मतानुसारं गुणक्रियायदृच्छानामपि जातौ एव सङ्केतग्रहः स्वीकुर्यात्।

अनुगत (एकाकार) प्रतीतिकारणं सामान्यं जातिर्वा। गुणक्रियायदृच्छाशब्देषु अपि जातिं अन्वेष्टुं शक्यते। यथा हिम-पयः शङ्खादिषु शुक्लपदार्थेषु 'शुक्लः शुक्लः' इति इयमनुगतप्रीतिः (एकारप्रतीतिः) भवति। अत्र शुक्लत्वसामान्यमेव कारणम्। जातिरेव सामान्यम्। अनुवृत्तिप्रत्ययहेतुः सामान्यमिति तल्लक्षणम्। यथा दशघटव्यक्तिषु 'घटः घटः' इत्यस्य अनुवृत्तिप्रत्ययस्य कारणं शुक्लत्वसामान्यमेव तथैव दशस्थानेषु विद्यामानेषु शुक्लव्यक्तिषु 'शुक्लः' इतीयमनुगतप्रीतिः (एकाकाप्रतीतिः) भवति, शुक्लत्वसामान्यं तत्। एवं च गुडतण्डुलादीनां पदार्थानां पाके विद्यमानायां पाकक्रियायां 'पाकः' इति अस्याः अनुगतप्रतीतेः कारणपरकत्वसामान्यमिति।

चदृच्छाशब्दाः विभिन्नैः जनैः उच्चार्यन्ते। प्रतिक्षणं च परिणामहेतुत्वात् विद्यमानेषु तेषाम् अर्थेषु अपि सामान्यम् अन्वेष्टुं शक्यते। अतएव जात्यातिरिक्तेषु। अवशिष्टेषु त्रिषु अपि जातौ एव सङ्केतग्रहः स्वीकार्यः। जातिरेव तेषां शब्दानां प्रवृत्तिनिमित्तं बोद्धव्यम्। सामान्यलक्षणे सामान्यमेव अनुवृत्तिप्रत्ययस्य कारणं भवति। तस्य नित्येषु अनेकेषु चापि समवेतत्वम्। 'नित्यत्वे सत्यम् अनेकसमवेतत्वं सामान्यम्' इतीदं 'सामान्य' स्य अन्यल्लक्षणम्। तदनुसारं शुक्लदीनां सामान्यत्वे न किमपि काठिन्यम् अनुभूयते भिन्नेषु पदार्थेषु विद्यमानस्य शुक्लरूपस्य भिन्नत्वात्। जात्यादिपक्षे-अनेकेषु पदार्थेषु विद्यमानानां शुक्लादिगुणानाम् एकरूपत्वे मीमांसकान विश्वसन्ति। तेषां मते भिन्नेषु च पदार्थेषु विश्वसन्ति। तेषां मते भिन्नेषु च पदार्थेषु च पदार्थेषु विद्यमानानां शुक्लादीनाम् अभिन्नत्वम् अनुभवविपरीतं तेषां शुक्लत्वप्रतीतौ भेदत्वात् अतः तेषां भिन्नत्वे न कोऽपि सन्देहः। तेषु अनुगतप्रतीतिहेतुत्वात् शुक्लत्वसामान्यं समीचीनम्। इत्थं पाकादिक्रियासु अपि पारमार्थिकभेदस्य विद्यमानत्वात् तासु पाकत्वादिजातेः प्रवृत्तिनित्तित्वमुचितमेव। अतः जातिशब्दातिरिक्त्योः गुणाक्रियाशब्दयोः जातित्वमेव प्रवृत्तिनिमित्तम् इति मत्वा तत्रैव सङ्केतग्रहणम् उचितमिति सिद्ध्यति।

परन्तु सामान्य (जाति) लक्षणे 'अनेकसमवेतत्व' स्य समावेशात् यदृच्छाशब्देषु जातेः प्रवृत्तिनिमित्तवे काठिनन्यमनुभूयते। तत्र किं काठिन्यम्? तदुच्यते-यदृच्छाशब्दाः अनेकेषां जनानां न वाचकाः, ते केवलं रूढाः। तेषु 'अनेकसमवेतत्वस्य न' विद्यमानात् जातेः कल्पनां कथं कुर्यादिति। जातित्वं तु अनेकासु व्यक्तिषु अनेकसमवेतधर्मत्वम्।

अथ च यदृच्दाशब्देषु तत् स्फोटरूपात्मकम् अपि। तस्या वाच्यार्थो व्यक्तिविशेषः। अस्यां स्थितौ तत्र जातिं कथं स्वीकुर्यात्? अस्याः शङ्कायाः समाधानं दददूभिः मीमांसकैः इदं प्रतिपादितं यत् उच्चारकव्यक्तिभेदात् शब्देषु प्रतिक्षणं विद्यमानां वृद्धि ह्रासरूपपरिवर्तनमाधारीकृत्य वा व्यक्तिभेदो भवति। एतदुक्तं भवति-बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च अनेकत्वं स्वीकृत्य तत्र अनुगतप्रतीतिकारिणी डित्थादिकल्पनां कर्तुं शक्यते। एवं 'प्रतिक्षणं परिणामिनो हि सर्वे भावाः ऋते चितिशक्तेः' इत्ययं सिद्धान्तः।

तदनुसारं यदृच्छाशब्दाः प्रतिक्षणं परिवर्तन्ते। अस्मात् परिवर्तनात् तेषां वाच्यार्थाः व्यक्तीष्वपि भिद्यन्ते। तत्र अनुगतप्रतीतिकारणत्वं जातित्वं इति स्वीकर्तुं शक्यते। अतः यदृच्छाशब्दानां संङ्केतग्रहः जातौ एवंति बोद्धव्यम्।

इत्थं मीमांसकाः केवलं जातौ एव सङ्केतग्रहः स्वीकुर्वन्ति। कारिकायां 'जातिरेव वा' इति लिखित्वा तेषामेव मीमांसकानां मतं ग्रन्थकारेण प्रदर्शितम्।[१८] ग्रन्थकारस्य अनभीष्टं मतमिदम्। सङ्केतगेहविषयको नैयायिकविचारः उपर्युक्तानाम् अन्येषां विचारेभ्यो भिन्नः। तेषं मते सङ्कतग्रहो न केवलं जातौ न केवलञ्च व्यक्तौ। केवलं व्यक्तौ सङ्तग्रहस्वीकारात् आनत्त्यवभिचारदोषौ भवतः। केवलं जातौ सङ्केतग्रहस्वीकारे शब्दात् केवलं जात्युपस्थितेः व्यक्तिभानं शब्दात् न भवितुं शक्यते। जातौ शक्तिं स्वीकृत्य यदि व्यक्तिभानम् आक्षेपात् अंगींकारे शब्दाबोधे तस्य अन्वयः न सम्भवेत्। 'शाब्दी हि आकाङ्क्ष शब्देनैव पूर्यते'। इति अयं सिद्धान्तः। अस्य सिद्धान्तस्यानुसारेण शब्दशक्तिलभ्यस्य अर्थस्यैव श्शाब्दबोधेऽन्वयः भवति नान्यत्र। आक्षेपलभयस्य अर्थस्य शाब्दबोधे नान्वयः। अतएव नैयायिकमतेन सङ्केतग्रहः केवलं व्यक्तौ केवलं जातौ वा न स्वीकर्तुं शक्यते। अतः व्यक्त्याकृतिजातयस्तु पदार्थः (न्यायसूत्र. २.२.६८) नैयायिकसिद्धान्तोऽयम्। अयमेव सिद्धान्तः ग्रन्थकारेण 'तद्वान् पदार्थः' इति लिखित्वा प्रदर्शितः। तद्वान् जातिमानिति।

अर्थात् जातिविशिष्टव्यक्तौ एव सङ्केतग्रहः स्वीकारणीय इति नैयायिकमतम्। अस्मिन् विषयै बौद्धदार्शनिकानाम् अपि पृथक मतम्। तन्मते शब्दस्य अर्थः अपोहः। 'अतद्व्यावृत्त्विं 'तद्भिन्नत्वं' वा अपोहत्वम्। 'क्षणभङ्गवाद' बौद्धानां प्रथम सिद्धान्तः। तन्मते सर्वे पदार्थाः क्षणिकाः। इदमेव कारणं बौद्धाः सामान्यं न स्वीकुर्वन्ति सामान्यस्य नित्यत्वात्। तेषां मते अनुगतप्रीतिहेतुत्वम् अपोहत्वम् 'अपोह' शब्दः बौद्धदर्शने पारिभाषिकः।

दशाघव्यावृत्तित्वम्' घटभिन्नभिन्नत्वं वा। प्रत्येकं घटः अघटः घटभिन्नः जगतो भिन्न इति। अतः तत्र घटः इति इयम् एका प्रतीतः। अतएव बौद्धमते अपोहशब्दोऽर्थवान् इति। तत्रैव सङ्केतग्रहोऽङ्गीकरणीयः। बौद्धमतस्यास्य सङ्केतः ग्रन्थकारेण 'अपोहो वा शब्दार्थः' इति लिखित्वा कृतः। सङ्केतग्रहविषयाकाणां सर्वेषां पाक्षाणां विवेचनं तत्र विस्तरभिया ग्रन्थगौरवभयात् च समासेननैव कृतम्।[१९]

अत्र सङ्केतग्रहविषयकात्मकानि चत्वारि मतानि प्रदर्शितानि ग्रन्थकृता। प्रथमेन मतेन सह 'महाभाष्यकारः', द्वितीयेन सह 'इति अन्ये', तृतीयेन चतुर्थेन च सह 'कौश्चित्' इति पदत्रयं तेन प्रयुक्ततम। नरसिंहादिटीकाकाराणां

मते एतेषु मतेषु न किमपि मतं ग्रन्थकारेण अभिमतम्। परन्तु नरसिंहार्दीनाम् एव कथनं अगर्माचीनम् काव्यशस्त्रे प्रायः व्याकरणनयस्य दार्शनिकसिद्धान्ताः स्वीकृताः। स्वयं ग्रन्थकारेण 'बुधैः' वैयाकारणैः' इत्यादि लिखित्वा अस्य सिद्धान्तस्य पुष्टिः कृता। अत एव अत्रापि वैयाकरण- सिद्धान्तानुसारं जातिगुणक्रियायदृच्छाशब्देषु सङ्केतग्रहोऽभीष्ट। सिद्धान्तः। महाभाष्यकारस्योल्लेखः तेन स्वमतं प्रमाणयितुं कृतः। एतेन महाभाष्यकारस्यैव मतस्य समर्थनं भवति।

## सन्दर्भ - संकेताः

१. (i) शबदार्थौ सहितौ काव्यं गंद्य पद्यं च तद् द्विधा। - भामहः, १.१६

(ii) काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोः वर्तते। - वामनः, १-१

(iii) शब्दार्थौ काव्यम्। - रुद्रटः, काव्यालङ्कारः, २.१

(iv) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्। हेमचन्द्रः

(v) शब्दार्थौ निर्दोषो प्रायः सालङ्कारौ च काव्यम्। - वाग्भटः

(vi) गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ। - विद्यानाथः, प्रतापरुद्रः च

(vii) शब्दार्थौ वपुरस्य विबुधैः आत्माभ्यधायि ध्वमिः। विद्याधरः, एकावलीः

२. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।

वाक्यस्य शेषात् विवृतेः वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।

इति दाक्ष्यादिशब्दानां दक्षाद्यपत्येषु शक्तिग्रहो व्याकरणात्।

गोसदृशापिण्डदर्शनात् गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यस्मरणे अयं गवयपदवाच्य

इति उपमानत्। "विनायको विघ्नराजद्वैमतातुरगणाधिपः" इत्यादौ कोषात्, आप्तोदेशात् प्रामाणिकवचनात्।

३. यस्यां गोव्यक्तौ सङ्तग्रहः स्वीकृतः तदतिरिक्तायाः गोव्यक्तेः गोशब्दाद् मानं न स्याद इति व्यभिचारः इति विवरणकाराः। शक्तिग्रहाविषयी भूतसयापि शाब्दबोधविषयतवे व्यभिचारेण शक्तिग्रहस्य कारणतानुपपत्तेः इत्यर्थः। यद्वा व्यभिचारात् व्यभिचारप्रसङ्गात्।

संड्केतग्रहाविषत्वाविशेषे अश्वादेरपि भानप्रसङ्गात् इत्यर्थः इति नरसिंहठक्कुरः।

-काव्यप्रकाशटीका, बालबोधिनी, पृ. ३२-३३, भण्डारकरप्राच्यशोधसंस्थान्, पुणे, १६८३

४. (i) चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दाः गुणाशब्दाः क्रियाशब्दाः यदृच्छाशब्दाः चतुर्थाः। - म. भा. झलृक सूत्रे।

(ii) महाभाष्दीपिका- प्रथमाध्यावस्य प्रथमपाद, द्वितीयाह्निकम्) ऋलृक् सूत्रे

५. (i) सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च।।

जातिः गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधनहेतुः सिद्धो वस्तुधर्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः

कृष्णगवादिभ्यो व्यावर्तयन्ति। एकव्यक्तिवाचिनो हरिहरडित्यडवित्यादयः। क्रिया साध्यरूपा वस्तुधर्माः। एषु हि अधिश्रयणा-वश्रयणनतादिपूर्वापरीभूतो व्यापारकलापः पाकादि शब्दवाच्यः एषु एव हि व्यक्तेः उपाधिषु सङ्केतो गृह्यते। न व्यक्तौ। आनन्त्यवभिचारदोषापातात्।

– साहित्यदर्पणः द्वितीयः परिच्छेदः कारिका (४)।

(ii) व्यक्तिविवेके राजानमहिमभट्टेनापि शब्दचलुष्टयवादः स्वीकृतः। यथा –

'तत्र सत्वप्रधानानि नामानि। तानि अपि बहुप्रकाराणि सम्भवन्ति। जातिगुणक्रियाद्रव्याणां तत्प्रवृत्तिनिमित्तानं बहुत्वात्। तद्यथा घटः पट इति जातिशब्दः। शुक्लो नील इति गुणशब्दः। पाचकः पाठक इति क्रियाशब्दः। दण्डी विषाणीति द्रव्यशब्दः।'

६. उक्तं च प्रदीपे "ननु आयं घिभागः अनुपपन्नः जात्यादेः असङ्केकतितत्वात् आद्यसङ्केतग्रहस्य व्यवहारमात्राधीनतया प्रवृत्तिनिवृत्तियोग्यातायां व्यक्तौ एव तदौचित्यात्" इति। बालबोधिन्याम् उद्धृतः भाष्यप्रदीपस्यांशः।

७. अर्थो दुग्धादिरूप प्रयाजनं तस्मै या क्रिया गोरानयादिरूपा तत्कारितया तन्निर्वाहकत्वेन इत्यर्थः। उक्तं च अन्यत्रापि, अर्थक्रिया तां करोति तां करोति शीलम् अस्याः सा अर्थक्रिकारिणी तस्याः भावो अर्थक्रियाकारितातया इत्यर्थः। यथ घटो जलस्य आहरणरूपां क्रियां करोति इति घटस्य अर्थक्रियाकारित्वम् इति। अर्थक्रियेत्युपपदे करोतेः णिनिप्रत्ययः। -बालबोधिनी, पृ. ३२, भण्डारकरप्राच्यशोसंस्थान, पुणे, १९८३।

८. प्रवृत्तिनिमित्तवृत्योः योग्या विषयीभूता व्यक्तिरेव जात्याद्याश्रयः एव, न तु जात्यादिः इत्यर्थः। इति तत्रैव व्यक्तौ एव। सङ्केतो युक्तः इति शेष। तदेव

९. आनन्तानां गोव्यक्तीनां एकपदोपस्थित्यसम्भवेन तत्र सङ्केतो ग्रहीतुं न शक्यते।

-बालबोधिनी, पृ. ३२, भण्डारकरप्राच्यशोधनसंस्थान पुणे, १९८३।

१०. "यस्यां गोव्यक्तो सङ्केतग्रहः स्वीकृतिः तदतिरिक्तायाः गोव्यक्तेः गोशब्दात् भानं न स्यादिति व्यभिचारः" – इति विवरणकाराः "शक्तिग्रहाविषयी भूतस्यापि शाब्दबोधविषयत्वे व्यभिचारेण शक्तिग्रहस्य कारणतानुपपत्ते इत्यर्थः।। यद्वा व्यभिचारात् व्यभिचारप्रसङ्गात्।

सङ्केतग्रहाविषयत्वाविशेषे अश्वादेरपि भानप्रसङ्गात् इत्यर्थः" इति। नरसिंहठक्कुराः।

"सङ्केततिस्यैव शाब्दबोध इति नियाभावप्रसङ्गात् इत्यर्थः इति प्रभाकृतः।

११. विषमः पदार्थः। प्रवृत्तिनिमितम् इति यावत्। तस्य विभागे-भेदः न प्राप्नोति, न स्यात् इत्यर्थः। तथाहि। गोरूपजातिमान् शुक्लरूपगुणवान्, चलनरूपक्रियावान् डित्थनामायमिति तात्पर्येण 'गौः शुक्लः चला डित्थः' इति प्रयोगे गवादि इति चतुर्भिः अपि शब्दैः एक सैव गोव्यक्ति उच्यते, इति प्रवृत्तिनिमित्तस्य भेदो न स्यात्। व्यक्तिवादिमते व्यक्तेरेव प्रवृत्तिनिमित्तत्वात्। तस्याश्च व्यक्तेः प्रकृते एकत्वादिति। तथा च विषयविभागाभावे गवादिशब्दानां 'घटः कलश' इत्यादीनाम् एव एकार्थवाचकत्वेन पर्यायतया सहप्रयोगो न

स्यात्। उपाधिवादिमते तु जातिगुणक्रियायदृच्छानां प्रवृत्तिनिमित्तनां भेदेन गवादिशब्दानां पर्यायत्वाभावात् भवति सहप्रयोगः इति भावः। आप्नोतेः सकर्मकत्वे अपि अत्र अर्थान्तरवृत्तित्वाद् अकर्मकत्वं 'धाताः अर्थान्तरं वृत्तेः' इति वचनात् इति।

('धातोः अर्थान्तरे वृत्तेः धात्वर्थेन उपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।।'' इति धातोः अथान्तरे वृत्तेः यथा- वहति भारम्। नदी वहति। स्यन्दते इति अर्थः। धात्वर्थेन उपसङ्ग्रहात् यथा-जीवतित्रनर्तनं करोति इत्यर्थः।

प्रसिद्धिः यथा-मेघो वर्षति। अत्र जलमिति कर्मप्रसिद्धम्। कर्मणः अविवक्षतो यथा-
'हितात्र यः संशृणुते स किं प्रभु। अत्र हितमिति कर्म, अविवक्षित इति बोध्यम्)
-बालबोधिनी, पृ.३३, भं) प्रा. शो. पुणे, १९८३

१२. उपाधिश्च द्विविधः वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च। वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः पदार्थस्य प्राणपदो विशेषाधानहेतुश्च। तत्र आद्यो जातिः। उक्तं हि वाक्यपदीये- 'न हि गौः स्वरूपेण गौः नाप्यगौः गोत्वादिसम्बन्धाच्च गौः' इति।
-काव्यप्रकाशः द्वितीयोल्लासः।

१३. द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। पूर्वापरीभूतावयवः क्रियारूपः। -तदेव

१४. डित्थादिशब्दानाम् अन्त्यबुद्धिनिर्ग्राह्यं संहिताक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिषु अर्थेषु उपाधित्वेन सन्निवेश्यते इति सोऽयं संज्ञारूपो यदृच्छात्मक इति।
- काव्यप्रकाशः द्वितीयः उल्लासः

१५. ''गौः शुक्लः चलो डित्थः इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः'' इति महाभाष्यकारः (ऋलृक् सूत्रे)। काव्यप्रकाशः द्वितीयोल्लासः तत्र मम्मटाचार्येण उद्धृतोऽशः।
(चतुष्टयी शब्दानां प्रवृत्तिः - जातिशब्दा, गुणशब्दाः, क्रियाशब्दाः यदृच्दाशब्दाश्चतुर्धा।।
- व्याकरणमहाभाष्याम् १ अ. १- पाद, प्रत्याहारह्विनिके ऋलृक्।।२।।

१६. व्याकरणमहाभाष्यम् १.१.२ प्रत्याहाराह्निकम्

१७. परमाण्वादीनान्तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्।
-काव्यप्रकाशः, द्वितीयोल्लासः, ८ का०, १० सू.

१८. हिमपयः शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लदिषु यादृशेन शुक्लः इति अभिन्नाभिधान- प्रत्योत्पत्तिः तत् शुक्लादि सामान्यम्। गुडतण्डुलादिपाकादिषु एवम् एव पाकत्वादि। बालवृद्धशुकाधुदीरितेषु डित्थादिशब्देषु च, प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तम् इति अन्ये.....।
-काव्यप्रकाशः, द्वितीयोल्लासः, का. ८, सू. १०।

१९. तद्वानपोहो वा शब्दार्थः। कैश्चिदुक्तं इति ग्रन्थगौरवमयात् प्रकृतानुपयोगात् न दर्शितम्। -काव्यप्रकाशः, द्वितीययोल्लासः, का. ८, सू. १०।

■ पता : वाचस्पति (दि. वि.)

# संस्कृतभाषाशिक्षणे अर्थग्रहणम् अद्यतन-आवश्यकता

■ सोहन लाल पाण्डेय

'अर्थग्रहणम्' पठनस्य श्रवणस्य वा माध्यमेन जायमाना एका परिणामात्मिका-व्यवहारपरिवर्तनात्मिका च प्रक्रिया वर्तते। अस्याः प्रक्रियायाः पञ्च-सोपानानि भवन्ति-

१. **प्रत्यभिज्ञानम्** – अस्याः प्रक्रियायाः प्रथमं सोपानमिदम्। प्रत्यभिज्ञानं यान्त्रिकपक्षमपि भवति। पठनस्य श्रवणस्य परिस्थित्यामिदं स्वतः जाग्रतं भवति। वयं प्रत्येकम् अक्षरस्य, प्रत्येकं शब्दस्य, प्रत्येकं वाक्यस्य प्रत्यभिज्ञानं कुर्मः। प्रत्यभिज्ञानमर्थग्रहणस्य प्रथमसोपानवत् कार्यं करोति। प्रत्यभिज्ञानं विना अर्थग्रहणं नैव भवति।

२. **अर्थावबोधः** – अर्थग्रहणस्य प्रक्रियायाः द्वितीयं सोपानमिदं यत्र पाठकः श्रोता वा कस्यचित् शब्दस्य, वाक्यस्य प्रत्यभिज्ञानानन्तरं मनसि व्याख्यायाः विश्लेषणस्य माध्यमेन अर्थस्य अवबोधं करोति। अत्र अस्मिन् सोपाने चिन्तनं मननं च प्रचलति यस्य माध्यमेन अर्थस्य अवबोधो भवति। किन्तु अर्थग्रहणम् अस्मिन् सोपाने पूर्णतां नैव प्राप्नोति।

३. **मूल्याङ्कनम्** – प्रत्यभिज्ञान-अर्थावबोधानन्तरम् अर्थग्रहणस्य प्रक्रियायाः तृतीयं सोपानमायाति तदस्ति मूल्याङ्कनम्। अर्थग्रहणे अस्य सोपानस्य महानुपयोगिता वर्तते। श्रोता पाठको वा ग्रचितस्य विचारस्य उपयोगितायाः औचित्यस्य, विश्वसनीयतायाः च परीक्षणं करोति इदं मूल्याङ्कनम्। मूल्याङ्कनस्य माध्यमेन श्रोता पाठको वा विचारान् अभिलषति निन्दति च।

४. **प्रतिक्रिया** – अर्थग्रहणस्य प्रक्रियायाः चतुर्थमिदं सोपानम्। यदा पाठकः श्रोता वा कस्यचित् विचारस्य पठन श्रवणं वा करोति तदा तस्य विचारस्य मूल्याङ्कनकाले तस्य मनसि भावात्मकप्रतिक्रिया अपि भवति। कुत्रचित् सः विचारेण साकं प्रभावितो भवति, कुत्रचित् आनन्दं द्वेषं रूचिमरूचिं सन्तोषमसन्तोषं वा प्रकटयति। प्रतिक्रिया च पूर्वानुभवानां माध्यमेन संचितज्ञानस्य माध्यमेन प्रभाविता अपि भवति।

५. **अनुप्रयोगः** – इदं पञ्चमं सोपानमर्थग्रहणस्य प्रक्रियायाः अन्तिमं सोपानं चास्ति। अर्थग्रहणं तदैव सार्थकं भवति यदा श्रोता पाठको वा पठितानां श्रुतानां विचाराणाम् अन्यस्मिन् प्रसङ्गे अनुप्रयोगं करोति। तस्य व्यवहारे किमपि अपेक्षितं परिवर्तनं दृश्यते यस्य माध्यमेन स आत्मतोषमनुभवन्ति च।

वस्तुतः अयं नूतन दृष्टिकोणः पाश्चात्य दृष्टिकोणः। अस्य विचारस्य उत्पत्ति पाश्चात्यराष्ट्रेषु विशेषतः अमेरिकादेशे विंशति शताब्द्या अन्तिमेषु वर्षेषु अभवत्। भारतदेशे अस्य विचारस्य दृष्टिकोणस्य प्रसारः आंग्लभाषायामभवत्। हैदराबादनगरे "Central Institute of English and foreign Languages" यदस्ति तस्य माध्यमेन भारते अर्थग्रहणस्य विचारस्य प्रसारः अभवत्। अनेनैव माध्यमेन केन्द्रीयमाध्यमिकशिक्षाबोर्ड इत्यस्य आंग्लभाषायाः पुस्तकेषु कानिचित् परिवर्तनानि अभवन्। विंशतिशताब्द्या अन्तिमे दशके आंग्लभाषायाः पुस्तकेषु गहनाध्ययनस्य परम्परायाः अर्थग्रहणस्य (Comprehension) दृष्ट्या समावेशो अभवत्।

राष्ट्रियशैक्षिकानुसन्धानपरिषद् इत्यस्याः संस्थायाः माध्यमेन एकं प्रकाशनमभवत् तदस्ति–*"Concept and Meansurement of language Comprehensibility-Emerging Trends." and Towards a Model Text Book Comprehensibility."*

आंग्लभाषायामधुना पाठ्यपुस्तकानि अर्थग्रहणाधारितानि सन्ति। अस्य माध्यमेन बालकाः विस्मृतानां पाठानां गहनमध्ययनं कुर्वन्ति, ते प्रत्यभिज्ञानं कुर्वन्ति, चिन्तनं मननं कुर्वन्ति, समुचितस्य अर्थस्य अवबोधं कुर्वन्ति मूल्याङ्कनं कुर्वन्ति, अनुप्रयोगं च कुर्वन्ति।

अस्याः प्रणाल्याः माध्यमेन अहं मन्ये आंग्लभाषाविद्यालयेषु छात्राः न केवलं भाषायां सफलाः अपितु ते भाषायाः माध्यमेन विविधेषु विषयेषु अपि कुशलाः भवन्ति। हन्त ! अस्याः प्रणाल्याः उपयोगः भारतीयभाषासु नास्ति, ना भवत्। छात्राणां कृते अधुनाऽपि गहन पठनस्य कृते विशदाध्ययनस्य कृते च पाठ्यपुस्तकानामभावो वर्तते। वयं लघुलघुपाठानां विशदव्याख्यायाः माध्यमेन अध्यापककेन्द्रित, विषयवस्तुकेन्द्रित शिक्षाप्रणाल्याः माध्यमेन आत्मानं धन्यं मन्यामहे। अस्माकं पाठ्यपुस्तकानां लेखकाः पाठ्यपुस्तकेषु किमवगमनीयमिति सर्वं लिखन्ति। तेषां परिचर्चा अत्र अनावश्यकी वर्तते।

उत्साहस्य उमंगस्य इयं वार्ता यत् आंग्लभाषाया अर्थग्रहणविषयकं कार्यमवलोक्य भारतीयभाषासु कतिपय-अनुसन्धातारः अस्मिन् विषये कार्यं कृतवन्तः। मुख्यतः हिन्दी-भाषायां मराठी-गुजराती भाषायां च कतिपयानि कार्याणि एकविंशशताब्दस्य प्रथमदशके अभवन्। तेषां प्रयोगात्मककार्याणाम् उत्साहजनकाः परिणामाः आगताः। पी.के. गौर नामाख्यः विद्वान् अम्बेडकरविश्वविद्यालय आगरानगरतः अर्थग्रहण-निष्पत्ति इत्यनयोः विशदमध्यनं हिन्दीभाषायाः छात्राणामुपरि कृतवान्[१]। के.जे. पटेल महोदयः सरदारपटेलविश्वविद्यालयः गुजराती भाषायाः छात्राणामुपरि एकं विशदमध्ययनम् अर्थग्रहणस्य कृते कृतवान्[२]। तस्य अध्ययनस्य परिणामाः अतीव उत्साहास्पदाः सन्ति।

हिन्दी-संस्कृत-आंग्लभाषायाः एकं सम्मिलितमध्ययनं एस. गुप्ता महोदयः अर्थग्रहणस्य तुलनात्मकमध्ययनं कृतवान्। इदमध्ययनं जम्मू विश्वविद्यालयात् कृतमस्ति[३]।

विशदार्थग्रहणस्य अध्ययनस्य पद्धत्याः विकासार्थं देशस्य विविधेषु विश्वविद्यालयेषु कतिपयानि एव कार्याणि अभवत्। इयं परम्परा अधुनाऽपि संस्कृतस्य क्षेत्रे नागता। यद्यपि प्राचीनकाले अर्थग्रहणं शिक्षणस्य अनिवार्यतत्वमासीत्।

तैत्तरीयप्रतिशाख्ये लिखितं यत्-

**गुरुत्वं लघुतासाम्यं ह्रस्वदीर्घप्लुतानि च**
**लोपागमोविकारश्च प्रकृतिविक्रमः क्रमः।**
**स्वरितोदात्तनीचत्वं श्वासोनादस्थोभयम्,**
**एतत्सर्वं तु विज्ञेयं छान्दोभाषाम धीयता।**
**पदक्रमविभागज्ञा वर्णक्रमविचक्षणः**
**स्वरमात्राविशेषज्ञो गच्छेदाचार्य संसदम्।।**[४]

निरूक्ते लिखितमस्ति-

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्केधौ न तज्ज्वलति कर्हिचित्।।**[५]

वैदिककाले अर्थग्रहणस्य विषये मान्यता आसीत् यत्-

**दुष्टः शब्दः स्वरतो वर्णतो वा,**
**मिथ्या प्रयुक्तो न तमर्थमाह,**
**सवाग्वज्रो यजमानं हिनस्ति,**
**यथेन्द्रशत्रु स्वरतोपराधात्।।**[६]

पतञ्जली महाभाष्ये-

एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गेलोके च कामधुक् भवति।।[७]

संस्कृतभाषायां शिक्षणस्य कृते अपि अस्याः प्रणाल्याः अनुसरणस्य आवश्यकता वर्तते। विगतदशके अस्याः प्रणाल्याः माध्यमेन पाठ्यपुस्तकानां संरचना तु न जाता किन्तु अस्याः प्रणाल्याः विकासस्य कृते कतिपयानां शोधग्रंथानां सर्जनमभवत्। तेषु अस्य जनस्य पुस्तकद्वयस्य लेखनम् अर्थग्रहणस्य परम्परायाः विकासस्य दृष्ट्या प्रारंभिकं कार्यमस्ति किन्तु इदं कार्य विगतदशके महत्त्वं प्राप्नोति यतोहि अस्य माध्यमेन पाठ्यपुस्तकानां संरचनायाः कार्य प्रचलिष्यति। ''अर्थग्रहणं प्रति प्रत्यावर्तत'' इत्यस्य विचारस्य संस्कृत-शिक्षणे अपि समावेशः भविष्यति। मम पुस्तकद्वयम् अस्ति-

1. "Sanskrit Reading Ability and measurement."
2. "Towards Sanskrit Comprehensibility."

इत्यस्य माध्यमेन अयं जनः विगतदशके संस्कृतस्य क्षेत्रे अर्थग्रहणविषयकं किमपि कार्यं कृतवान्। अस्य कार्यस्य समर्थनस्य साम्प्रतिकं आवश्यकता अस्तीति।

## सन्दर्भग्रंथा :-


1. Strang Ruth, "Diagnostic Teaching Reading" Megraw Hill Book Co. Newyork 1994
2. Maxwell H.N. "Are you a Successful Rrader,' Halt Rinehart, 1998
3. Pandy SL, "Sanskrit Reading Ability and Measurement Radha Publication New Delhi 2006
4. Pandy SL, "Towards Sanskrit Comprehensibility, Radha Prakashan New Delhi 2010
5. Gaur PK, "A Psychologeal study of Comprehensility in Relation to Avhievement. Ph.D, B.R. Ambedkar University 2001
6. Patel K.J, "An Investigation into listening Comprehension in Gujarati pupils Ph.D. S.P.V. 2002

1. Gaur PK, "A Psychologeal study of Comprehensility in Relation to Avhievement. Ph.D, B.R. Ambedkar University 2001
2. Patel K.J, "An Investigation into listening Comprehension in Gujarati pupils Ph.D. S.P.V. 2002
3. Gupta SK, "Factors Understanding on Comprehension in second and third language. "Ph.D.(Edu) Jammu Uni 2003.

४. तेत्तरीयप्रतिशाख्ये २४/१४/५६
५. निरूक्तम् १/६
६. पाणिनीयशिक्षा ।।५२।।
७. पतञ्जलीमहाभाष्ये।।


■ पता :

# ऋग्वेद में मानवाधिकार की अवधारणा

■ शशि तिवारी

मानव प्रकृति की सर्वाधिक महत्त्वपूर्ण सृष्टि है। सभी मानवों का समुचित एवं पूर्ण विकास हो, इसके लिए आधुनिक विधिशास्त्र मानवाधिकारों की बात करता है। पिछले लगभग ८०० वर्षों से यदा-कदा ब्रिटेन द्वारा मानव के अधिकारों की प्रारम्भिक चर्चा होती रही। अनन्तर इस विचार का उत्तरोत्तर विकास हुआ और पहली बार विधिवत् विश्वस्तर पर 'मानवधिकारकी सार्वभौम घोषणा' १० दिसम्बर, १९४८ को संयुक्तराष्ट्र की महासभा में गयी। तब से विश्व के विभिन्न भागों में मानवाधिकार के स्वरूप, महत्त्व और अनिवार्यता पर विस्तृत चिन्तन और विश्लेषण प्रारम्भ हुए। विश्व के प्राचीनतम देश भारतवर्ष की महान् एवं विपुल ज्ञाननिधि 'वेद' की पुरातनता निर्विवाद है। इसमें सन्देह नहीं, कि वेद मानवमात्र के लिए देश, काल और स्थान की अपेक्षा के बिना आदेश और उपदेश करते हैं, जिससे उसका सर्वाधिक उत्कर्ष हो सके। इसीलिए भारतीय परम्परा वेद को परम प्रमाण मानती है। वैदिक मन्त्र की विशुद्धता और तद्रूपता उनके माहात्म्य को बढ़ा देती है। ऋषि-प्रज्ञा को इसका समस्त श्रेय जाता है, जिससे वेद को यथावत् सुरक्षित रख है। 'सर्वं वेदात्प्रसिध्यति', 'वेदोऽखिलो धर्ममूलम्' जैसे प्रसिद्ध वचनों से ध्वनित होता है कि ज्ञानविज्ञान के सभी पक्षों का आदिस्रोत वैदिक मन्त्र हैं। इसी दृष्टिकोण से इस पत्र में यह जानने का प्रयास किया जा रहा है कि आधुनिक विचार मानवाधिकार के विषय में प्राचीनतम वैदिक ग्रन्थ ऋग्वेदसंहिता ने क्या मानक नियम स्थापित किये है। वैदिक मन्त्रों के समालोचनात्मक विश्लेषण द्वारा ही तत्सम्बद्ध सिद्धान्तों को खोजा जा सकता हैं।

## मानवाधिकार पर वैदिक दृष्टि

मानवाधिकार पर वैदिक दृष्टिकोण का आकलन करने पर यजुर्वेद का एक मन्त्र 'पञ्चस्वन्तः पुरुषऽआ विवेश' अर्थात् 'पाँचों के भीतर पुरुष प्रविष्ट हुआ है'[१] – इस पृष्ठभूमि में व्याख्यात किया जा सकता है। व्यक्ति, परिवार, समाज, राष्ट्र और विश्व-इन पंच आयामों पर व्यक्ति का उत्तरोत्तर विकास और सम्पर्क होता है। मनुष्य इन पाँचों स्तर पर अपना प्रभाव छोड़ता है और इन पाँचों से प्रभावित भी होता है। मानवाधिकार के सम्बन्ध में वेद का जो एक दूसरा दृष्टिकोण उभर कर सामने आता है, वह है कि 'अधिकार केवल कर्तव्य से उपजते हैं'। ऋग्वेद और अथर्ववेद के एक मन्त्र मे वधु को आशीष दिया गया है कि 'पति के घर में सम्राज्ञी की तरह रहो, श्वसुर, सास, ननद और देवर पर शासन करो'।[२] साथ ही वह मन्त्र उल्लेख्य है, जिसमें वधु को पति के घर में श्वसुर और अन्य सम्बन्धियों की निष्ठापूर्वक सेवा करने का आदेश दिया गया है।[३] जीवन में लक्ष्यप्राप्ति के लिए कर्तव्याकर्तव्य का निर्धारण वैदिक ऋषि के नीतिविश्लेषण का प्रधान तत्त्व है। यज्ञानुष्ठान, प्रार्थना, प्रयत्न, परिश्रम पर बल देने वाले निर्देशों को कर्तव्य विधान का ही प्रतिरूप माना जाना चाहिए। ऋभुगण अपने उत्तम कर्मों के कारण देव बने और इसीलिए इन्द्र ने उन्हें अपना मित्र बनाया।[४] इन्द्र उत्तम कर्तव्यशक्ति से युक्त होकर जन्मे थे। उन्होंने श्रेष्ठ कर्मों को प्रथम किया, इसीलिए वे प्रशंसनीय हुए।[५] जिस प्रकार इन्द्र आदि देवता उत्तम कर्मों के कारण श्रेष्ठ हुए, उसी प्रकार उत्तम और शुभ कर्म मनुष्यों के

लिए भी कर्तव्य हैं- यही ऋक्संहिता का सन्देश है। जो प्रजा का हित करता है वह 'मानुष' है और जो प्रजा का अहित करता है वह 'अमानुष' है।[६] मनुष्य क्या करे और क्या न करें- विषय पर पर्याप्त प्रकाश डालने वाले वैदिक ऋषियों ने मानवाधिकार की सबल भूमिका के रूप में कर्मों की महत्ता स्थापित की है।

मानवाधिकार परक वैदिक दृष्टिकोण का एक तीसरा महत्त्वपूर्ण पक्ष है- सांमनस्य। अथर्ववेदीय सांमनस्य सूक्त पारिवारिक और सामाजिक स्तर पर अविद्वेष और सममनभाव की बात करता है। यहाँ तक की निर्देश दिया गया है कि भाई भाई से द्वेष न करे, बहन बहन से द्वेष न करे। समान व्रत और समान गति वाले होकर परस्पर भद्रतापूर्ण वाणी का व्यवहार करें।[७] इसी प्रकार का सांमनस्य दिव्यशक्तियों के साथ भी चाहा गया है। मनुष्य का दूसरे व्यापक स्तरों से सम्बन्ध, कर्तव्य विधान और सांमनस्य जैसे विशद् दृष्टिकोण के परिप्रेक्ष्य में वैदिक ऋषि ने मानव के अधिकारों का विधान किया है।

मानवाधिकार की सर्वमान्य परिभाषा के अनुसार 'ये मानवजीवन की ऐसी परिस्थितियाँ हैं, जिनके बिना सामान्य तथा कोई भी व्यक्ति अपने व्यक्तित्व का पूर्ण विकास नहीं कर सकता'। परन्तु मानवाधिकार का सामान्य अभिप्राय उन अधिकारों से हैं, जो मनुष्य मात्र के लिए उनके उत्कर्ष हेतु समान रूप से प्राप्तव्य हैं। वैदिक ऋषि-प्रज्ञा ने दिव्यशक्तियों की इस भावना की बहुशः प्रशंसा की है कि वे 'विश्व मानुष' या 'विश्व जीव' के प्रति बिना भेदभाव के कार्यरत हैं। सूर्य से पहले प्रकाशित होकर युवति उषा 'सब जीवों' को सर्वत्र संचार के लिए प्रेरित करती है।[८] इन्द्र के द्वारा दिए गए उत्तम धन को 'सभी मनुष्य' जानते हैं।[९] विष्णुदेव ने निवास के लिए मनुष्यों को देने की इच्छा से पृथ्वी पर विचक्रमण किया।[१०] पवमान सोम सम्पूर्ण विश्व को श्रेष्ठ (आर्य) बनाना चाहते हैं या सम्पूर्ण विश्व को आर्य करने वाले हैं।[११] स्पष्ट है कि सभी देव मानवमात्र के विकास या सुख सुविधा के लिए यत्नशील हैं। यही मानवाधिकार का वैदिक तात्पर्य है। ऋग्वेद में सांकेतिक रूप से अभिव्यक्त हुए मानवाधिकार परक कतिपय प्रमुख सिद्धान्तों का विश्लेषण ऋग्वेद में मानवाधिकार की अवधारणा के अध्ययन के उद्देश्य से यहाँ अभिप्रेत है।

## मानवाधिकार की अवधारणा के प्रेरक तत्त्व

**१. वैश्विक एकता**-वेद में किसी स्थान विशेष की विशेष चर्चा न करते हुए सम्पूर्ण विश्व या ब्रह्माण्ड की बात की गयी है। वैदिक दृष्टिकोण में यह स्पष्ट किया गया है कि संसार में लोग विविध भाषाओं या बोलियों और विविध धर्मों या व्यवसायों वाले होंगे- पर पृथिवी तो सबको बिना भेदभाव या वर्गभेद के धारण करेगी जैसे कि एक घर में रहने वाले हों।[१२] वह तो सब मानवों के लिए है।[१३] इसी प्रकार यजुर्वेद ने परमात्मा की दृष्टि में विश्व को बिना विभाजन वाला एक 'नीड' कहा है।[१४] जैसे घोसलें में कोई विभाजन रेखा नहीं होती, वैसे ही यह विश्व ब्रह्म की नज़र में एक इकाई है, जिसमें देश-प्रदेश के विभागों का कोई औचित्य नहीं है। इन्द्र स्थावर-जंगम सभी का राजा है।[१५] वे सभी मनुष्यों के शासक, पालक और प्रकाशक है।[१६] जैसे इन्द्रदेव वैसे ही सामान्यतया समस्त देवमण्डली सभी प्राणियों के हितसम्पादन में प्रवृत्त देखी जा सकती है। तात्पर्य है कि प्राकृतिक शक्तियाँ स्वकार्य-नियोजन में समस्त विश्व की एकता को मूलाधार बनाती है। वैदिक देवताओं का कार्यक्षेत्र विश्वव्यापी है।

**२. मानवीय समानता**–द्युलोक को पिता और पृथिवी को माता मानने वाले वैदिक स्तोता ने अपने को विशाल विश्व का अधिवासी माना है। वैदिक समाज समत्व का पोषक था। आर्यजनों के सांस्कृतिक जीवन में एकरूपता थी क्योंकि सभी व्यक्तियों को समानतया समाज का आवश्यकीय अंग माना जाता था। इसीलिए वेदों में कहीं भी एक धर्म या समुदाय को ध्यान में रखकर उपदेश नहीं दिया गया है अपितु सम्पूर्ण मानवमात्र के हितसाधन के लिए उपदेश है। समाज या समूह की सर्वांगीर्ण उन्नति के मूल-कारण के रूप में मानवीय समानता का प्रतिपादन किया गया है। समत्व भावना से ओतप्रोत चित्त स्वार्थ से शून्य और परार्थ के प्रति निष्ठावान् होता है, इसलिए भावात्मक एकता को आत्मसाक्षात्कार का प्रथम सोपान माना गया है- उपनिषद् दर्शन में इसी तथ्य का विस्तार हुआ है।

ऋक्संहिता का 'संज्ञानम्' नामक सूक्त सामाजिक उत्कृष्ट भावना का सुन्दर उपदेश है- 'जैसे दिव्यशक्तियों से युक्त देव परस्पर अविरोध भाव से अपने-अपने कार्यों का करते हैं, वैसे ही तुम लोग भी समष्टि भावना से प्रेरित होकर एक साथ कार्यों में प्रवृत्त हो, ऐकमत्य से रहो और परस्पर सद्भाव में रत रहो'।[१७] यह सूक्त वेद के समतापूर्ण दृष्टिकोण का ज्वलन्त उदाहरण है। इसमें सब जनों की क्रियाओं, गीत, विचारों एवं मनबुद्धि के पूर्ण सामंजस्य की प्रेरणा दी गयी है। यह सूक्त 'सामनस्य' नाम से अथर्ववेद-संहिता में भी मिलता है। समता भावना के माहात्म्य के प्रकाशक वैदिक विचार जहाँ एक ओर समाज की उन्नति के लिए अपेक्षित आधार के अभिव्यंजक हैं, वही वे मानवाधिकार का स्वरूप भी उपन्यस्त करते हैं।

ऋग्वेद्संहिता के दो मन्त्रों में मरुत को नर, मर्य, मर्त आदि विशेषणों के आधारपर मनुष्यवाची मानना, स्पष्टतः मानवीय समानता के रूप में ग्राह्य है- 'सब मनुष्य समान है, उनमें कोई बड़ा-छोटा नहीं, कोई मध यम भी नहीं, ये अपनी शक्ति से ऊपर उठते हैं, ये महत्त्वाकांक्षा से बढ़ते हैं, ये जन्म से कुलीन, दिव्य, मर्त्य हैं, इन सब मनुष्यों में कोई न तो जन्म से बड़ा है और न कोई छोटा, सब सम्यक् मातृभाव को धारण करते हुए ऐश्वर्य और उन्नति के लिए मिलकर प्रयत्न करते और आगे बढ़ते हैं'।[१८] जब सब समान हैं तो भेदभाव कैसा? वेद की दृष्टि में सभी स्त्री-पुरुष 'अमृतस्य पुत्राः' है।[१९] वेद की संस्तुति है कि बालक, तरुण, बड़े और वृद्ध जो भी पुरुष हैं, वे सब उसी प्रभु के रूप हैं अतः उसको नमन करना चाहिए।[२०] वर्तमान जाति-व्यवस्था जो विश्व के कई भागों में मानवीय भेदभाव का आधार है, वेद में नहीं प्राप्त होती है। गुण और कर्म के अनुसार निर्धारित की गई वर्ण-व्यवस्था के कतिपय संकेत वेद में अवश्य उपलब्ध होते हैं। वैदिक परम्परा में बलपूर्वक स्थापित की गई सामाजिक और मानवीय समानता उसे मानवाधिकार की मान्यता प्रदान करती है।

**३. विश्वबन्धुत्व-भावना**–विश्वबन्धुत्व-भावना की चर्चा जिस रूप में वेद में की गई है, वह विश्व वाङ्मय के लिए एक अनुपम उदाहरण है। विश्वव्यापी आधार पर चिन्तन करने के कारण विश्वबन्धुता की उदात्त भावना से ओतप्रोत वैदिक मन्त्रों में मानवमात्र के लिए सौहार्द, मित्रता, सामनता, संगठन और साहाय्य की भावनाओं का पाया जाना नितराम् स्वाभाविक है। ऋग्वेद में ही इस विषय के अनेक सन्दर्भ उपलब्ध हैं। ऋग्वेद के अन्तिम सूक्त 'संज्ञानम्' इसका सर्वोच्च प्रतिपादक है। एक अन्य मन्त्र में सभी जनों के परस्पर संगत होकर, सहमतिपूर्वक, बिना किसी द्वेषभाव के, कर्तव्यकर्मों और प्रकृति के नियमों के लिए कहा गया है- 'एक महत्कार्य के निमित्त वे एक होते हैं, संघटित होते हैं और अपना विचार रखते हैं, वे कभी आपस में कलह नहीं करते, देवों के अनुशासन को भंग नहीं करते और हिंसा न करते हुए धनों के साथ संगत होते हैं।[२१]

एवं केचन संरक्षन्ति। ते च स्वजीवनेऽपि संस्कृतान्तःकरणाः महान्तो जनाः भवन्ति। संस्कृताचारवृत्तानां तेषां लोकोत्तराणां स्वाभाविके संस्कृतभाषणे वैश्विकसन्दर्भाः स्वयमहमहमिकया संयुज्यन्ते।

संस्कृतं न केवलमेका भाषा, अपितु काचिद् विद्यापि वर्तते, किमपि जीवनमपि वर्तते। संस्कृतमित्यत्र सामान्ये नपुंसकं प्रयुक्तम्। यदि संस्कृतं केवलमेका भाषा स्यात्तर्हि तत्र नपुंसकस्थाने स्त्रीलिङ्गं प्रयुज्येत। भाषायाः विशेषणतया स्त्रीलिङ्गे 'संस्कृता' इति वक्तुं युज्येत, किन्तु संस्कृता भाषा भूत्वापि सा संस्कृतमिति निगद्यते। नपुंसकप्रयोगे तदिदं संस्कृतं नाम लोकोत्तरं वस्तु सामान्यतया जातिवत्तया संस्कारसंयुतं सम्पूर्णं जीवनमेव व्याप्नोति। तस्मादन्यभाषा इवं संस्कृतमपि केवलमेका भाषा नास्ति। भाषायां सत्यामपि तत्र जीवनस्य सर्वमपि संस्कृतत्त्वं व्यक्तं भवति। संस्कृतस्य तत्तादृशीं सर्वाङ्गीणतां साधयितुमेव तत्र तदनुकूला कापि दिव्यता स्वीक्रियते। सार्वजनीनैः सार्वकालिकैश्च तादृशैर्दिव्यैर्गुणैरेव सा भाषा देवभाषा इत्युच्यते। सर्वेऽपि वैश्विकसन्दर्भास्तत्र संस्कृते यथायथं स्वयमेव भासन्ते। इयमेव हि संस्कृतस्य संस्कृतत्वं देवभाषात्वं वा यदत्र सर्वोऽपि लोकः लोकोत्तरेण स्वरूपेण स्वात्मानमाविर्भावयति, तेन हि वैश्विकसन्दर्भेषु संस्कृतं नियामकं भूत्वा प्रवर्तते।

संस्कृते सम्पूर्णमपि विश्वं शिवरूपेणाराध्यते। शिव एव विश्वं भवति, विश्वमेव च साक्षात् शिवो भवति। वैश्विकसन्दर्भेषु स्वात्मानं योजयितुं सेयं दैवी पद्धतिरस्ति। "प्रकाशलक्षणाः देवाः मनुष्याः कर्मलक्षणाः" इत्युच्यते। तत्र दिव्यमर्त्ययोः पारस्परिकं साहचर्यं साध्यते। प्रकाशं विना कर्म न फलति, कर्म विना प्रकाशोऽपि विफलायते। अत एवोक्तं "परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति। दिव्यमर्त्ययोः ऐकात्म्यस्य गीतमेव संस्कृते गीयते। अभिज्ञानशाकुन्तलस्य नान्दीपद्ये कालिदासः शिवस्याष्टमूर्तौ सर्वेऽपि वैश्विकाः सन्दर्भाः परिगणिताः। लौकिकालौकिक-योः संयोजिका भाषा एव संस्कृतं कथ्यते "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः"। अपि च—

**अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः।।**

■ पता : साहित्यविभागाध्यक्षः रा.सं.सं., लखनऊ परिसर, लखनऊ

# कर्मपदार्थ निरूपणम्

■ भारतभूषण त्रिपाठी

कर्तुरीप्सिततमं कर्म'[1]-कर्तुः षष्ठ्येकवचनान्तम् ईप्सिततमं प्रथमान्तं, कर्म इति प्रथमान्तम्। त्रिपदात्मकमिदं सूत्रम्। 'क्तस्य च वर्तमाने' इति सूत्रेण 'कर्तुः' इत्यत्र कर्तरि षष्ठी, अत्र षष्ठ्याः प्रकृतिभूतः यः कर्तृशब्दः सः धातूपात्तव्यापाराश्रयपरः न तु शब्दोऽयं कर्तृसंज्ञकः परः। अत एव शत्रून् अगमयत् स्वर्गम् इत्यत्र 'शत्रून्' इति कर्मवृत्तिव्यापारजन्यफलाश्रयस्य स्वर्गस्य कर्मसंज्ञा कर्तुरीति सूत्रेण विहिता। कर्तृ पदोत्तरषष्ठीविभक्त्यर्थः कर्ता स च कर्ता आश्रयपरः प्रकृत्यर्थव्यापराश्रयस्य षष्ठ्यर्थे आश्रये अभेदेन अन्वयो जायते। अतः 'कर्तृः' इत्यस्य अर्थो जातः प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयाभिन्नाश्रयः।

इदानीमीप्सिततमपदार्थविचारः क्रियते।

आप् धातोः सन्नन्तात् ईप्स इत्यस्मात् कर्मणि क्तप्रत्ययः[2] तस्मात् ईप्सित शब्दः निष्पन्नः। आप् धात्वर्थः सम्बन्धः, सन्नर्थः इच्छा, तमबर्थः प्रकर्षः, क्तः प्रत्ययार्थः उद्देश्यताख्यविषयताश्रयः, आप् धात्वर्थसम्बन्धस्य सनर्थेच्छायाम् स्वनिष्ठप्रकारतानिरूपकत्व-स्वघटकफलनिष्ठप्रयोज्यतानिरूपितप्रयोजकतावद्- व्यापाराश्रयसमवेतत्वोभय-सम्बन्धेनान्वयः सनर्थेच्छायाः क्तप्रत्ययार्थ- उद्देश्यताख्यविषयताश्रयस्यैकदेशे उद्देश्यतायां निरूपितत्व- सम्बन्धेनान्वयः तमबर्थः अतिशयित्वम् तच्च अतिशययित्वं प्रयोज्यत्वरूपम्। (आप् धात्वर्थः सम्बन्धः स च सम्बन्धः व्यापारविशिष्टफलवत्वरूपसम्बन्धः तत्र सम्बन्धे कर्तृवृत्तिव्यापारस्य वैशिष्ट्यं फले स्वप्रयोज्यत्वस्ववाचकधातुवाच्यतत्वाभ्याम् गृह्यते।)

फलवत्वञ्च फलतावच्छेदकसम्बन्धेन गृह्यते अर्थात् येन केनापि सम्बन्धेन फलाश्रयस्य कर्मसंज्ञा न अपितु फलतावच्छेदकसम्बन्धेन-फलाश्रयस्य कर्मसंज्ञाविधीयते। चिकीर्षितः सम्बन्धविशेष एव फलतावच्छेदकसम्बन्धेन गृह्यते। ईप्सिततम घटक तमप् प्रत्ययस्य कुत्रान्वयः क्रियते इति विचार्यते।

तमप् प्रत्ययस्य या प्रकृतिः तत्प्रकारीभूतो यो धर्मः तद्गतातिशयितत्वं तमपा द्योत्यते। प्रकृते तमप्-प्रत्ययस्य प्रकृतिः 'ईप्सित' इति तस्यार्थः सम्बन्धेच्छा विषयः अत्र सम्बन्धः, इच्छाः विषयः एते त्रयः प्रकृत्यर्थः तत्र विषयः इति विशेष्यम् विषये प्रकारीभूता इच्छा, इच्छायाश्च प्रकारीभूतः "सम्बन्धः" इति अत्र विषयः कीदृशः ग्राह्य उद्देश्यरूपः विषयः ग्राह्यः, तत्र साक्षात् विशेषणम् 'इच्छा' वर्तते सम्बन्धस्तु इच्छायाः विशेषणत्वात् विशेषणतावच्छेदको वर्तते अतः अतिशयित्वम् इच्छायाः एव नियमतः ग्राह्यम्, तथापि भाष्यप्रामाण्यात् इच्छायाः अतिशयित्वं न गृह्यते किञ्च इच्छायाः विशेषणीभूतस्य सम्बन्धस्य अतिशयित्वं गृह्यते तच्च अतिशयित्वम् स्वप्रयोज्यत्वरूपम् स्वपदेन कर्तृवृत्ति व्यापारः गृह्यते, एवञ्च प्रत्यासत्तिन्यायेन फले व्यापारवाचकधातुवाच्यत्वम् लब्धम्। तस्मात् सम्पूर्णोऽर्थः सम्पन्नः प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रय-वृत्तिव्यापारविशिष्टफलतावच्छेदकसम्बन्धावच्छिन्नफलाश्रयत्व-सम्बन्धविशिष्टेच्छा-निरूपितोद्देश्यताश्रयः संकेतसम्बन्धेन कर्मपदवान् इति।

तमपा यद् सम्बन्धे अतिशयित्वं स्वप्रयोज्यत्वेन गृहीतम् तस्माद् हेतो "गां दोग्धि पयः" इत्यत्र पयः इत्यस्य कर्म संज्ञा जाता, प्रयोज्यत्वाभावे कर्तृवृत्ति-व्यापारजन्यफलाश्रस्यैव कर्मसंज्ञायाः विधीयमाने गोपवृत्तिव्यापारजन्य-

विभागानुकूलव्यापाररूप फलाश्रयः गौरेव वर्तते नतु पयः, अतः तस्य कर्मसंज्ञा न प्राप्नोति तदर्थं प्रयोज्यत्वनिवेशः क्रियते। तेन यत् फलं वर्तते तत् कर्तृवृत्तिव्यापारात् साक्षात् जन्यं स्यात् परम्परया वा जन्यं स्यात् उभयथा प्रयोज्यत्वेन गृह्यते।

प्रकृते पयस्तु परम्परया कर्तृवृत्तिव्यापारजन्यफलाश्रयः वर्तते। अर्थात् गोपरूपकर्तृ-वृत्तिव्यापारजन्यफलाश्रयः गौः, गौवृत्तिव्यापारजन्यविभागरूपफलाश्रय पयः वर्तते। तस्यापि परम्परयाकर्तृवृत्ति व्यापारप्रयोज्यफलाश्रयत्वात् कर्म संज्ञा क्रियते व्यापारस्य यद् वैशिष्ट्यं फले गृह्यते तत्र वैशिष्ट्यघटकसम्बन्धः स्ववाचकधातु वाच्यत्वस्य फलं प्रदीयते।

'माषेषु अश्वं वध्नाति' इत्यत्र माषेषु कर्मसंज्ञा न भवति। यतोहि पुष्ट्यर्थं माषेषु अश्वं बध्नाति इत्यत्र माषः वन्धनप्रयोज्यभक्षणरूपफलाश्रयः वर्तते तथापि तत्र प्रकृत धातु वाच्यत्वं नास्ति। अतः तस्य माषस्य कर्मसंज्ञा न भवति।

प्रयोज्यत्वनिवेशाद् अग्नेः माणवकं वारयति। इत्यत्र अग्नेः कर्मसंज्ञा न भवति, अत्र प्रकृतधातु वारिधातुः तदर्थः संयोगानुकूलव्यापाराभावानुकूलव्यापारः, तत्र वारिधात्वर्थ-प्रधानीभूतव्यापार-प्रयोज्यसंयोगानुकूल-व्यापाराभावरूपफलाश्रयः, माणवकः तस्य कर्म संज्ञा भवति अग्नेः कर्मसंज्ञा न भवति। प्रयोज्यत्व निवेशात् देवदत्तवृत्तिव्यापारात् माणवकवृत्ति संयोगानुकूलव्यापाराभावरूपफलमुत्पद्यते व्यापाराभावाश्रयत्वात्, माणवकात् संयोगरूपफलं नोत्पद्यते, अतः संयोगस्य अनुत्पद्यमानत्वात् कर्तृवृत्ति व्यापारप्रयोज्यत्वमपिसंयोगे न संघटते। विशेषयुक्तत्वम् वर्तते एव। तस्मात् तस्य कर्मसंज्ञा जायते। कर्मलक्षणे प्रधानीभूतव्यापारनिवेशस्यापिफलं 'अग्नेः' माणवकं वारयति इत्यत्र अग्नेः कर्मसंज्ञा मा भूत् इत्यपि वक्तुं शक्यते। यतोहि संयोगानुकूलव्यापाराभावरूपफलञ्च। यतोहि कर्मलक्षण प्रधानीभूतव्यापारस्य लक्षणघटकत्वाभावे यदाव्यापार प्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यताश्रयस्य कर्मसंज्ञा स्यात् इत्येवोच्यते। तदा माणवके संयोगानुकूलव्यापाराभावस्य सत्वेऽपि माणवकीयव्यापारजन्यफलाश्रय-त्वेच्छीयोद्देश्यताश्रयता तु अग्नौ अस्त्येव तस्यापि कर्मसंज्ञा प्राप्नोति यदा प्रधानीभूतव्यापारस्य लक्षणे निवेशः क्रियते तदा अग्निवृत्ति संयोगस्य प्रधानीभूतव्यापारप्रयोज्यतायाभावात् कर्मसंज्ञा नैव प्राप्नोति। यतोहि कर्तृवृत्ति व्यापार एव प्रधानीभूतव्यापारत्वेन गृह्यते-कर्मलक्षणे प्रकृतधात्वर्थ निवेशात् प्रयागात् काशीं गच्छति इत्यत्र प्रयागस्य गम् धात्वर्थव्यापारजन्यविभागरूपफलाश्रयत्वादपि अयं विभागः न प्रकृतधात्वर्थः, अतः फलाश्रयत्वादपि कर्मसंज्ञा न भवति।

अत्र शङ्क्यते यत् काशीं गच्छन् पथि मृतः इत्यत्र 'काशी' इत्यस्य कथं कर्मसंज्ञा भवति तस्य फलाश्रयत्वाभावात् तत्र मञ्जूषाकारेणश्रीमता [३]नागेशेन न्यरूपियत्कर्मलक्षणे 'काशी' इत्यत्र फलाश्रयत्वाभावेऽपि मद् वृत्तिव्यापारजन्यफलाश्रयो भवतु इत्याकारिकेच्छायाः उद्देश्यताश्रयता तु अस्त्येव, अतः तस्य कर्मसंज्ञा सिध्यति।[४]

पुनः शङ्क्यते यत् काशीं गच्छति न प्रयागम् इत्यत्र फलाश्रयत्वाभावात् प्रयागस्य कर्मसंज्ञा न स्यात् अतः आचार्येण नागेशेन ईप्सिततमपदस्य "स्वार्थविशिष्टयोग्यताविशेषे लक्षणा क्रियते तस्माद् प्रयागस्य फलाश्रयत्वाभावेऽपि तत्र उद्देश्यसामर्थ्य।

अत्र विचार्यते यत् रामः ग्रामं गच्छन् तृणं स्पृशति, देवदत्तः विषं भुङ्क्ते, इत्यादौ तृणविषयोः व्यापारजन्यफलाश्रयत्वेऽपि तयोः इच्छोद्देश्यताश्रयत्वाभावात् कर्तुरी० इति सूत्रेण तु कर्मसंज्ञा न सेत्स्यति, कथं अत्र कर्मसंज्ञाविधीयते, तदर्थं भगवता पाणिनिना पृथक् सूत्रं कृतम् ''तथा युक्तं चानीप्सितम्''। अत्र तथायुक्तत्वञ्च समभिव्याहृतधात्वर्थप्रधानीभूतव्यापार-प्रयोज्यतद्धात्वर्थफलाश्रयत्वम्।

अनेन सूत्रेण प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य-प्रकृतधात्वर्थफलाश्रयस्य अनीप्सितस्य कर्मसंज्ञा विधीयते।[५] तस्मात् ग्रामं गच्छन् तृणं स्पृशति इत्यत्र तृणस्य गम् धात्वर्थव्यापारजन्य-संयोगरूपफलाश्रयत्वाद् कर्मसंज्ञा जायते। तथैव विषं भुङ्क्ते। इत्यत्र भुज् धात्वर्थ व्यापारजन्यफलाश्रयत्वात् विषस्य कर्मसंज्ञा विधीयते।

अस्मिन् सूत्रेऽपि प्रकृतधात्वर्थनिवेशाद् प्रयागात् काशीं गच्छति इत्यत्र प्रयागस्य अनुद्देश्यत्वेन व्यापारजन्यविभागरूपफलाश्रयत्वेन प्रकृतधात्वर्थ-फलाश्रयत्वाभावात् न कर्मसंज्ञा क्रियते।

तृतीय सूत्रं कर्मसंज्ञाविधायकम् अकथितञ्च[६] च अकथितशब्दः असंकीर्तित पर अर्थात् अविवक्षितः इत्यर्थः। अप्रधानपरोऽयं नास्ति अकथितशब्दः[७] तदा जिज्ञासोदेति यत् कस्य अविवक्षा कस्य च विवक्षा तत्रोच्यते दुहादिधातूनां योगे आपादानादीनां आपादानत्वादिना अविवक्षा एवञ्च तेषां कर्मत्वेन विवक्षा यदा क्रियते तदा तेषां कर्मसंज्ञा अनेन विधीयते। शेखरे निरूपितम् यद् अविवक्षा द्विधा, प्राप्तपूर्विका अविवक्षा अप्राप्तपूर्विका अविवक्षा च, यथा गां दोग्धि पयः इत्यत्र 'गो' इत्यस्य विभागाश्रयत्वात् अपादानसंज्ञा प्राप्यते तदा 'गो' इत्यस्य अपादानत्वेन अविवक्षा क्रियते कर्मत्वेन च विवक्षया तस्य कर्मसंज्ञा विधीयते। अप्राप्तपूर्विका-अविवक्षायाः उदाहरणम् तण्डुलान् ओदनं पचति 'तण्डुल' इत्यत्र न काचित् पूर्वप्राप्तकारकस्य अविवक्षा क्रियते अतः अप्राप्तपूर्विका अविवक्षा वर्तते अत्र प्राप्तषष्ठीं प्रबाध्य अनेन कर्मसंज्ञा विधीयते। अत्र शेखरकारेणोक्तं यत् पच धात्वर्थ फलद्वयार्थकः तस्मात् कर्तुरिति सूत्रेणैव 'तण्डुल' इत्यस्य कर्मसंज्ञा भविष्यति। अतः एतद्दुहारणम् चिन्त्यम्।[८]

अतः बलिं याचते वसुधाम्, 'बलिम्' इति अप्राप्तपूर्विका अविवक्षायाः उदाहरणम् वर्तते। यतोहि भाष्यकारेणोक्तम् न हि याचनादेवाऽपायो भवति याचितो यदि ददाति तदाऽपायेन युज्यते।

अकथितञ्च इतिसूत्रविषये पक्षद्वयमुपस्थापितम् शेखरादि ग्रन्थेषु, दुहादिधातुः यदा व्यापारद्वयार्थकः तदा कर्तुरिति सूत्रेणैव कर्मसंज्ञा सेत्स्यति सूत्रमिदंतदानीं कर्मणः अविवक्षायां प्राप्तषष्ठीं प्रबाध्य अनेन द्वितीयां विधास्यति। द्वयापरद्वयार्थकपक्षे प्राच्याचार्याणाम् मते यदा अपादानत्वेन अविवक्षा क्रियते तदा माषाणाम् अश्नीयात् इतिवत् षष्ठी प्राप्यते अतः तां षष्ठीं प्रबाध्य अनेन द्वितीया विधीयते बाध्यबाधकभावात् षष्ठीवत् द्वितीयायाः अपि सम्बन्ध एव अर्थोभविष्यति,[९] बाध्य-बाधकयोः समानार्थकत्वनियमात्। अतः गां दोग्धि पयः इत्यस्य शाब्दबोधः गो सम्बन्धि पयः कर्मकं दोहनम्।

नव्यमते व्यापारद्वयार्थकत्वपक्षे कर्मणः शेषत्वेन विवक्षायां षष्ठीबाधनार्थं सूत्रमिदं क्रियते, किञ्च शाब्दबोधः अकथितञ्च इति सूत्रेण विधीयमानकर्मसंज्ञायाः कर्मत्वेनैव भविष्यति।[१०]

अतः गां दोग्धि पयः इत्यस्य गो कर्मकं पयः कर्मकं दोहनमित्येव बोधः नव्यमते।

शेखरकारेणोक्तम् ''कारकत्वव्याप्यसंज्ञानां स्वबोध्यार्थे कर्मत्वादिशक्तिमत्वबोधकत्वात्। बोधोऽपि तथैव।''[११]

षष्ठ्यपवादमात्रेणैवद्वितीयायाः सम्बन्धार्थबोधकत्वप्रतिपादनमयुक्तम्। देवदत्तः ग्रामं गच्छति इत्यत्रापि कर्तुरीप्सिततमं कर्म इति सूत्रं न स्यात् तदा तदभावे षष्ठी प्राप्नोति तां बाधितुं कर्तुः इति सूत्रं क्रियते। अतः इदमपि षष्ठ्याः अपवादभूतं सूत्रं अनेनापिविधीयमानस्य कर्मणः सम्बन्धत्वेन बोधः स्यात् तथा न भवति। अतः सर्वत्र वाध्यवाधकयोः सामानार्थकत्वं स्यात् इति नास्ति नियमः। बाध्यबाधकभावविषये समानविषयत्वस्य तु अस्ति नियमः न तु समानार्थकस्य।

गतिवुद्धि प्रत्यवसानार्थशब्दकर्मकाणामण्किर्ता स णौ[१२] अनेन सूत्रेणापि गत्यर्थक बुद्धयर्थकप्रत्यवसानार्थक-शब्दकर्मकाकर्मकधातूनां योगे अण्यन्तावस्थायाः कर्तुः ण्यन्तावस्थायां कर्म संज्ञा भवति। यथा रामः गच्छति अत अण्यन्तावस्थायाः गम् धात्वर्थ क्रियायाः कर्ता रामः वर्तते तस्य गमयति इति ण्यन्तवस्थायाः क्रियाया। कर्मसंज्ञा भवति देवदत्तः रामं गमयति देवदत्तः गच्छन्तं रामं प्रेरयति इति अस्य भावार्थः।

अस्य सूत्रस्य प्राच्यनव्यभेदेन नियामकत्वं विधि सूत्रत्वम् इति पक्षद्वयमुपस्थापितम् वर्तते। प्राच्यैः इदं विधिसूत्रमिति उररीक्रियते यतो हिण्यन्तगमूधातोः व्यापारद्वयार्थकत्वे कर्तुरीति सूत्रेण प्रयोज्यकर्तुः कर्मसंज्ञा न प्राप्स्यति परत्वात् अन्तरङ्गत्वात्, उपजीव्यत्वात्[१३] कर्तृसंज्ञैव भविष्यति कर्तृसंज्ञा मा भूत् तदर्थं गतिबुद्धि इति सूत्रं क्रियते यत् गत्यंर्थादीनाम् योगे प्रयोज्य कर्तुः कर्मसंज्ञा स्यात्। यथा देवदत्तः रामं ग्रामं गमयति इत्यत्र संयोगानुकूल-व्यापारानुकूलव्यापाराश्रयः गम् धात्वर्थः तत्र फलद्वयं वर्तते संयोगानुकूलव्यापारः इत्येकं फलं द्वितीयं संयोगरूपं फलं तत्र रामस्य संयोगानुकूलव्यापाराश्रय कर्तृसंज्ञा प्राप्नोति फलाश्रयत्वात् कर्मसंज्ञापि प्राप्नोति उभयोः युगप्रत्प्राप्तयेः परत्वात् कर्तृसंज्ञैव प्राप्स्यति। एवमेव रामस्य कर्तृसंज्ञा प्राथम्येन प्राप्यते यतोहि संयोगानुकूलव्यापाराश्रयः प्रथमतः रामोनास्ति पश्चात् व्यापारानुकलव्यापारस्य जायमानत्वात् रामः फलाश्रयो भवति अतः कर्तृसंज्ञा कर्मसंज्ञापेक्षया अन्तरङ्गमपि वर्तते। तथैव कर्मसंज्ञायाः उपजीव्यः कर्ता वर्तते उपजीव्यत्वादपि कर्तृसंज्ञैव स्यात् तन्मा भूत तदर्थं गतिबुद्धि इति सूत्रं क्रियते यत् गत्याद्यर्थानाम् योगे कर्मसंज्ञैव स्यात्।

नव्यैरुच्यते यत् इदं सूत्रं नियामकं[१४] यतोहि ण्यन्त गमि धातुः व्यापारद्वयार्थवाचकः वर्तते। तत्र प्रथमव्यापारः प्रयोज्यकर्तृवृत्तिव्यापारः द्वितीयः व्यापारः प्रयोजककर्तृवृत्तिव्यापारः प्रयोजककर्तृवृत्तिर्यो द्वितीयो व्यापारः सः प्रधानीभूत् व्यापारः तत्र प्राधान्यं कथमध्यवसीयते तत्रोच्यते शाब्दबोधीय मुख्यविशेष्यताश्रयत्वरूप शाब्दप्राधान्यात् द्वितीय व्यापारस्य प्राधान्यं वर्तते। एवमेव अन्यानधीनत्वरूपार्थप्राधान्यमपि[१५] प्रयोजककर्तृवृत्ति द्वितीयव्यापारे वर्तते एवञ्च-प्राधानरूप द्वितीयव्यापारात् जायमान प्रथमव्यापाररूपफलाश्रयः प्रयोज्यकर्ता भवति अतः प्रथम व्यापाराश्रयस्यापि प्राधान्यात् तस्य कर्मसंज्ञैव भविष्यति यतोहि प्रधानानुरोधिनीकर्मसंज्ञा वर्तते। अस्ति नियमः प्रधानानुरोधिकार्यं सर्वतो बलवत् तस्मात् कर्मसंज्ञाकर्तुरी० इति सूत्रेणैव सिध्यते गतिबुद्धिसूत्रस्य ण्यर्थत्वात्सूत्रमिदं नियमयति यत् गत्याद्यर्था नामेव ण्यन्तानां प्रयोज्यकर्तुः कर्मसंज्ञा स्यात्।

कर्मणिद्वितीया-इति सूत्रे कर्मणि इत्यत्र वाचकत्वं सप्तम्यर्थः पञ्चकं प्रातिपदिकार्थः इति पक्षे अनुक्तकर्मार्थवाचकात् प्रातिपदिकात् कर्मवाचिका द्वितीया। अतः द्वितीयाविभक्तेः कर्म अर्थः। तत्र कर्मपदेन साधारण्येन कर्तृवृत्तिव्यापारजन्य-फलाश्रयः गृह्यते। तत्र धातोरेव फलव्यापारयोः लाभात् अनन्यलभ्यो हि शब्दार्थः इति नियमबलेन 'आश्रय' एव द्वितीयाविभक्त्यर्थः। अतएव वैयाभूषणसारे लिखितम् यद् 'ग्रामम्' इत्यत्र ग्रामोऽपि कर्मवर्तते तदुत्तर द्वितीयाविभक्त्यर्थोऽपि कर्म वर्तते तत्र द्वितीयाविभक्त्यर्थे कर्मरूपाश्रये ग्रामरूपकर्मपदार्थस्य अभेदेन अन्वयः क्रियते, ''ग्रामाभिन्नं कर्म'

इति ग्राममित्यस्यार्थः तत् कथं संगच्छते यतोहि-विरुपोपस्थितपदार्थयस्यैवाभेदान्वयो जायते अत्र तु उभयत्र कर्मत्वस्य प्रतीतेः सत्वात् विरुपोपस्थित्यभावात् कथमभेदान्वयः इति चेदुच्यते तन्न प्रकृते तु 'ग्राम' इत्यस्मात् ग्रामत्वेन कर्मरूपपदार्थस्योपस्थितर्जायते 'अम्' इत्यस्मात् कर्मत्वेन आश्रयस्योपस्थितिर्जायते अतः अत्र विरुद्धधर्माभ्याम् पदार्थस्योपपस्थितेः अभेदान्वयो भवति। ह्रक्रोरन्यतरस्याम्,[१६] अधिशीङ्स्थासां कर्म[१७] अभिनिविशश्च,[१८] उपान्वध्याङ्वसः[१९] इत्यादि सूत्रेणापि कर्मसंज्ञा विधीयते।

आश्रयोऽववधिरुद्देश्यः सम्बन्धः शक्तिरेव वा यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः। द्वितीया-तृतीया-सप्तमीनाश्रयोऽर्थः।[२०]

अत्र शङ्क्यते यत् द्वितीयातृतीयासप्तमीविभक्तीनामाश्रयोऽर्थः यत् आचार्येण प्रतिपादितं तत्र साङ्कर्यं सम्भवेत इति चेदुच्यते तन्न। निरूपक भेदात् सर्वत्र आश्रयोऽपि भिन्नः वर्तते। व्यापाराश्रयः कर्ता अत्र कर्तृरूपाश्रयस्य निरूपकः व्यापारः फलाश्रयं कर्म, अत्र कर्मरूपाश्रयस्य निरूपकम् फलम् वर्तते। तथैव कर्तृकर्मद्वारक क्रियाश्रयः आधारः अधिकरणम्, क्रियापदेन इत्यत्र फलं व्यापारश्च उभौ गृह्येते, अत्र कर्तृकर्मद्वारा क्रिया निरूपिका वर्तते।

अत्र जिज्ञास्यते यत् अनन्यलभ्यो हि शब्दार्थः इति नियमात् 'ग्रामम्' इत्यत्र फलाश्रयग्रामस्य सत्वात् आश्रये पुनः द्वितीयायाः शक्तिः कथं कल्प्यते, तत्र समाधीयते यत् ग्रामत्वेन आश्रयस्य प्रतीतिर्भवति न तु आश्रयत्वेन। अतः आश्रयत्वेन आश्रयस्तु अनन्यलभ्यः एव वर्तते अतः द्वितीयर्थस्य तदर्थे (आश्रये) शक्तिः कल्पना न्यायूया एव। 'ग्रामम्' इत्यत्र द्वितीयार्थः आश्रयः 'कटे' इत्यत्र सप्तम्यर्थः आश्रयः 'वाणेन' अत्र तृतीयार्थः आश्रयः अत्र सर्वत्र आश्रयः भिन्नः उपस्थितिभिन्नत्वात् निरूपकभेदाच्च, द्वितीयार्थ-आश्रयस्य कर्मत्वेन उपस्थितिर्जायते तृतीयार्थ-आश्रयस्य करणत्वेन सप्तम्यर्थ-आश्रयस्य अधिकरणत्वेन उपस्थितेः सत्वात् फलव्यापारादि रूपेण आश्रयस्य निरूपकभेदाच्च न कश्चन दोषावसरः।

द्वितीयाविभक्त्यर्थः यः आश्रयः तदवृत्ति-यद् आश्रयत्वम् तस्य भिन्नत्वात् शक्यतावच्छेदकस्य नानात्वेन अनन्तशक्ति कल्पनायाः सत्वात् गौरवं समापतत्ति। एवमेव ''अन्यूनमतिरिक्तवृत्तिधर्म एव अवच्छेच्छको भवति। अत्र तु आश्रयत्वम् भूतलादावपि वर्तते तस्मात् अतिरिक्तवृत्तेः सत्वात् तत्र आश्रयत्वं शक्यतावच्छेदको नैवभवितुमर्हति आश्रयत्वम् चेद् फलादिनिरूपितविशिष्टम् गृहृयते तदा वैकुण्ठम् अध्यास्ते इत्यत्र वैकुण्ठम् इत्यस्य फलादिनिरूपितविशिष्ट-आश्रयत्वाभावात् तत्र न्यून वृत्तित्वं समापतति। तत्र समाधीयते यत् द्वितीयाविभक्तेः यः आश्रयोऽर्थः सः आश्रयतावान् परः अत्र आश्रयत्वम् च न किञ्चिद् धर्मपरं वस्तुतः अस्ति नियमः प्रकृतिजन्य-बोधेप्रकारीभूतोऽर्थः भावप्रत्ययार्थः। तथापि अत्र आश्रतावान् इत्यस्य किञ्चिद्धर्मानवच्छिन्न-आश्रयतावान् इत्यर्थः क्रियते यतो हि अत्र आश्रयत्वम् अखण्डोपाधिरूपम् गृह्यते तत्र अखण्डत्वम् नाम इतरपदार्थघटितस्वरूपक-धर्मभिन्नत्वम्, उपाधित्वञ्च ''विशेषणत्वे सति जातिभिन्नत्वम्'' तस्मात् द्वितीयार्थः आश्रयः इत्यत्र न कश्चन दोषः। आश्रयत्वस्य अखण्डोपाधि रूपत्वात् नानाधर्मावच्छिन्नस्वाभावात् अनन्त शक्तिकल्पना न करणीया भवति।

अत्र कर्मशब्देन आश्रयरूपार्थः गृह्यते। अतएव तण्डुलः पक्वः इत्यत्र कर्मणि क्तप्रत्ययः, तत्र क्तप्रत्ययार्थकर्मरूपाश्रये तण्डुलपदार्थस्याभेदेन अन्वयः। शत्य अश्वः अत्र शतेन क्रीतः इति विग्रहे कर्मणि अर्थे

तद्धित प्रत्यय 'यत्' इति क्रियते अत्रापि अश्वरूपकर्मणः अभेदेन शत्यः इत्यनेन सह अन्वयो भवति। 'प्राप्तमुदकं यम्' इत्यत्र 'यम्' इति अन्यपदार्थकर्मरूपार्थस्य समासेन अभिहितत्वात् तत्र ग्रामरूपार्थस्य प्राप्तोदके अभेदेनान्वयः क्रियते।

कर्मणि द्वितीया सूत्रघटक कर्मपदेन आश्रयरूपोऽर्थः गृह्यते, तदा जिज्ञास्यते कस्याश्रयः तर्हि कर्तुरीप्सिततमम्, अकथितञ्च, तथायुक्तं चानीप्सितम्, गतिबुद्धिप्रत्यवसानार्थ इत्यादिषु सर्वत्र कर्तृवृत्तिव्यापारजन्यफलाश्रयस्य प्रतीतेः सत्वात् कर्तृवृत्तिव्यापारजन्यफलस्य आश्रयः, इति वक्तुं शक्यते तस्मिन्-आश्रये द्वितीया विधीयते, एतादृश-आश्रयस्य गृह्यमाणे 'अधिशीङ्स्थासां कर्म' इति सूत्रेण आधारस्य कर्मसंज्ञा विधीयते अयञ्च आधाररूप आश्रयः न कर्तृवृत्तिव्यापारजन्यफलाश्रयः। तथैव 'दिवः कर्म च' इति सूत्रेणापि करणस्य कर्मसंज्ञाविधीयते अयमपि आश्रयः न तथाविधः अतः अनेन विधीयमानः कर्मरूपाश्रयः भिन्नः तस्मात् कर्मणि द्वितीया सूत्रस्य कर्मपदस्य भिन्नभिन्नार्थस्य सत्वात् किं लक्ष्यभेदात् लक्षणभेदः करणीयः इति चेदुच्यते तन्न।

कर्मणि द्वितीया सूत्रघटक कर्मपदस्य 'कर्मत्वशक्तिमान्' इत्यर्थः क्रियते अतः कर्तुरीप्सिततमकर्म, अधिशीङ्स्थासां कर्म, दिवः कर्म च इति सूत्रैः विधीयमानस्य कर्मणः भिन्नत्वादपि तत्र विद्यमानम् कर्मत्वम् एकमेव अतः कर्मणिद्वितीया इति सूत्रस्य कर्मशब्दस्य "कर्मत्वशक्तिमान्" इत्यर्थः क्रियते।

अत प्रभाकारेणोक्तम् वस्तुतस्तु अधिशीङ्स्थसां कर्म, दिवः कर्म च, इत्यादिबोधितकमर्णः सङ्ग्रहाय कारिकायामाश्रयपदेन "कर्मणि द्वितीया" इत्यादौ कर्मपदेन कर्मत्वशक्त्याश्रय इत्यर्थ एवोचितः।[२१] कर्मत्वशक्तिश्च यस्य यस्य कर्मसंज्ञा तत्र तत्र बोध्या। संज्ञाया एव तद्बोधकत्वात्। क्रियाजन्यफलाश्रयस्यैव कर्मपदेन ग्रहणे तु वैकुण्ठमधिशेते इत्याद्यसिद्ध्यापत्तिः।

विषयेऽस्मिन् प्रौढमनोरमायाः शब्दरत्ने लिखितम् यत् द्वितीया विभक्ति आधारवाचिका इति इति उपलक्षणम् यतो हि 'दिवः कर्म च' इति सूत्रेण विधीयमानद्वितीयायाः करणमप्यर्थः वर्तते।[२२] उपलक्षणन्नाम स्व बोधकत्वे सति स्वेतरबोधकत्वम्, तस्मात् कुत्रत्रित् फलाश्रयस्य कुत्रचित् तदभिन्नस्याश्रयस्य बोधो भवति।[२३] मनोरमाकारेण आश्रयशब्दस्य स्थाने आधार इति शब्दः प्रयुक्तः। तेनोक्तम्"कर्मणिद्वितीयेति सूत्रे हि तत्सूत्रैर्यावतां कर्मसंज्ञा विहिता ते सर्वे तेन रूपेणोपस्थिताः। तेषु च विधीयमाना द्वितीया आधारवाचिका, लाघवात्।[२४]

यत् उपलक्षणत्वोऽव "दिवायोगेकरणवाचकत्वात्"।[२५]

कर्तुरीप्सित सूत्रेण विधीयमानकर्मसंज्ञा निरूपित कर्मणि द्वितीया इति सूत्रेण विहित द्वितीयायाः उद्देश्यत्वमर्थः इति भाष्यकारेणोक्तम्।

## सन्दर्भ


१. पा. अ. सू. १/४/४६

२. ल. श. शे. पृ. ६३१

३. प.ल.म. पृ. २३५

४. प.ल.म. पृ. २३८
५. ल.श.श. पृ. ६६०
६. पा. अ. सू. १.४.५१
७. ल. श. शे. पृ. ६६२
८. ल. श. शे. ६६६
९. प्रौ. मनो. पृ. ८४५
१०. प्रौ. मनो. (श. र.) पृ. ८४५
११. ल. श. शे. पृ. ६६३
१२. पा. अ. शू. १.४.५२
१३. प्रौ. मनो. पृ. ८५७
१४. ल. श. शे. पृ. ६७६
१५. ल. श. शे. पृ. ६७५
१६. पा. अ. सू. १.४.५३
१७. पा. अ. सू. १.४.४६
१८. पा. अ. सू. १.४.४७
१९. पा. अ. सू. १.४.४८
२०. वै.भू.सा. पृ. १६८
२१. वै.भू.सा. प्रभा, पृ. १७०
२२. प्रौढमनोरमा, पृ. ८३७
२३. वै.भू.सा. प्रभा, पृ. १७०
२४. प्रौढमनोरमा, पृ. ८३७
२५. प्रौढमनोरमा, २१.२ पृ. ८७

■ पता : सहायकाचार्य, राष्ट्रिय संस्कृत संस्थान, लखनऊ परिसर

# ज्योतिषशास्त्र में दैवज रोग विचार

■ मदनमोहनपाठक

"शुभाशुभफलादेशः ज्योतिः शास्त्रप्रयोजनम्"[1] इस नारदोक्ति से ज्योतिषशास्त्र का प्रयोजन भूत-भविष्य-वर्त्तमानकालिक व्यष्टि व समष्टिगत सभी प्रकार के शुभाशुभफल का निरूपण करना ही है। वेदाङ्ग[2] के इस अत्यन्त व्यापक तथा विशिष्ट निधि से प्रकृत-प्रसङ्ग में जातक के "दैवज रोग" पर विचार किया जाएगा। जैसा कि ज्योतिषशास्त्र[3] की परिभाषा "ज्योतिषां ग्रहर्क्षाणां गति स्थितिञ्चाधारीकृत्य शुभाशुभफलद्योतकं शास्त्रं नाम ज्योतिषशास्त्रम्"[4] से ही सुस्पष्ट है कि विभिन्न कालों में सूर्यादिग्रहों तथा अश्विन्यादि नक्षत्रों के विभिन्न रूपों एवं हमारे ऊपर उनके प्रतिक्षण पड़ने वाले प्रभावों के रहस्यों को उद्घाटित करने हेतु यह ज्योतिषशास्त्र प्रवृत्त हुआ है।

आकाशीय उन समस्त ग्रहों तथा नक्षत्रों का भूपृष्ठस्थ चराचरों पर प्रतिक्षण प्रभाव पड़ता है, जिसके कारण हमारे आभ्यन्तरिक व बाह्य शरीर का भाग उद्वेलित होता रहता है। सम्भवतः इसी कारण तत्त्वद्रष्टा त्रिकालदर्शी महर्षियों ने "यत् पिण्डे तत् ब्रह्माण्डे" इस सिद्धान्त को वैदिकदर्शनशास्त्र में निरूपित किया है। इस सिद्धान्त का अभिप्राय यही है कि सौरजगत् के सूर्यादिग्रहों तथा अश्विन्यादिनक्षत्रों में जो गतिविधियाँ काम करती हैं ठीक वे उसी प्रकार से इस चराचर के प्रत्येक पिण्ड में स्थित सौरजगत को सञ्चालित करती हैं। इस सिद्धान्त को समझने के लिए सर्वप्रथम यह जान लेना आवश्यक है कि किसी भी प्राणी तथा पदार्थ के सूक्ष्म तथा प्राथमिक संरचना का मूलाधार परमाणु ही है। इन्हीं परमाणुओं को जोड़कर प्राणी तथा पदार्थ के विशालतम स्वरूप का निर्माण होता है। इससे सुस्पष्ट होता है कि सौरजगत में स्थित ग्रह तथा नक्षत्रों के पिण्डों के साथ हमारा सतत सम्बन्ध उनकी गति-स्थिति एवं रासायनिक परिवर्त्तनों के अनुरूप हमें प्रभावित करता रहता है। एक समय में ही पृथ्वी के अलग-अलग स्थान पर भिन्न-भिन्न जलवायु को हम इसके साक्ष्य के रूप में अङ्गीकार कर सकते हैं। जैसे निरक्षखमध्य[5] के उत्तर में सूर्य के रहने पर पृथ्वी के उत्तरी-गोलार्द्ध में रहने वाले गर्मी का अनुभव तथा ठीक उसी समय पृथ्वी के दक्षिणी-गोलार्द्ध[6] में रहने वाले गर्मी से राहत का अनुभव करते हैं। इसका कारण यह है कि ग्रीष्म[7] तथा वर्षा ऋतु[8] में सूर्य तथा पृथ्वी के उत्तरी भाग में आसन्नत्व तथा हेमन्त[9] एवं शिशिरऋतु[10] में पृथ्वी तथा सूर्य का दूरत्व हेतु है।

इसी प्रकार सूर्य तथा चन्द्र के आसन्नत्व एवं दूरत्व के कारण ही पूर्णिमा[11] एवं अमावस्या[12] को समुद्र के अन्दर इनकी लहरें तथा ज्वार-भाटाओं का संवेग सर्वाधिक हो जाता है। वायुमण्डल में भी अन्य अवसरों की अपेक्षा इस समय अधिक संक्षोभ उत्पन्न हो जाता है। इस समय भूकम्प के झटके लगने की भी सम्भावना रहती है। सम्वत् २०६१ के मार्गशीर्षशुक्लपक्ष पूर्णिमा रविवार तदनुसार दिनाङ्क २६ दिसम्बर २००४ को मृगशिरानक्षत्र में सञ्चरित चन्द्र के समय आये सुनामी नामक प्रलयङ्कारी तुफान का दृश्य व परिणाम समुद्र के तटवर्ती सभी को ज्ञात ही है। इस सुनामी तुफान में असंख्य जन-धन की हानि हुई थी। उपर्युक्त इन समस्त उदाहरणों में यदि कारणों का अन्वेषण किया जाए तो एक वाक्य में यही कहा जा सकता है कि ग्रहों का प्रभाव ही इसमें हेतु है।

अस्तु, इन्हीं ग्रह-प्रभावों के कारण स्त्रियों में मासिक ऋतुधर्म[१३] की प्रवृत्ति भी होती है। जिसका वर्णन बृहज्जातकादि प्रायः समस्त जातकग्रन्थों में प्राप्त होता है। जैसा कि बृहज्जातक में श्रीमान् वराहमिहिर ने कहा है[१४]-

**कुजेन्दुहेतुप्रतिमासमार्त्तवं गते तु पीडर्क्षमनुष्णदीधितौ।**
**अतोऽन्यथास्ते शुभपुंग्रहेक्षिते नरेण संयोगमुपैति कामिनी।।**

अर्थात् आकाशीयग्रहमण्डलस्थ चन्द्र एवं मङ्गल के सञ्चारवश स्त्रियों में मासिक ऋतुधर्म होता है। ऋतुधर्म के काल का निर्धारण करते हुए आचार्य का कहना है कि जातिका के जन्मराशि से विभिन्न राशियों में सञ्चरित चन्द्रमा जब पीडर्क्ष अर्थात् अनुपचय १, २, ४, ५, ७, ८, ६, १२वीं राशि में जाता है तब किसी भी स्त्री में ऋतुधर्म की प्रवृत्ति होती है। (यदि इसके आगे पीछे ऋतुधर्म होवे तो स्त्री आभ्यन्तरिकरूप से अस्वस्थ है ऐसा जानना चाहिए।) तब उसके स्वास्थ्य सम्वर्धनार्थ मिथ्या-आहार-विहार का त्याग कर औषध सेवन कराना चाहिए। लेकिन यहाँ यह भी ध्यातव्य है कि यह योग वाला, वृद्धा, रुग्णा स्त्री में लागू नहीं हो सकता। क्योंकि आचार्यो ने कहा है-बालवृद्धातुरैर्विना[१५]। अब यहाँ शङ्का उपस्थित होती है कि इस स्त्रियों के ऋतुधर्मप्रसङ्ग में तमाम उन ग्रहों में से केवल चन्द्र-मङ्गल का ही क्यों विचार किया गया ? इसके समाधानार्थ कल्याणवर्मा का वचन[१६]-

**अनुपचयराशिसंस्थे कुमुदाकरबान्धवे रुधिरदृष्टे।**
**प्रतिमासं युवतीनां भवतीह रजो ब्रुवन्त्येके।**
**इन्दुर्जलं कुजोऽग्निर्जलमस्त्रं त्वग्निरेव पित्तं स्यात्।**
**एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु।**
**एवं यद् भवति रजो गर्भस्य निमित्तमेव कथितं तत्।**
**उपचयसंस्थे विफलं प्रतिमासं दर्शनं तस्य।।**

अर्थात् स्त्री के जन्मराशि से अनुपचय १, २, ४, ५, ७, ८, ६, १२वीं राशि में चन्द्रमा जब जाता है एवं ऐसा चन्द्र जब मङ्गल से दृष्ट होता है तब किसी भी स्त्री में ऋतुधर्म की प्रवृत्ति होती है। क्योंकि इन्दुर्जलं कुजोऽग्नि[१७] इस वचन के अनुसार चन्द्रमा जल का कारक है तथा मङ्गल अग्नि तथा पित्त का कारक है। ऐसे जलमय चन्द्र पर अग्नि व पित्तकारक मङ्गल की दृष्टि से स्त्रियों में ऋतुधर्म (मूत्रेन्द्रिय से रक्तस्राव) का होना स्वाभाविक ही है। यहाँ पर यह भी ध्यातव्य है कि ऐसा ही रज गर्भधारण करने में सामर्थ्यवान् होता है। सरकार अथवा जनसंख्या नियन्त्रण विभाग के अधिकारीगण ज्योतिषशास्त्र के इस गम्भीर विषय पर ध्यान देकर इसका जन-जन तक प्रचार-प्रसार करावें तो शरीर के किसी अङ्ग को बिना काटे छाँटे जनसंख्या नियन्त्रण में काफी उपलब्धि मिल सकती है। यहाँ की जनता स्वस्थ, प्रसन्न व दीर्घायुष्य को प्राप्त करने के साथ अपने मनोभिलषित स्वाथ्य एवं दीर्घायु पुत्र व कन्या को प्राप्त कर अपने गार्हस्थ-जीवन का सदुपयोग करता हुआ मानव-जीवन को सफल बना सकता है।

इन उपर्युक्त तथ्यों से सुस्पष्ट होता है कि जीव के निर्माण क्रिया में अर्थात् गर्भाधान-काल से ही निरन्तर ग्रहों का प्रभाव जीव मात्र को प्रभावित करता रहता है। इस तथ्य को हमारे महर्षि-गण अनादि काल से ही स्वीकार करते आये हैं। लेकिन इस तथ्य को रूस के आधुनिक जीव-वैज्ञानिक प्रो. जार्जिस् लाखोवस्की ने स्पष्टरूप से जब अपनी प्रसिद्ध पुस्तक-ली ग्राण्ड प्रोब्लेम (Le Grand Problem) में इसका उल्लेख किया तब लोगों की दृष्टि इधर गई। उन्होंने स्पष्ट किया है कि -''गर्भाधान एवं जन्म के समय तारों एवं ग्रहों से पृथ्वी पर आने वाली रश्मियाँ व्यक्ति के भावी भाग्य व जीवन को विशिष्ट रूप से प्रभावित करती है।'' इन समस्त उदाहरणों व दृष्टान्तों से सुस्पष्ट होता है कि गर्भाधानकालिक ग्रहस्थिति एवं जन्मकालिकग्रहस्थिति जीवमात्र के जीवन को प्रभावित करती रहती है। अतः गर्भाधानकालिक व जन्मकालिकग्रहस्थिति की अनुकूलता से जातक स्वस्थ, प्रसन्न व दीर्घायु तथा ग्रहस्थिति की प्रतिकूलता से जन्मजातरोग एवं देहदौर्बल्य, शारीरिक-मानसिक प्रतिकूलतायें आदि अशुभ फल की प्राप्ति होती है। यहाँ पर जातकशास्त्रोक्त दैवजरोग विषय को संक्षेप में उपस्थित किया जाता है-

दैवजरोग वह रोग है जिस रोग से जातक जन्मकाल से ही प्रभावित होता है। इसे जन्मजात रोग भी कह सकते हैं। दैवजरोग के योग जातकशास्त्र में इस प्रकार मिलते हैं। जैसे-हीनाधिकाङ्गयोग, वामनयोग, कुब्जयोग, अन्धयोग, काणयोग, मूकयोग, बधिरयोग, नपुंसकयोग, जड़योग आदि। यहाँ पर ध्यातव्य है कि इन रोगों में जन्मकालिक तथा गर्भाधानकालिक ग्रहस्थितियों का प्रभाव जहाँ कारणभूत है वहीं जातक तथा उसके माता-पिता का पूर्वार्जित कर्म भी इन रोगों में कारणभूत है। इस विषय में आचार्य वराहमिहिर का कहना है[१८]

**यदुपचितमन्यजन्मनि शुभाशुभं कर्मणः स्यात् पंक्तिम्।**
**व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव।।**

जातकशास्त्रोक्त दैवजरोगविचार के प्रसङ्ग में सर्वप्रथम हीनाङ्गयोग का उल्लेख प्राप्त होता है। जैसे-

## हीनाङ्गयोग[१९]

१. मकरराशि का अन्तिम द्रेष्काण अर्थात् कन्याराशि का द्रेष्काण लग्न में हो तथा शनि-चन्द्र-सूर्य से दृष्ट हो तो जातक वामन होता है।
२. प्रथमभाव का द्रेष्काण मङ्गल से युक्त तथा शनि-चन्द्र-सूर्य से दृष्ट हो तो पैदा होने वाले शिशु को शिर नहीं होता।
३. पञ्चमभाव का द्रेष्काण केवल मङ्गल से युक्त हो तथा सौर-शशाङ्क तथा दिवाकर से दृष्ट हो तो जातक को हाथ नहीं होता।
४. नवमभाव का द्रेष्काण केवल मङ्गल से युक्त हो तथा शनि-चन्द्र-सूर्य से दृष्ट हो तो पैदा होने वाले शिशु को पैर नहीं होता है।
५. लग्न से दशमस्थ चन्द्रमा, सप्तमस्थ मङ्गल तथा द्वितीयस्थ सूर्य हो तो जातक अङ्गहीन होता है।
६. राहु अथवा मङ्गल के साथ सप्तमस्थ शनैश्चर यदि निर्बल हो तो जातक अङ्गहीन होता है।
७. आधानलग्न में पापग्रहों से दृष्ट लग्न में बुध तथा शनि हो तो जातक को हाथ और पैर नहीं होता।

अपितु केवल पिण्ड का ही प्रसव होता है।

८. पापग्रह से देखा जाता हुआ मङ्गल यदि पञ्चमस्थ हो तो जातक अङ्गहीन होता है।

९. पापग्रह से देखा जाता हुआ मङ्गल यदि नवमस्थ हो तो जातक अङ्गहीन होता है।

**कुब्जायोगज्ञान**[२०]

१. आधान कुण्डली में मङ्गल तथा शनि से दृष्ट कर्कस्थ चन्द्रमा लग्नस्थ हो तो जातक कुबड़ा होता है।

२. मेष अथवा वृश्चिकराशिस्थ लग्नेश वृश्चिक के नवांश का होकर चतुर्थभावस्थ हो तो जातक कुबड़ा होता है।

**अन्धा/काणायोगज्ञान**[२१]

१. जन्मकाल व आधानकाल में पापग्रह से युक्त शुक्र द्वितीयस्थ अथवा द्वादशस्थ हो तो जातक काणा (एक नेत्रवाला) अथवा मन्ददृष्टि वाला होता है।

२. क्रूरग्रह से युक्त सूर्य नवम, पञ्चम अथवा द्वादश में कहीं भी हो तो जातक विकलनेत्र वाला होता है।

३. वक्रगतिकग्रह की राशि में षष्ठेश हो तो जातक नेत्ररोगी होता है।

४. मङ्गल एवं बुध से दृष्ट लग्नेश मङ्गल अथवा बुध की राशि में स्थित हो तो जातक नेत्ररोगी होता है।

५. लग्नेश अष्टमेश यदि षष्ठस्थ हो तो जातक के वाम नेत्र में रोग होता है।

६. षष्ठस्थ वा अष्टमस्थ शुक्र दक्षिणनेत्र में रोग उत्पन्न करता है।

७. धनेश शुभग्रह तथा लग्नेश पापग्रह से युक्त हो तो जातक के नेत्र में रोग होता है।

८. द्वितीय-द्वादशाधिपति यदि शनि-मङ्गल एवं गुलिक से युक्त हो तो जातक के नेत्र में रोग होता है।

९. शनि से दृष्ट पापग्रह द्वितीयस्थ अथवा द्वादशस्थ हो तो जातक के नेत्र में रोग होता है।

१०. द्वितीय-द्वादशभावाधिपति का नवांशेश पापग्रह की राशि में हो तो जातक के नेत्र में रोग होता है।

११. क्रूरग्रह से दृष्ट शुक्र लग्नस्थ वा अष्टमस्थ हो तो अश्रुपात से नेत्र में पीड़ा होती है।

१२. धनेश और शुक्र संयुक्त हों तो नेत्रपीड़ा होती है।

१३. शुक्र से ६, ८, १२ भाव में द्वितीयेश एवं द्वादशेश जहाँ कहीं अवस्थित हो तो नेत्रपीड़ा होती है।

१४. पापग्रह दृष्ट सूर्य पञ्चम अथवा नवमभाव में अवस्थित हो तो जातक का चक्षुः निस्तेज होता है।

इस प्रकार जातकतत्त्व के प्रथमविवेक सूत्र संख्या २२२ से २७७ तक चक्षुरोग के विषय में व्यापक विचार किया गया है।

**बधिरयोग**–जातकतत्त्व प्रथमविवेक सू.सं. २७८ से २८७ तक।

**मुखरोगयोग**–जातकतत्त्व प्रथमविवेक सू.सं. २८८ से २९७ तक।

**पङ्गुयोग**–जातकतत्त्व प्रथमविवेक सू. सं. २२७ से ३४५ तक।

**नपुंसकयोग**–जातकतत्त्व प्रथमविवेक सू.सं. १३२ से १५० तक।

**उन्मादयोग**–जातकतत्त्व प्रथमविवेक सू. सं. १५१ से १६० तक।

यह विषय इतना व्यावहारिक तथा व्यापक है कि इस पर हजारों पृष्ठ सोदाहरण लिखे जा सकते हैं। अन्ततः इन समस्त दैवज रोग का निदान चिकित्साविज्ञान में नहीं है। अनेक जन्मों के पापकर्म के द्वारा इन रोगों की उत्पत्ति तथा उतने ही अनन्त उत्कट शुभकर्म से उन रोगों का क्षय कर्मविपाक आदि धर्मशास्त्रीय ग्रन्थों के अनुशीलन से ज्ञात होता है। इस विषय में न केवल ज्योतिर्विज्ञान के ग्रन्थों में चर्चा मिलती है अपितु अन्य शास्त्रान्तर में भी इसकी चर्चा मिलती है। जैसे आचार्य पाणिनि ने भी अपने सिद्धान्त कौमुदी[२२] में कहा है-

क्षेत्रियच् परक्षेत्रे चिकित्स्यः। अर्थात् क्षेत्रियो व्याधिः परक्षेत्रे शरीरान्तरे चिकित्स्यः।

## सन्दर्भ

१. नारदसंहिता
२. शिक्षा कल्पो व्याकरणं निरूक्तं ज्योतिषां गतिः। छन्दसां लक्षणञ्चैव षडङ्गो वेद उच्यते।।
३. इसे वेदाङ्गो का नेत्र कहा जाता है।
४. जातकपत्र मीमांसा
५. सिद्धान्तज्योतिष में नाड़ी-याम्योत्तरवृत्त के सम्पात के निरक्षखमध्य कहते हैं। जहाँ अक्षांश शून्य है।
६. निरक्षखमध्य से दक्षिणी भाग को दक्षिणगोलार्द्ध कहते हैं।
७. ग्रीष्मऋतु वृष-मिथुन मास हैं। चान्द्रमान के अनुसार इसे ज्येष्ठ व आषाढ़ मास कहते हैं।
८. वर्षाऋतु कर्क व सिंह मास हैं। चान्द्रमान के अनुसार इसे श्रावण व भाद्रपद मास कहते है।
९. हेमन्तऋतु वृश्चिक व धनु मास है। चान्द्रमास के अनुसार इसे मार्गशीर्ष व पौष मास कहते हैं।
१०. शिशिरऋतु मकर व कुम्भ मास है। चान्द्रमास के अनुसार इसे माघ व फाल्गुन मास कहते हैं।
११. पूर्णिमा शुक्लपक्ष की अन्तिम तिथि है। इस तिथि में सूर्य व चन्द्र की दूरी १८० डिग्री होती है।
१२. अमावश्या कृष्णपक्ष की अन्तिम तिथि होती है। इसमें सूर्य व चन्द्र का कोणात्मक मान ० डिग्री होता है।
१३. रजस्वला स्त्रियों में प्रतिमास होने वाला रजःस्राव उनका ऋतुधर्म कहलाता है।
१४. बृहज्जातकम् निषेकाध्यायः श्लो. सं. १
१५. स्त्रीणां गतोनुपचयर्क्षमनुष्णरश्मिः सन्दृश्यते यदि धरातनयेन तासाम्।
गर्भग्रहार्तवमुशन्ति तदा न बन्ध्यावृद्धातुरात्पवयसामपि चेतदिष्टम्।। वादरायण
१६. सारावली- ८/२, ३, ४, श्लो.
१७. सारावली- ८/३
१८. लघुजातकम्- १/२
१९. सारावली- ८/५५-६२
२०. जातकतत्त्वम्- प्रथमविवेके
२१. तत्रैव-
२२. सिद्धान्तकौमुदी- ५/२/९२

■ पता : विभागाध्यक्ष (ज्योतिष) रा.सं.सं., लखनऊ परिसर लखनऊ

# कौटुम्बिककल्याणाय वास्तुविचारः

■ शैलजा पाण्डेय

परिवारसंस्थायाः आधारशिला सुखदगृहस्थजीवनोपरि न्यस्ता वर्तते। भारतवर्षे कुटुम्बपदेन दम्पति, तयोः सन्ततिः इत्येव परिगणिताः न भवन्ति अपितु अस्मिन्, वृद्धपितरौ, अविवाहिताः भ्रातरः भगिन्यश्च, सन्ततिः, तेषां वयस्के जाते पुत्रैः सह पुत्रवध्वः, पौत्रादयोऽपि समायान्ति। इत्थं कस्यापि कौटुम्बिकजीवनस्थ सुखं परिवारस्थ समग्रसदस्यानां सौख्येन प्रसादेन च सम्बद्धं भवति। कुटुम्बे सुखशान्तिप्रसादनार्थं वास्तुशास्त्रे विविधाः नियमाः प्राप्यन्ते।

किं नाम सुखम्-इदं जगतः शाश्वतप्रश्नोऽस्ति। विविधाः दार्शनिकाः विचारकाश्च पृथक्-पृथगृशा स्वमतानि स्थापितवन्तः। भौतिकदृशा गृहस्थजीवनस्थ सुखमेतेषु षट्तत्त्वेषु निहितं विद्यते-सततं धनागमः, आरोग्यं, मनोनुकूला पत्नी (जीवनसहचरोवा) तस्याः प्रियवादिता, आज्ञाकारिणः पुत्राः, धनार्जनकारिणी विद्या च-

**अर्थागमो नित्यमरोगिता च**
**प्रिया च भार्या प्रियवादिनी च।**
**वश्यश्च पुत्रोऽर्थकरी च विद्या**
**षड् जीवलोकस्यसुखानि राजन्।।**

## अर्थागमः

शीलसदाचारौ-सुखद गृहस्थजीवनस्य मेरूदण्डः यथावश्यकं धनागमो भवति। तदेव धनार्जन गृहस्थाय सुखकरं भवति, अभ्युन्तति प्रददाति यस्योपार्जन सदाचारेण भवति। महाभारतस्य (शान्तिपर्व, १२४/२०-६०)

आख्यानानुसारं लक्ष्मीप्राप्तिः शीलेन सदाचारेण च भवति। कथा एवं वर्तते-एकदा प्रह्लादः स्वशीलप्रभावात् स्वर्ग लोकस्याधिपत्यं प्राप्यवान्। इन्द्रः पदच्युतो सञ्जातः। पुनः स्वर्गस्य राज्यप्राप्त्यर्थ सः बृहस्पतिशुक्राचार्ययो परामर्शानुसारेण ब्राह्मणवेषे शिष्यभावेन प्रह्लादस्य सेवां कृतवान्। इन्द्रः वारं वारं प्रह्लादं पृष्टवान् यत् सः केनोपायेन स्वर्गस्य राज्यमधिगतवान्। पौनः पुन्येन पृष्टः प्रह्लादः तं, स्वर्गस्य राज्यप्राप्तिः शीलधर्मादिकैरभवत् - इत्युक्तवान्। एकदा प्रह्लादः ब्राह्मणनेषधरस्येन्द्रस्य सेवया प्रसन्तो भूत्वा तं-वरं ब्रूहि-इत्युक्तवान्। इन्द्रः तस्य शीलमेव याचितवान्। शीलस्य गमनादेव प्रह्लादस्य शरीरतः धर्मसत्यसदाचार-बललक्ष्म्यादयः सर्वे निर्गतवन्तः। गमनोद्यतां लक्ष्मी क्षुब्धः प्रह्लादः ब्राह्मणस्य विषये पृष्ठवान् तथा ब्राह्मणः इन्द्रः आसीत्, इत्यपि ज्ञातवान्। इत्थं शीलरहितः प्रह्लादः स्वर्गराज्यतः भ्रष्टः राज्यलक्ष्मीरहितश्चाभवत् प्रह्लादं प्रति लक्ष्म्याः वचनमेवमासीत्-

**धर्मः सत्यं तथा वृत्तं बलं चैव ह्यहम्।**
**शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः।।**[1]

शीलं व्याख्यायन् व्यासः उपदिष्टवान्-मनसा वाचा कर्मणा कस्यापि अनिष्टं न भवेत्। अनुग्रह दानं[२] अहितकरं लज्जोत्पादकं कार्य न कुर्यात[३], येन कर्मणा सभायां श्लाधा भवेत्[४] तच्छीलं भवति। एवंशीलसदाचारसमन्विते गृहस्थस्य गृहे लक्ष्मी सदैव निवसति।

**मुखद्वारस्यालङ्करणम्**-भवनं सर्वदा सुखसमृद्धियुतं भवेत्, अस्य कृते प्रवेशद्वारं मङ्गलप्रतीकैः घट-पत्र-नारिकेलादिभिः अलङ्कृतं कुर्यात्। उक्तञ्च बृहत्संहितायाम्।

**मूलद्वारं नान्यैद्वारैरमिसंदधीत रूपर्द्धया।**
**घटफलपत्रप्रमदादिमिश्च तन्मङ्गलैश्चिनुयात्।।**[५]

किन्तु गृहस्यान्यद्वाराणां सज्जा तथा न करणीया भवति।

**द्वारवेधस्य बहुद्वारस्य च निषेधः** भवने प्रवेशद्वाराणि निर्गमन-द्वाराणि बहुसंख्यकानि सुष्ठु न भवति। यस्य भवनस्य निर्माणकार्यं नूतनपदार्थैः भवति, द्वार-वेधो न भवति, दोषः राहित्यं भवति तस्मिन् गृहे धन-धान्यं तिष्ठति-

**न दोषो यत्र न वेधादिर्नवयत्राखिलं भवेत्।**
**बहुद्वाराणि नो यत्र स्याद्धनधान्यसञ्चयः।।**[६]

**आरोग्यम्** -गृहस्थजीवनस्यापरसुखं 'नित्यमरोगिता' इत्युक्तमस्ति। कुटुम्बे सवे प्राणिनः शरीरेण मनसा च स्वस्थाः प्रसन्नाश्च भवेयुः एतदर्थं वास्तुशास्त्रे विविधाः विचाराः प्राप्यन्ते।

**द्वारविचारः** -गृहे आरोग्यार्थं द्वाराणां समीचीनं प्रमाणं, द्वारवेधस्य निराकरणं, ब्रह्मस्थाने (गृहस्थ मध्यभागे) स्तम्मादीनां परिहारः विचारणीयं भवति। द्वारस्य स्वयं विधानमपिधानं वः, मानाधिक्यं द्वारस्यातिनतत्त्वमेवमन्ये दोषाः रोगकारकाः भवन्ति। यथा उन्मादरोगः स्वयमुद्घाटितेन द्वारेणोक्तम्-**उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः।**[७]

**द्वारवेधः**-प्रवेशद्वारस्थ सम्मुखं यदि मार्ग-वृक्ष-कोण-स्तम्भ-कूप-जलमार्गादिकवेधकारणानि भवेत् तर्हि भवने द्वार-वेध दोषो भवति। किन्तु यदि कारणानामुपस्थितिः द्वारोच्छ्रयात् द्विगुणस्थानं विहाय भवेत् तर्हि दोषाः न भवति-

**मार्गतरूकोणस्तम्भकूपभ्रमविद्धमशुभदं द्वारम्।**
**उच्छ्रयाद् द्विगुणमितां लक्त्वा भूमि न दोषाय।**[८]

उपर्युक्त वेधकारणेषु मार्गात् गृहस्वामिनः नाशः, वृक्षात् बालकेषु दोषः, पङ्कात् जलमार्गाद् वा शोकः, जलप्रवाहात् व्ययः, कूपात् अपस्मारः, देववेधात् विनाशः, स्तम्भात् स्त्रीषु दुःशीलता, ब्रह्मवेधात् (प्रतिमादिवेधात्) कुलनाशो भवति।

**रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरूणा।**
**पङ्कद्वारे शोको व्ययोऽम्बुनिःस्राविणि प्रोक्तः।**
**कूपेनापस्मारो भवति विनाशश्च देवताविद्धे।**
**स्तम्भेन स्त्रीदोषाः कुलनाशो ब्रह्मणोऽभिमुखे।**[९]

**ब्रह्मस्थानम्**-गृहस्थ मध्यभागः ब्रह्मस्थानं निगद्यते। अत्र स्तम्भादिभागानां निर्माणकार्यं गर्हितं भवति। गृहस्थ हृत्स्थानस्वरूपेऽस्मिन् भागे भारयुतानां पदार्थानां निक्षेपः, उच्छिष्टपदार्थानामपवित्र पदार्थानां तत्र स्थापनं गृहस्वामिनं कृते कुटुम्बिजनेभ्यश्चाधिव्याधिकारको भवति। उक्तञ्च वृहत्संहितायाम्-

**सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद् गृही गृहान्तःस्थम्?**
**उच्छिष्टाद्युपद्याताद् गृहपतिरूपतप्यते तस्मिन्।।[10]?**

गृहस्थ मध्यभागे द्वारस्य निर्माणं द्रव्यान्ननाशकरं कलहशोकप्रदायकं भवति।

विश्वकर्मणा उक्तञ्च-

**गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम्।**
**आवहेत् कनहं शोकं नारीर्वा सम्प्रदूषयेत्।।[11]**
**भारद्वाजोऽपि वास्तुमध्यस्थद्वारस्य निषेधं करोति-**
**शिरा मर्माणि वंशाश्च नालमध्यं च सर्वशः।**
**विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत्।।[12]**

**गृहोच्छ्रयविचारः** - गृहाय भूमिचयने गृहनिर्माणकाले च भूमिभवनयोः उच्छ्रितिः नतिश्च विचारणीयं भवति। गृहस्थ दक्षिण भागं पश्चिमभागञ्चोन्नतं कारयेत्। पूर्वप्लवमुत्तरप्लवञ्च दक्षिणे पश्चिमे च तुङ्गं भवनं गृहस्वामिनं धनधान्यसमन्वितमभ्युदयशीलञ्च करोति-

**स्यादुन्नतिः पूर्वनते नराणां वास्तौ धनं दक्षिणाभागतुङ्गे।**
**क्षयो धनानां विनते प्रतीच्यां उच्चैर्विनाशो ध्रुवमुत्तरेषु।।**

**वास्तुप्रबोधः** यदि गृहं पूर्वदिशि उत्तरदिशि चोच्छ्रितं भवति, तदा गृहस्वामिनः धनहानिः सुतहानिश्च भवति, दुर्गन्धयुते भवने सुतवधः, वक्रे भवने बन्धुबान्धवानां हानिः, भवने स्पष्टदिग्बोधस्याभावे जाते सन्ततिर्न भवति-

**प्रागुत्तरोन्नते धनसुतक्षयः सुतवधश्च दुर्गन्धे।**
**वक्रे बन्धुविनाशो न सन्ति गर्भाश्च दिङ्मूढे।।[13]**

**गृहे जलस्य स्थितिः** गृहे जलस्य अनुकूला स्थितिरपि कुटुम्बे धनसुतानां वृद्धिं प्रददाति। जलस्थानस्य प्रतिज्ञलता विविध कष्टानि उत्पादति वराह मिहिरस्य मतानुसारमुत्तरदिशि ईशानकोणे च गृहे जनस्थितिः धनसुतवृद्धि कारको भवति, अन्यदिक्षु जलस्थानात् सुतहानिः अग्निभयं, शत्रुभयं, स्त्रीजनेषु कलहकारिता, तासु दोषाः, निर्धनता गृहे जायन्ते-

**प्राच्यादिस्थे सलिले सुतहानिः शिखिभयं शिपुभयं च।**
**स्त्रीकलहः स्त्रीदौष्ट्यं नैस्व्यं वित्तात्मजानिवृद्धिः।।[14]**

**सुखदं दाम्पत्यजीवनम्** -भौतिकजीवनस्य वट्सुखेषु 'प्रिया च भार्या प्रियवादिनी च' उक्तमस्ति। सुखमयजीवनस्य कारकं तत्त्वं मनोनुकूलः सहचरोऽपि भवति। दातपत्य-जीवनस्य सन्दर्भे वास्तुशास्त्रीयं मतं दर्शनीयं वर्तते-

**कामोपभोगसदनम्**

दाम्पत्यजीवने कामस्य महत्त्वपूर्ण स्थानं वर्तते। पुरूषार्थचतुष्टयं परिगणितस्य अस्य पुरूषार्थस्य सन्दर्भे इदमेव पर्याप्तमस्ति यत् गीतायां भगवान् श्रीकृष्णः स्वकीयं परिचयं धर्माविरूद्धकामरूपेण प्रस्तौति। गृहस्वामी स्वकीयं कामगृहं वायव्योत्तरयोः मध्ये कुर्यात्-

**ततः कामोपभोगसदनं वायुकौबेरमध्यतः।**[१५]

मुहुर्तचिन्तामणिग्रन्थेऽपि इदं तथ्यं प्राप्यते। कक्षानां स्थिति पूर्वतः क्रमशः एवं प्राप्यते-

**स्थानाग्निपाकशयनास्त्रभुजेश्च धान्य-**
**भाण्डारदैवत गृहाणि पूर्वतः स्युः**
**तन्मध्यस्तु मथनाज्यपुरीष विद्या-**
**भ्यासाख्यरोदनरतौषधसर्वधाम।।**[१६]

युवादम्पतीनां कृते यथासम्भवं अत्रैव व्यवस्था समीचीना भवति।

**शयनकक्षः** वास्तुशास्त्रे शयनकक्षस्य कामसदनात् पृथग्व्यवस्था प्राप्यते। शयनकक्षः, विशेषतया गृहप्रमुखस्य, दक्षिणे भवेत्-याम्यायां शयनं वेश्म[१७] दक्षिणदिशि शयनकक्षे शय्याचाः शिरोभागं पूर्वदिशि दक्षिणदिशि वा कुर्यात्। शयनकाले यदा पूर्वे शिरो भवति तर्हि विद्यालायो भवति। दक्षिणे सुखसम्पदः, पश्चिमे चिन्ता, उत्तरे च हानिमृत्यू भवति। उक्तमाचारमपुखे-

**प्राक्शिरः शयने विद्या दक्षिणे सुखसम्पदः।**
**पश्चिमे प्रबला चिन्ता हानिर्मृत्युः तथोत्तरे।।**
**अनुकूला सन्ततिः, तस्य शिक्षा विकासश्च**

दाम्पत्यजीवनस्य सफला परिणति अनुकूलसन्ततिप्राप्तिर्भवति। आधुनिकजीवनसंख्या पाश्चात्यसंस्कृत्याः आगतात् प्रभावात् स्वपुत्रादीनां रक्षणं कस्यापि कृतेऽसम्भवं वर्तते। अस्मात् दुष्प्रभावात् सन्ततिषु औद्धत्यं, स्वार्थपरता, सङ्कीर्णमनोवृतिप्रभृतिदोषाः परिलक्षिताः भवन्ति। यद्यपि सर्वत्र व्यापृप्त् सांस्कृतिकप्रदूषणात् पुत्रादिकानां पूर्णरूपेण रक्षणं दुष्करं वर्तते, तथापि कैश्चित् वास्तुगतैरूपायैः तेषां पूर्णतः प्रतिकूलता निराकृता भविष्यति। उपायाः एवं सन्ति-बालकक्षः

गृहे यदि बालानां कृते कक्षव्यवस्था पृथग् वेत्, तर्हि तेषां कक्षः पूर्वदिशि भवेत्, तस्याभावे दक्षिणे भवेत्। यदि तेषां कृते पृथक् कक्षव्यवस्था नास्ति, तर्हि यत्र तेषां शयनासन व्यवस्था पूर्वे भवेत्। यतो हि, प्राक्शिरः शयने विद्याप्राप्तिः भवति। पूर्वदिशा बुद्धिप्रदायिनी भवति। पूर्वदिशि सूर्योदयो भवति। उदीयमानः सूर्यः वेदे 'सविता' इति पदेन स्तुतोऽस्ति। गायत्रीमन्त्रे सवितृदेवस्य प्रार्थना बुद्धिप्रेरणाय चेतनायै च कृतास्ति-धियो यो नः प्रयोदयात्।[१८]

**बालकक्षस्यान्तः सज्जा**-बालानां कक्षे शान्तिकराणि प्रसादकानि रमणीयानि चित्राणि स्थापनीयानि भवन्ति। यथा सम्भवं हिंसपराणि, उद्वेजनीयानि, कामप्रभावयुतानि (चित्रपटतारिकादिकानां चित्राणि) चित्राणि तत्र वर्जयेत् यतो हि चित्रेषु सततं दृष्टिपातेषु तेषां प्रभावो बालानां चित्रे मस्तिष्के च भवति। शान्तचित्राणां दर्शनेन बालानां

चित्रे शान्तिः प्रसन्नता च भवन्ति। तद् विपरीतमुद्वेगकरचित्रदर्शनेन बालकेषु आक्रामकता उद्वेजनीयता जायते। विष्णु धर्मोत्तरपुराणस्य तृतीयखण्डे गृहेषु अमाङ्गलिकचित्राणां स्पष्टतया निषेधो वर्तते-

**युद्धश्मशानकरूणामृतदुःखार्तकुत्सितान्।**
**अमङ्गल्यांश्च न लिखेत्कदाचिदपि वेश्मसु।।**[१९]

तद्विपरीतं शुभभावयुतानि चित्राणि गृहे गङ्गलप्रदानि भवन्ति-

**कलानां प्रवरं चित्रं धर्मकामार्थमोक्षदम्।**
**मङ्गल्यं परमं ह्येतद् गृहे यत्र प्रतिष्ठितम्।।**[२०]

बालानां कक्षे देवादीनां चित्राणि स्थापनीयानि भवन्ति। प्रत्यूषकाले देवादीनां दर्शनेन, दिवसशुभतायाः विश्वासो भविष्यति, तेषां चिन्तनं सकारात्मकं भविष्यति।

**बालकक्षे आसनव्यवस्था**-बालानामध्ययनाय तेषां कक्षे आसनव्यवस्था एतादृशी भवेत्, यथाध्ययनकाले बसस्य मुखं पूर्वे उत्तरे वा भवेत्। आसनस्य पृष्ठभागे भित्तिः, सम्मुखञ्चावकाशो भवेत्। यदि बालस्य विद्यार्थिनः आभिमुख्यं भित्तिः बाधा वा भवति तर्हि तस्य मानसिकक्षमता सङ्कुचिता भवति।

इत्थं कक्षव्यवस्थाकरणेन बालाः अन्येभ्यः अधिकतरं शान्ताः, संयताः, सुस्थिराः, अध्ययने एकाग्राः, परिणामतया सफलाः भविष्यन्ति।

**वृद्धमातापित्रोः कक्षः**-कस्मिन्नपि कुटुम्बे वृद्धौ पितरौ सघन वृक्षच्छायारूपौ भवतः। शरीरदृशा क्षीणे जाते तयोः जीवनस्यानुभवाः विविधजटिलावसरेषु कौटुम्बिजनाना दिशानिर्देशे समर्थाः भवन्ति। जीवनस्य सान्ध्यवेलायां तयोः यथोचितविश्रामार्थं कक्षव्यवस्थां पूर्वे दक्षिणे नैर्ऋत्यकोणे वा कारयेत्। वृद्धानां स्थानं परिवारे गौरवपूर्ण भवति। दक्षिणदिशा नैर्ऋत्यकोणञ्च गृहे गुरूभारवहनार्थ वास्तुशास्त्रे वर्णितमस्ति, अतः परिवारस्य गुरूजनानां कृते तत्र स्थानप्रदानं समीचीनं भवति।

एवं कुटुम्ब आबालवृद्धाः सर्वे जनाः स्वस्थाः प्रसन्नाः भवन्ति तदेव परिवाः सुखी भवति। स्वस्थ-सुखी-परिवारार्थ वास्तुशास्त्रे एवं मङ्गलविधानं प्राप्यते।

**पूज्यते देवता यत्र यत्रान्वेक्षणमादरात्**
**रक्ता च जनिका यत्र यत्र सम्मार्जनादिकम्।।**
**यत्र ज्येष्ठकनिष्ठादिव्यवस्था सुप्रतिष्ठिता।**
**मामवीजा संतपति भानवो नैव यत्र च।।**
**दीप्यते कोपको यत्र पालनं यत्र रोगिणाम्।**
**श्रान्तसंवाहना यत्र तत्र स्यात्कमला गृहे।।**[२१]

यस्मिन् गृहे देवपूजा भवति, कौटिम्बिकजनेषु परस्परप्रीतिः, आदरभावश्च, ज्येष्ठकनिष्ठयो यथोचितप्रतिष्ठा, रूग्णानामशक्तानाञ्च परिचर्चा भवति, श्रान्तजनाः यत्र विश्रान्तिं यान्ति, तस्मिन्नेव गृहे श्रीः श्रयति।

## ग्रन्थ-सूची


१. ऋग्वेद, वैदिक संशोधन मण्डल, १८६७

२. महाभारत, स्वाध्याय मण्डल, पारडी, बलसाउ, १९७६

३. बृहत्संहिता, सम्पा.-एम. रामकृष्ण भट्ट, मोती लाल बनारसी दास, दिल्ली, १९८१

४. वास्तु सौख्यम्, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, टेक्स्ट सिरीज उव, १९९७

५. मुहूर्तचिन्तामणि,

६. विष्णुधर्मोत्तर पुराण, तृतीय खण्ड, गायकवाड ओरियन्टल सिरीज, १३०, बड़ौदा, १९५८

७. विष्णुधर्मोत्तरपुराणीयं चित्रसूत्रम्, इन्दिरा गांधी नेशनल सेन्टर फार द आर्ट्स, नई दिल्ली, मोतीलाल बनारसी दास, दिल्ली २००१

८. मुहूर्त चिन्तामणि, चौखम्बा सुरभारती प्रकाशन, वाराणसी १९९०


## संदर्भ-सङ्केत

१. महाभारत, शान्ति पर्व, १२४/६०

२. तत्रैव, १२४/६४

३. तत्रैव, १२४/६५

४. तत्रैव, १२४/६६

५. बृहत्संहिता, ५३/८२

६. वास्तुसौख्यम्, ३७०

७. बृहत्संहिता, ५३/७६

८. बृहत्संहिता, ५३/७६

९. तत्रैव, ५४/७७, ७८

१०. तत्रैव, ५३/६६

११. बृहत्संहिता, ५३/७७, पादटिप्पणी (प्रका.-मोतीलाल बनारसी दास, १९८१)

१२. तत्रैव, ५३/७७ पादटिप्पणी
१३. तत्रैव, ५३/११५
१४. बृहत्संहिता, ५३/११६
१५. वास्तुसौख्यम्, २८४
१६. मुहूर्त चिन्तामणि, १२/२१
१७. वास्तुसौख्यम्, २७६
१८. ऋग्वेद, ३/६२/१०
१९. विष्णुधर्मोत्तर, तृतीय, ३/४३/१४
२०. तत्रैव, तृतीय, ३/४३/३८
२१. वास्तुसौख्यम्, ३७१-३७३

■ पता : रा.सं.सं., (गंगानाथ झा परिसर), इलाहाबाद

# गीतायां शिक्षादर्शनम्

■ देवीप्रसाद द्विवेदी

गीताऽध्ययनेन ज्ञायते यद् गीतादर्शनं विश्वस्य सर्वजनकल्याणाय वर्तते। शाश्वतमिदं गीतादर्शनमस्ति, प्राचीनकालाद् आद्यावधि सर्वे मतावलम्बिनो मुक्तकण्ठेन स्वीकुर्वन्ति, यतो हि अत्र नहि कट्टरवादिता, साम्प्रदायिकता, रूढिवादिता चास्ति। गीतादर्शनमत्यन्तस्वाभाविके शक्तिशालिरूपे अभिव्यक्तं विद्यते, यद् मानव-जातेराध्यात्मिकीम् आवश्यकतां पूरयति। मतमिदं प्रो. के.जी. वर्तिमहोदयेन प्रोक्तं वर्तते। सर्वेभ्यो देशवासिभ्यो दर्शनमिदं जीवनमूल्यं सत्यत्वं च प्रददाति, येन जीवनस्य चरमं लक्ष्यं सर्वमानवैः सरलतयाऽप्यते। कथनमिदं सत्यं प्रतीयते, महर्षे अरविन्दमहोदयस्य यद् गीतादर्शनं धर्मन्याय-औचित्यसंदेशं सम्पूर्णमानवप्रजातिभ्यः प्रददाति। अतो गीतादर्शनं सर्वव्यापकमस्ति। दर्शनमिदं पूर्णतया कर्माधृतम् अर्थात् कर्मपादमाधृत्य प्रवर्तते, श्रीकृष्णो भगवत्प्रतीकस्तथा अर्जुनो मनुष्यस्य जीवप्रतीको वर्तते। अर्जुनस्य संशयो मानवस्य समस्या विद्यते यत्तस्य जीवनस्य पूर्णत्वसम्पादने बाधको वर्तते। भगवता श्रीकृष्णेन अर्जुनस्य समस्तसंशया विनश्यन्ते। गीतादर्शनमाश्रित्य शिक्षादर्शने विचारं निम्नतया कर्तुं शक्नुमः-

शिक्षायास्तात्पर्यम्-संसारेऽस्मिन् शिक्षा-ज्ञानं पुनीतं कर्म विद्यते गीतामते, एतस्मादधिकं किमपि अन्यत् पुनीतं नह्यवलोक्यते शिक्षायां प्राप्तौ सत्यां मानवः शीघ्रं शान्तिमधिगच्छति। तस्मात् शिक्षा सांसारिक्यां आध्यात्मिक्याश्च शान्तिग्रहणसाधिका वर्तते। यथा-

**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।**
**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।**[१]

वर्तते शिक्षा आजीवनचलिष्यमाणा प्रक्रिया। गीतायामियं प्रस्फुटिता दृश्यते परञ्च गीता एतस्मादधिकं द्रष्टुं प्रयतते, अनेन प्रकारेण तु गीतायाः शिक्षा एकस्मिन् जीवने जन्मन आरभ्य मरणं यावच्चलित्री प्रक्रिया एव न, अपि तु जन्मान्तरेऽपि प्रचलति। शिक्षा मृत्योरनन्तरं नष्टा न भवति परन्तु अग्रिमजन्मनि अपि लक्ष्य-प्राप्तिमार्गं प्रशस्तं करोति।[२]

## शिक्षायाः उद्देश्यानि-

१. **आत्मपूर्णतायाः प्राप्तिः**-शिक्षायाः मुख्यमुद्देश्यं गीतायामात्मपूर्णत्वमेवाप्यते। श्रीकृष्ण अर्जुनं कथययति यद् भो अर्जुन ! यत्सर्वप्राणीनमुद्गमः सर्वव्यापकश्चास्ति तं भगवन्तमुपास्य मनुष्यः स्वकर्म कुर्वन् पूर्णतां प्राप्तुं शक्नोति। यथा-

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।।**[३]

२. **आध्यात्मिकज्ञानम्**-गीतायां परापरयोः विद्ययो वर्णनमाप्यते। विद्यास्ति आध्यात्मिकी परा, लौकिकी विद्या च अपरा। द्वयोर्विद्ययोर्ज्ञानं जीवने आवश्यकं वर्तते, परन्तु मानवजीवनस्य चरमं लक्ष्यं परा विद्यैव। गीतायाः चतुर्दशाऽध्याये स्पष्टतया सङ्केतः प्राप्यते। तद्यथा-

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः।।**[४]

भो अर्जुन! इदानीमहं समस्तज्ञानेषु सर्वश्रेष्ठमिदं परमं ज्ञानं कथयिष्यामि पुनः, यस्मिन् ज्ञाते सति सर्वे मुनयः परमसिद्धिमाप्नुवन्ति। श्लोकेऽग्रिमे एताम्महत्त्वम् अर्थात् जीवनमरणमुक्तिविषये प्रोक्तं वर्तते। यथा-

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।।**[५]

ज्ञानेऽस्मिन् स्थितो मनुष्यो यत् सदृशीं प्रकृतिं प्राप्तुं शक्नोति। एतादृश्यां स्थितौ सत्यां तेन न तु सृष्टिसमये उत्पद्यते न हि प्रलयकाले विचल्यते।

३. **सद्गुणप्राप्तिः**-शिक्षया मनुष्येषु सद्गुणानां विकासो भवति। शिक्षैव मनुष्यं पशुभ्यो भिन्नं करोति। शिक्षाबलादेव मानवेषु दैविकशक्तीनां प्राकृतिकशक्तीनाञ्च विकासो जायते। उक्तञ्च गीतायां यथा-

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्।।**
**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्तं मार्दवं ह्रीरचापलम्।।**
**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत।।**[६]

४. **सामाजिकविकासभावना**-भगवता श्रीकृष्ण अर्जुनमभिभाषते यद् भो अर्जुन! यज्ञदानतपसां त्यागं मा कुरू, अपितु समाजकल्याणाय तानि सम्पादय। यतो हि फलमनिच्छन्नपि एतानि कर्त्तव्यानि कर्माणि सम्पादनीयानि। एतानि निष्कामानि कर्माणि मनुष्येषु शुद्धत्वम् आदधति। तस्माद् इमानि अवश्यमेव कर्त्तव्यानि। उक्तञ्च गीतायां धनञ्जयेन, तद्यथा-

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।**
**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।**
**कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्।।**[७]

५. **गीतायां शिक्षणविधिः**-गीतायां मुख्यवर्ण्यविषयाः कर्मभक्तिज्ञानावलम्बिताः सन्ति, एताः तिस्रो विद्याः त्रिभिः विधिभिर्ज्ञायन्ते, एते विधयः कर्मज्ञानभक्तिविधीनां नामभिः कथ्यन्ते।

६. **पाठ्यक्रमः**-गीतायां परापरयोर्विद्ययोर्ज्ञानमावश्यकं वर्तते, इति उक्तमस्ति अत्र परा-विद्यासम्बन्ध अध्यात्मशास्त्रेणास्ति, अपरा-विद्यासम्बन्धश्च लौकिककर्मशास्त्रेण। शिक्षायाः साफल्यं तदैव वक्तुं शक्नुमो यदा द्वयोर्ग्रहणं स्यात्, अत एते द्वे पाठ्यक्रमे, सम्मेलनीये। गीताया अष्टादशाऽध्याये चतुर्वर्णकर्मणां विवरणमित्थम्।

**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप !**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।।**
**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमस्तिक्यं ब्रह्मकर्म स्वभावजम्।।**
**शौर्यं तेजो घृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।**
**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।।**[८]

अतो वक्तुं शक्नुमो यत् संसारिकस्य ज्ञानस्य आध्यात्मिकज्ञानस्य च क्रियान्वयनं भवति स्म।

७. **गीतानुशासनञ्च**-भगवान् श्रीकृष्ण अर्जुनमुपदिशति यत् कामक्रोधादयो मानवानां शरीरस्थशत्रवः सन्ति। एतैर्बुद्धिर्नश्यते, अनुशासनहीनाश्च भवन्ति मानवाः। यथा-

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्।।**[९]

इन्द्रियाणि मनोबुद्ध्यादीनि कामस्थानि सन्ति, तस्माद् भो अर्जुन ! एतानि मानवैर्वशीकर्त्तव्यानि, अयमेव गीताशास्त्रे संयम-अनुशासनपदवाच्यो भवति।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्।।**
**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्।।**[१०]

ज्ञानमाप्तुमावश्यकमनुशासनमस्ति। श्रद्धावान् मानवः अनुशासनयुक्तो भवति, तथा अनुशासनयुक्तः परिपूर्णो वा मानवो भगवन्तमाप्नोति। यथा उक्तं भगवता श्रीकृष्णेन गीतायाम्-

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।**[११]

७. प्रलयवेधः (दशमी ५७ घटिका)

८. महाप्रलयवेधः (दशमी ५८ घटिका)

९. घोरवेधः(दशमी ५९ घटिका)

१०. राक्षसवेधः (दशमी ६० घटिका)

अत्र शिष्टाचारं सर्वे वेधाः व्यवस्थिताः भवन्तीति शास्त्रमर्यादा।

## टिप्पणी

१ छान्दोग्योपनिषद् ७.२६.२

२ भविष्यपुरणम्। उ.प. ४.५५.२१

३ कालमाधवः पृ २६३

४ भ.पु. उद्धृतः तिः नि. सा. १.३९

५ स्मृतिसारोद्धारः पृ. १००

६ विष्णुपुराणम् उद्धृतः ति. नि. सा. १.५५

७ ब्रह्माण्डपुराणम् उद्धृतः ति.नि.सा. १.५७

८ पाराशरस्मृतिः उद्धृतः ति.नि.सा. १.५८

९ पद्मपुराणम् उद्धृतः ति.नि.सा. १.५९

१० वायुपुराणम् उद्धृतः स्मृ.सा.पृ. १०१

११ वामनपुराणम् उद्धृतः स्मृ.सा.पृ. ८९

१२ कूर्मपुराणम् उद्धृतः - १ कालतत्त्वविवेचनम् पृ. ११३, २. कालमाधवः पृ. ३२७

१३ १. भगवन्तभास्करः (समयमयूखः) पृ. ७१ २. कालमाधवः पृ. ३२७

१४ विष्णुरहस्यः उद्धृतः ति.नि.सा. १.५४

१५ स्मृ. सा. पृ. ८९

१६ मनुस्मृतिः

१७ कालतत्त्वविवेचनम् पृ. १२१

१८ विष्णुपुराणम् उद्धृतः निर्णयसिन्धुः पृ. ७७

१९ व्रतराजः पृ. ७

२० व्रतराजः पृ. २

२१ कालमाधवः पृ. ३०४
२२ पद्मपुराणम् उद्धृतः ति.नि.सा. १.३५
२३ भगवन्तभास्करः (समयमयूखः) पृ. ७३
२४ निर्णयसिन्धुः पृ. ७१
२५ ब्रह्मवैवर्तपुराणम् उद्धृतः १. कालमाधवे पृ. ३०५, व्रतराजे पृ. ३७२
२६ ति.नि.सा. पृ. १.४४
२७ ब्रह्मपुराणम् उद्धृतः ति.नि.सा. १.४५
२८ व्रतराजः पृ. ४७२
२९ ति.नि.सा. १.४६
३० स्मृतिसारोद्धारः पृ. २७
३१ स्मृतिसारोद्धारः पृ. ६७
३२ धर्मसिन्धुः/परि. १/पृ. २५
३३ धर्मसिन्धुः /स्मार्तनिर्णयः/परि. १/पृ. २६-२७
३४ स्मृतिसारोद्धारः पृ. १०२

## सन्दर्भग्रन्थसूची

१ कालमाधवः चौखम्बा संस्कृत सीरीज वाराणसी २०६२ वि.स.
२ भविष्यपुराणम् - नाग पब्लिशर्स दिल्ली २००३ ई.
३ भगवन्तभास्करः - चौखम्बा संस्कृत प्रतिष्ठान् नई दिल्ली १९८५ ई.
४ व्रतराजः खेमराज श्री कृष्णदास
५ तिथिनिर्णयसारः (यन्त्रस्थ)
६ धर्मसिन्धुः - चौखम्बा सं. संस्थान् वाराणसी २०५६ वि.स.
७ निर्णयसिन्धुः ठाकुरदास एण्ड कम्पनी वाराणसी २०२७ वि.स.
८ स्मृतिसारोद्धारः- चौखम्बा संस्कृत डिपो १९११
९ मनुस्मृतिः - चौखम्बा संस्कृत संस्थानम् वाराणसी २०४७ वि.स.
१० छान्दोग्योपनिषद
११ कालतत्त्वविवेचनम्

■ पता : सहायकाचार्या (सं.) धर्मशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम्, जयपुरपरिसरः, जयपुरम्।

# इको यणचीत्यत्रान्तर्यत एवेष्टसिद्धिरिति विषयकदीक्षितमतसमीक्षा

■ यदुवीरस्वरूपब्रह्मचारी

अथ वैयाकरणनिकाये मूर्धन्यं स्थानमलङ्कुर्वाणो तत्रभवान् भट्टोजीदीक्षितस्सिद्धान्तकौमुद्या व्याख्यानभूतग्रन्थप्रौढमनोरमायामिको यणचीति सूत्रस्य प्रपञ्चावसर एकं वाक्यमलेखि। तद्यथा- ''तस्मादिह ''स्थानेऽन्तरतम'' सूत्रेणैवेष्टसिद्धिरिति''। अत्र वाक्ये तस्मादिति पदेन पूर्वोक्तहेतुन्निर्दिशति। स चेत्थम् इको यणचीति सूत्रे इक्पदेन षट्षष्टिर्गृह्यन्ते। इकारस्याष्टादशोकारस्य अष्टादश ऋलृवर्णयोर्त्रिंशत् एतेषां भेदानां सङ्लनेनेति। एवं यण्पदेन सप्तगृह्यन्ते, यवला द्विधा अनुनासिकाननुनासिकभेदनेति। तथा नास्ति यथासंख्यमित्याशयेन दीक्षितेनाभिहितम् ''इको यणचि'' सूत्रे ''स्थानेऽन्तरतमः'' इति सूत्रेणैवेष्टसिद्धिरिति। अत्र एवकारेण ''यथासंख्यमनुदेशः समानाम्'' इति सूत्रस्य व्यावृत्तिः सूच्यते। अत्र प्रसङ्गानुसारमिदमपि विचारणीयम्भवति यदिक्पदेन कथं षट्षष्टिर्भेदाः प्रत्यपादिषत? किञ्च प्रयोजनमिति? तथा हि इको यणचीति सूत्रस्यार्थ ''अजव्यवहितपूर्वत्वविशिष्टस्येकस्थााने यण् भवति।'' एवञ्चोदाहरणं दध्यत्र मध्वत्रेति।

ननु ''आदिरन्त्येन सहेता'' इति सूत्रेण इक्पदस्य वर्णसमाम्नाये पठितेषु इ, उ, ऋ, लृ इत्येतेषु वर्णेषु शक्तिर्बोधिता। एवञ्च सुधी उपास्यः इत्यादिषु दीर्घेकारादिषु यणादेशो न स्यात्, इक्पदेन दीर्घादीनामुपस्थित्यभावात्। न च 'अइउण्' इति सूत्रे अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रप्रवृत्तिद्वारा अकारादिना दीर्घादीनामुपस्थित्या अमीषामपि इक्संज्ञा स्यादिति वाच्यम्। वाक्यापरिसमाप्तन्यायाद् अणुदित्सूत्रस्य प्रवृत्तिर्न भवति। उक्तञ्च महाभाष्ये- ''वर्णानामुपदेशस्तावद्। उपदेशोत्तरकाला इत्संज्ञा। इत्संज्ञोत्तरकाल ''आदिरन्त्येन सहेता'' इति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्ययः इति सवर्णग्रहणम् एतेन सर्वेण समुदितेन वाक्येन अन्यत्र सवर्णानां ग्रहणं भवतीति'' । अयम्भावः ''अणुदित्सवर्णस्य चाप्रत्ययः'' इति सूत्रघटिताण्पदार्थज्ञानाय ''अइउण्'' इत्यादिसूत्रज्ञानमादौ तदनन्तरं ''हलन्त्यम्'' इति सूत्रेण णकारस्येत्संज्ञा। ततश्च ''आदिरन्त्येन सहेता'' इत्यनेन अण्पदशक्तिज्ञानम्। ततः ''तुल्यास्य प्रयत्नं सवर्णम्'' इत्यनेन सूत्रेण ''नाज्झलौ'' चेति सूत्रेण सवर्णपदशक्तिज्ञानम्। तदनन्तरमेव ''अणुदित्सवर्णस्य चाप्रत्ययः'' इत्यस्य सूत्रस्य वाक्यार्थबोधः। तुल्यास्यसूत्रस्य प्रवृत्तिबेलायां 'नाज्झलौ'' इत्यपवादशास्त्रस्य उद्देश्यतावच्छेदकज्ञानमावश्यकं भवति। अन्यथा अपवादविषयेऽपि तुल्यास्यसूत्रप्रवृत्तौ ''भुक्तवन्तं प्रति मा भुक्थाः, कि तेन औतं स्यात्'' इति न्यायेन व्यर्थमेव स्यादिति। ''पूर्वं हि अपवादा अभिनिविशन्ते पश्चादुत्सर्गाः'' इति न्यायेन पूर्वमपवादशस्त्रीयोद्देश्यतावच्छेदक भिन्नत्वेनोत्सर्गशास्त्रीयोद्देशतावच्छेदके सङ्चेचं कृत्वा उत्सर्गशास्त्रवाक्यार्थबोधो भवतीति। अत एव ''प्रत्याहारोत्तरकाला सवर्णसंज्ञा'' इति भाष्यं सङ्च्छते। अन्यथा केवलसावर्ण्यविधेः प्रत्याहारानपेक्षत्वेन तदसङ्गतिः स्पष्टैव।

न च इक्पदेनोपस्थितेषु इकारादिषु अणुदित्सूत्रप्रवृत्या दीर्घादीनां ग्रहणमिति वाच्यम्। ''उच्चरित एव शब्दः प्रत्यायको भवति नानुच्चारितः'' इति भाष्येण तेषु इकारादिषु ''अणुदित्सवर्णस्य चाप्रत्ययः'' इत्यस्य अप्रवृत्तेः। इक्पदनिष्ठवृत्या अनुपस्थितत्वेन ''इको यणचि'' इति सूत्रप्रयोज्यशाब्दबोधे दीर्घादीनाम् अप्रवेशाच्चेति। शब्दरत्नकारोप्याह ''ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात्, ''उच्चारित एव शब्दः प्रत्यायको नानुच्चारित''

इति "अणुदित्" सूत्रे भाष्योक्तेः। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्, तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्वादिति।" इत्थञ्च दीर्घादीनां ग्रहणाभावे सुध्युपास्य इत्यादीनाम् असिद्ध्यापत्तौ दीक्षितेन प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा स्वीकृता। अयमर्थः प्रत्याहारबोधकपदेषु इगादिषु इक्पदवाच्य इकारादिः तद्वाच्य इकारादयोऽष्टादशभेदा तत्स्थाने यण् भवतीत्यर्थान्न दोषः। अत्र लक्षणायां ज्ञापकन्तु "दीर्घाज्जसि च" इति सूत्रम्। ल्वादिभ्यः इति सूत्रनिर्देशश्चेति। तद्यथा "आदिरन्त्येन सहेता" इति सूत्रेण इक्पदादेः वर्णसमाम्नायपठितेषु ह्रस्वेष्वेव इकारादिषु शक्तिर्बोध्यते। अनिष्पन्नत्वात् "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रं वर्णसमाम्नाये न प्रवर्तते। एवञ्च "अकः सवर्णे दीर्घः" इति सूत्रात् 'अकः' इति पदं "प्रथमयोः पूर्वसवर्णः" इति सूत्रे अनुवृत्तं सत् ह्रस्वानामेवाकारादीनां बोधकं भवति न तु दीर्घाणमिति। इत्थञ्च गौरी + औ इत्यादौ दीर्घेकारसत्त्वात् पूर्वसवर्णदीर्घस्य प्राप्त्यभावात् तस्य वारणार्थं "दीर्घाज्जसि च" इति समारब्धं सूत्रं व्यर्थं भवति, तथा हि व्यर्थं सज्ज्ञापयति प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये लक्षणेति। एवञ्च दीर्घेऽपि पूर्वसवर्णदीर्घप्राप्तिः तद्वारणाय "दीर्घाज्जसि च" इति सूत्रं सार्थकं भवति।

ननु "प्रथमयोः पूर्वसवर्णः" इति सूत्रे अनुवृत्तं यद् अक् इति पदं तत्र अकारस्योच्चारितत्वेन तस्याण्त्वात् तत्र "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रप्रवृत्त्या 'विश्वपौ' इत्यादौ प्राप्तस्य पूर्वसवर्णदीर्घस्य वारणार्थं "दीघज्जिसि च" इति सूत्रं स्यात्। एवञ्च नास्ति वैयर्थ्यं कथं तस्य ज्ञापकत्वमिति प्रश्नः। उच्यते-विश्वपा+औ इत्यादौ अवर्णादिचि परे न पूर्वसवर्णदीर्घः इत्यर्थकेन "नादिचि" इति सूत्रेणैव पूर्वसवर्णदीर्घनिषेधः सिध्यति एव। एवञ्चात्र पूर्वसवर्णदीर्घवारणार्थं दीर्घात् जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यादित्यर्थकं "दीर्घाज्जसि च" इति सूत्रमनावश्यकमेव। अतः पुनरपि व्यर्थं तस्माद् ज्ञापकमेवोचितमिति। शब्दरत्नकारोऽप्याह "अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र "नादिचि" इत्येव सिद्धमिति भावः।" ननु एवमपि न समीचीनं यतो हि यथा "अस्य च्वौ" इति सूत्रघटकीभूतोऽकारस्तथैव "नादिचि" सूत्रघटकीभूतोऽप्यकारः। उभयोरपि अनाक्षरसमाम्नायिकत्वाद् उभयसूत्राकारयोः "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्य न प्रवृत्तिः। तेन दीर्घस्याऽकारस्य ग्रहणाभावे "नादिचि" इति न प्रवर्तते 'विश्वपौ' इत्यादौ। एवञ्च "दीर्घाज्जसि च" इति पुनरपि न ज्ञापकमिति चेन्न - "अमि पूर्वः" इति सूत्रे अनुवृत्तस्य अक्पदस्य "नादिचि" इत्यत्रापि सम्बन्धः, तच्च अकारस्य विशेष्यत्वमिति। एवञ्च प्रत्याहाराद्यवर्णे "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्य प्रवृत्तिः भवत्येव। ततश्च "नादिचि" इति सूत्रे दीर्घाकारस्यापि ग्रहणात् "नादिचि" इति सूत्रं प्रवर्तत एव। यदि च निराकाङ्क्षत्वात् तत्र "नादिचि" इति सूत्रे असम्बन्ध इति उच्यते तदा तु "दीर्घाज्जसि च" इति न ज्ञापकमिति। तदा "ल्वादिभ्यः" "प्वादीनां ह्रस्वः" इत्यादिनिर्देशाः एव ज्ञापका इति बोधव्यम्। एवम्प्रकारेण स्वीकृतायां लक्षणायाम् उद्देश्यविधेययोः यथासंख्यत्वाभावात् "स्थानेऽन्तरतमः" इति सूत्रेणैव इकारस्य स्थाने यकारो भवति स्थानसाम्यादिति।

परमत्र दीक्षितस्येयं कथा सर्वथा वृथैव। यतो हि अत्र प्रसङ्गे दीक्षितवर्य्यैः विवेकेन व्याख्यानं नैव अभ्यधायि स्वग्रन्थसिद्धान्तकौमुद्याः, केवलं दूषितभावनया पूर्वाचार्याणां खण्डने एव व्यापारोऽकारि। यतो हि "इको यणचि" इति सूत्रे केवलं "यथासंख्यमनुदेशः समानाम्" इति सूत्रेणैव निर्वाहो युक्तिसङ्गतः इति। यतः जातिपक्षे यथासंख्यमस्त्येव। किञ्च दीक्षितोक्तरीत्या प्रत्याहारेषु सर्वत्र लक्षणा स्वीकारस्तु न वरम्। व्यक्तिपक्षे झलादिप्रत्याहारघटितेषु "झलो झलि" प्रभृतिसूत्रेषु सर्वझकारादीनां ग्रहणं कथञ्चिदपि कर्तुं न शक्यते, एकव्यक्तेरेव तत्र पाठादिति। यथा

'वस निवासे' इत्यस्माद्धातोः लुङ्लकारप्रथमद्विवचने च्लेः स्थाने सिजादेशे, अडागमे च अवस्+स्+ताम् इति दशायां "सः स्यार्धधातुके" इत्यनेन धातुसकारस्य तकारे औते अवत्+स्+ताम् इत्यत्र "झलो झलि" इत्यनेन सकारस्य लोपे सति उपधादीर्घे अवात्ताम् इति रूपं भवति। तच्च व्यक्तिपक्षे न सिध्येत। यतोऽत्रपक्षे झलूपदेन वर्णसमाम्नायपठितैकव्यक्तितकारस्यैव बोधो भवति। तथा चोभयोः तकारयोः झलूपदेन न ग्रहणमिति। किञ्च यथा अकारादीनाम् अष्टादशविधाऽत्वादिषु लक्ष्यतावच्छेदकत्वस्य ग्राहकम् "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रं, तथा झलादौ तत्त्वग्राहकस्य कस्यचिदभावेन लक्ष्यतावच्छेदकत्वस्य ज्ञातुमशक्यतया सर्वझकारादिव्यक्तिषु झकारादीनां लक्षणा वक्तुमशक्येति बोधव्यम्भवति। एवम्प्रकारेण सर्वत्र प्रत्याहारसूत्रेषु जातिग्रहणस्यैवौचित्यन्नतु व्यक्तिपक्षस्येति। एवमेव 'अइउण्' इत्यादिसूत्रेष्वपि। जातिपक्ष एव गरीयान्। लक्षणाऽपि नाङ्गीकर्तव्या भवति। परं दीक्षितमते तु अणंशे लक्षणा हलंशे जातिपक्षः इत्येवं रूपस्य कल्पनस्य अनौचित्यमिति। यतः संभवत्यैकरूप्ये वैरूप्यस्य अन्याय्यत्वादिति भावः। हरिदीक्षितोऽप्याह- "परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरूपपादम्। न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात्। एवञ्च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा। एवञ्च "अइउण्" (मा०सू०१) इत्यादावपि जातिनिर्देश एवोचितः। अर्धजरतीयस्यानौचित्यात्" । भगवता भाष्यकारेणापि जातिपक्ष एव समर्थितः। किञ्च लक्षणावादिमते अण्विषये व्यक्तिपक्षाश्रयणम् अण्भिन्नप्रत्याहारग्रहणस्थले जातिपक्षाश्रयणमिति यद्वैरूप्यं तदस्मन्मते जातिपक्षवादिनाम्मते नास्ति। एवञ्च "यथोत्तरं मुनीनां प्रामाण्यम्" इति वचनात् भगवतः भाष्यकारस्य एव कथनम् आदर्तव्यम्भवति। एवञ्च लक्षणाश्रयणम् अप्रामाणिकम्भवति इति। जातिपक्षाश्रयणस्यैव अभिप्रेतत्वादेव "स्थानेऽन्तरतमः" इति सूत्रे भाष्ये- "किमुदाहरणम्? इको यणचि दध्यत्र मध्वत्र। यथासख्येनाप्येतात्सिद्धम्" इत्युक्तम्। एतद्भाष्यमपि दीक्षितमते अस तम्भवति। अपि च "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रे भाष्ये "प्रत्याहारे सवर्णाग्रहणमनुपदेशात्" इति मनसि निधायैव प्रत्याहारेषु "अस्य चौ" " यस्येति च" इत्यादिस्थलेषु जातिपक्षस्यैव आश्रयणं प्रतिपादितं वर्तते। तद्यथा- "सवर्णेऽणग्रहणमपरिभाष्यम्। कुतः? आऔतिग्रहणात्। अवर्णाऔतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथा- इवर्णाऔतिः तथा उवर्णाऔतिः।"

अत्र जातिपक्षे एवं प्रश्नो जायते अणुदितिति सूत्रे विद्यमानस्य अणः यदा प्रत्याख्यानं भवति, तदा "उपसर्गादृति धातौ" इति सूत्रे ऋकारेण लृकारस्य अपि ग्रहणं स्यात्। यतो हि सवर्णस्याभावात् "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इत्यस्यार्थः परिवर्तितो भवति तद्यथा- "लृकारः ऋवद् भवति" इति। इत्थञ्च लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशात् लृकारे "इको यणचि" इत्यनेन रेफापत्तिः भविष्यति। इति चेन्न- "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमि" त्यस्य वार्तिकस्य अनित्यत्वान्न दोषः। अत्र अनित्यत्वे हेतुस्तु- ऋकारलृकारयोः पृथगनुबन्धकरणेन ऋलृवर्णयोः सावर्ण्यस्य नित्यता नास्ति। अन्यथा एकेनैवानुबन्धेन सर्वत्र कार्यसिद्धौ अपरं व्यर्थं स्यादिति। अस्य वार्तिकस्य अनित्यत्वेऽन्यदपि प्रमाणम्। क्लृ३प्तशिखा इत्यत्र दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्य अनन्त्यस्यापि गुरोर्वा प्लुतः स्यादित्यर्थकेन "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" इति सूत्रेण प्लुतो विधीयते। यद्यत्र "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इत्यस्यातिदेशो नित्यमूरीक्रियेत तर्हि अत्रोदाहरणे लृकारः ऋकार एव स्यान्न तु लृकारः, तस्माद् प्लुतस्य प्राप्तिः न स्यादिति।

न च उद्देश्यांश इव विधेयांशे अपि जातिनिर्देशः एव वाच्यस्स्यात्, तथा च "त्यदादीनामः" इत्यनेन इदमित्यत्र अनुनासिकाकारः स्यादिति वाच्यम्। जातिपक्षे "अणुदितिति" सूत्रे अण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्ययः"

इत्यंशो योगविभागेन विधीयमानस्थले सर्वत्र जातिग्रहणेन प्राप्तस्य सावर्ण्यस्य निषेधको भवति अतो न दोषः। न च जातिपक्षे 'अप्रत्ययः' इत्यंशोऽपि प्रत्याख्येयः इति भ्रमितव्यम्, ''सवर्णेऽण्ग्रहणमपरिभाष्यमाऔतिग्रहणात्'' इत्यनेन भाष्यवार्तिकेन अण्ग्रहणप्रत्याख्यानस्यैव भाष्यऔदभिमतत्वनिर्णयाद् इति। एवञ्च यथा जातिपक्षे 'तपरस्तत्कालस्य'' इति सूत्रं सावर्ण्यनिषेधकं तथा अप्रत्ययः इत्यंशोऽपि विधीयमानसावर्ण्यनिषेधकम् इति। अत एव ''स्वौजस्'' इत्यादौ अनुनासिकस्थानेऽपि निरानुनासिक एवेति।

एवञ्च एतावता प्रबन्धेन जातिपक्षो निरूपितो भवति। किञ्च प्रऔतसूत्रे व्यक्तिपक्षस्यावसर एव नास्ति। तथापि दीक्षितेन व्यक्तिपक्षे विचारः प्रस्तुतः। तत्र कारणमिदमेव यद् भगवतो भाष्यकारस्य व्याख्यानानुरोधेन ''स्थानेऽन्तरतमः'' इति सूत्रे किमुदाहरणम्- दध्यत्र मध्वत्रेत्युक्तम्। पश्चाच्च संख्यातानुदेशेनाप्येतत्सिद्धमित्युक्त्वा तयोः अविशेषः सूचितः। तथाप्युभयोः प्रवृत्तौ परत्वाद्यथासंख्यप्रवृत्तिः एव साधीयसीति अवश्यमेव अ ीकर्तव्यम्भवति। न च व्यक्तिपक्षे कथन्निर्वाहः इति वाच्यम्। जातिपक्षे कार्यस्य सिद्धत्वाद् तत्पक्षेऽपि निर्वाहो भवेदिति नास्ति शास्त्रे तादृक् कश्चन नियमः। अत एव क्वचिद् यथोद्देशपक्षेण कार्यं क्वचिच्च कार्यकालेनेति। प्रक्रियासौकर्याय यस्य पक्षस्य यत्र आवश्यकता तस्य आश्रयणं भवति इति।

अपि च दीक्षितेन यथासंख्यस्य खण्डने यो हि दोषः प्रदर्शितः मनोरमायाम्- इक्पदेन षट्षष्टिः यण्पदेन सप्तेति अतो नास्ति यथासंख्यमिति, वचनमेव दोषपूर्णं यतः इगित्यस्य षट्षष्टिः भेदाः न क्वचिद् शास्त्रे अवलोक्यन्ते, यतः दीर्घानुनासिकप्लुतानुनासिकऋकारो नास्ति। एवमेव प्लुतानुनासिकलृकारोऽपि नास्ति। अत एव नागेशेन उद्द्योते लिखितम्- ''दीर्घप्लुतऋकारस्य प्लुतलृकारस्य चानुनासिकस्यादर्शनादिदं चिन्त्यम् इति।'' तथैव यणः अपि न सप्तभेदाः अपितु चत्वार एव। गुणाः भेदकाः इत्येव सिद्धान्तितः पक्षः। उक्तञ्च नागेशेनोद्द्योतटीकायाम्- ''अणुदित्सूत्रे अण्ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात्। तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाभेदाय भेदकत्वस्यैवाश्रवणेन तेषामग्रहणम्। अत एव मतोर्मस्य नानुनासिको वकार इति।।''

इतः परमिदमपि विवक्षामि यदत्र सूत्रे ''स्थानेऽन्तरतमः इत्येनेनैव निर्वाहः इति प्रतिपादयिता दीक्षितः एव, अन्ये सर्वेऽपि वैयाकरणाः यथासंख्येन एव निर्वाहः इति पक्षे मतं प्रादर्शयन्। तद्यथा (१) प्रक्रियाकौमुदीकाररामचन्द्राचार्यः- ''इको यणचि'' इति सूत्रानन्तरं इकारस्य स्थाने यकारादेशाय ''यथासंख्यमनुदेशः समानाम्'' इति सूत्रमुपन्यसति। अतः ज्ञायते 'यथासंख्यमेवेच्छतीति। (२) प्रकाशटीकाकारशेषकृष्णस्य मतम्- ''शब्दतः साम्यस्य सत्त्वाभ्युपगमान्न दोषः। शब्दसाम्यमेकयोगश्चेत्येष पक्षः आश्रयितव्य इति कैयटोक्तेः'' अनेन कैय्यटस्यापि मतं ज्ञातम्भवतीति। (३) न्यासकारजिनेद्रबुद्धेर्मतम्- ''इकां यणाञ्च साम्यात् यथासंख्यं भवतीति वेदितव्यम्'' इति। (४) पदमञ्जरीकारहरदत्तस्य मतम्- ''इकां यणाञ्च साम्याद्यथासंख्यं भवति, आन्तर्यतो वा व्यवस्था'' (५) रूपावतारकारधर्मकीर्तेरपि जातिपक्षः एवाभिमतः- उक्तञ्च प्रक्रियाकौमुदीविमर्शे डॉ० आद्यप्रसादमिश्रेण- तद्यथा- ''धर्मकीर्तिनाऽपि स्वीये रूपावतारे तत्र अस्याः परिभाषायाः (यथासंख्यमनुदेशः समानाम्) प्रवृत्तिः स्वीऔता'' (१०) शेखरकारनागेशस्य मतम् ''दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्षः एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम्। अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः। 'ल्वादय' इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक्'' अत्र दिक् इति पदस्य व्याख्यानम् करोति चिदस्थिमालाकारो वैद्यनाथपायगुण्डे ''दिगर्थस्तु शब्दरत्नादौ स्पष्टः।'' शब्दरत्नकारस्य किम्मतं वयं नितरां

जानीमहे यद् जातिपक्षः एव। पूर्वमेवात्र लेखे विचारितो मया। एवञ्च सर्वसम्मतत्वाद् जातिपक्षः एव न्याय्यः न तु व्यक्तिपक्ष इत्यलं विस्तरेण।

## संदर्भसूची


प्रौढमनोरमायाम्, पृ० सं० १३३, प्रकाशकः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, संस्करणम्- २००३.

महाभाष्यस्य ''नाज्झलौ'' इति सूत्रे पृ० सं० २५३, प्रकाशकः चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, संस्करणम्- १९९२.

प्रौढमनोरमायाः शब्दरत्नटीकायाम्- पृ० सं० १२६, प्रकाशकः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, संस्करणम्- २००३.

प्रौढमनोरमायाः शब्दरत्नटीकायाम्- पृ० सं० १३१, प्रकाशकः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, संस्करणम्- २००३.

प्रौढमनोरमायाः शब्दरत्नटीकायाम्- पृ० सं० १३४, प्रकाशकः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, संस्करणम्- २००३.

महाभाष्यस्य ''स्थानेऽन्तरन्तमः'' इति सूत्रे पृ० सं० ४१३, प्रकाशकः चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, संस्करणम्- १९९२.

महाभाष्यस्य ''नाज्झलौ'' इति सूत्रे पृ० सं० ५५६, प्रकाशकः चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, संस्करणम्- १९९२.

महाभाष्यस्य स्थानेऽन्तरतमः इति सूत्रस्य उद्द्योतटीकायाम् पृ० सं० ४१३. प्रकाशकः चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, संस्करणम्, १९९२.

महाभाष्यस्य स्थानेऽन्तरतमः इति सूत्रस्य उद्द्योतटीकायाम् पृ० सं० ४१३. प्रकाशकः चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, संस्करणम्, १९९२.

पं० मुरलीधरमिश्रसम्पादितप्रक्रियाकौमुदी, पृ० सं०- ७५, प्रकाशकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी संस्करणम्, द्वितीयम्- २०००.

पं० मुरलीधरमिश्रसम्पादितप्रक्रियाकौमुद्याः प्रकाशटीकायाम्, पृ० सं०- ७६, प्रकाशकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी संस्करणम्, द्वितीयम्- २०००.

डॉ० जयश रलालत्रिपाठिसम्पादितकाशिकायाः न्यासटीकायाम् पृ० सं० ११२, प्रकाशकः तारा बुक एजेन्सी, वाराणसी, संस्करणम्- १९९०.

डॉ० जयश रलालत्रिपाठिसम्पादितकाशिकायाः पदमञ्जरीटीकायाम् पृ० सं० ११२, प्रकाशकः तारा बुक एजेन्सी, वाराणसी, संस्करणम्- १९९०.

पं० आद्याप्रसादकृतप्रक्रियाकौमुदीविमर्शे, पृ० सं० ५१, प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी- संस्करणम्- १९९६.

लघुशब्देन्दुशेखरे पृ० सं० २०८, प्रकाशकः वाणीविलासप्रकाशम्, वाराणसी संस्करणम्- १९९२.

लघुशब्देन्दुशेखरस्य चिदस्थिमालायाम्, पृ० सं० २०९, प्रकाशकः वाणीविलासप्रकाशम्, वाराणसी संस्करणम्- १९९२.


■ पता : नव्यव्याकरणानुसन्धाता व्याकरणविभागः, काशीहिन्दूविश्वविद्यालयः वाराणसी

# आर्यदेवविरचितं चतुःशतकं चन्द्रकीर्तिप्रणीतटीकया सहितं चतुर्थं प्रकरणम् (भोट-भाषातः संस्कृत-पुनरुद्धारः)

■ गुरुचरणसिंहनेगी

## (क) लेख परिचय :-

माध्यमिकदर्शन के प्रामाणिक मूलग्रन्थों में से एक 'चतुःशतकम्' संस्कृत भाषा में निबद्ध, चार सौ कारिकाओं से युक्त तथा सोलह प्रकरणों में विभक्त आचार्य नागार्जुन के अन्यतम शिष्य आचार्य आर्यदेव की रचना है। इस समय उपर्युक्त ग्रन्थ पर आचार्य चन्द्रकीर्ति विरचित 'बोधिसत्त्व-योगाचार-चतुःशतकम्' नामक एकमात्र टीका के मूल-संस्कृत के खण्डित अंश ही उपलब्ध होते हैं। ज्ञातव्य है कि इस समय 'चतुःशतकम्' भी सम्पूर्ण रूप से मूल-संस्कृत में अनुपलब्ध है। पंक्ति लेखक ने उपर्युक्त ग्रन्थ के प्रथम छ प्रकरणों का चन्द्रकीर्तिटीका सहित भोट-भाषा से संस्कृत पुनरुद्धार, हिन्दी अनुवाद एवं भोटपाठ का समालोचनात्मक सम्पादन कार्य केन्द्रीय उच्च तिब्बती शिक्षा संस्थान (मानित विश्वविद्यालय), सारनाथ, वाराणसी में विद्यावारिधि उपाधि हेतु शोध-प्रबन्ध की प्रस्तुति के लिए उपर्युक्त संस्थान के पूर्व शब्दविद्या संकायाध्यक्ष परमादरणीय गुरुवर प्रो० कामेश्वरनाथ मिश्र जी के निर्देशन में सम्पन्न किया था। उपर्युक्त शोध-प्रबन्धस्थ प्रथम दो प्रकरणों का संस्कृत पुनरुद्धार हिन्दी अनुवाद सहित तथा तृतीय प्रकरण का टीका सहित संस्कृत पुनरुद्धार राष्ट्रिय-संस्कृत-संस्थान (मानित विश्वविद्यालय), लखनऊ परिसर, लखनऊ, द्वारा प्रकाशित 'गोमती' पत्रिका के क्रमशः वर्ष २००७-०८ (पृ०-१०४-१११), २००८-०९ (पृ०-१११-११६), एवं २००९-१० (१२१-१३६) के अंकों में किञ्चित् संशोधन सहित प्रकाशित हो चुका है और चतुर्थ प्रकरण पत्रिका के वर्तमान अंक में प्रकाशित हो रहा है।

प्रस्तुत चतुर्थ प्रकरण की पच्चीस कारिकाओं में से मात्र साढे आठ (कारिका संख्या-१, २, १४-१७, २३ (अपूर्ण)-२५) कारिकाओं का मूल-संस्कृत ही प्राप्त होता है। शेष साढे सोलह कारिकाओं का पुनरुद्धार पंक्ति लेखक ने करने का प्रयास किया है। आचार्य आर्यदेव ने इस प्रकरण में अविद्या के कारणभूत चार विपर्यासों (सास्रव पाँच स्कन्धों को, जो स्वभावतः अनित्य, दुःख, अशुचि एवं अनात्म हैं, उसे नित्य, सुख, शुचि एवं आत्म मानने) में से एक 'अनात्मा में आत्मा की संज्ञा' का प्रहाण अत्यन्त तार्किक विधि से किया है।

## (ख) संस्कृत-पुनरुद्धारः-

अत्राह। उक्तस्त्रयाणां विपर्यासानां प्रहाणोपायः। चतुर्थस्य विपर्यासस्येदानीमुच्यतां प्रहाणोपाय इति। उच्यते–

अहं ममेति वा दर्पः सतः कस्य भवेद् भवे।
यस्मात् सर्वेऽपि सामान्या विषया सर्वदेहिनाम्।।१।।

अहङ्कारममकारौ खल्वपि राज्याधिक्येन वर्त्तेत इति। तयोः प्रतिषेधेन भूयसा राजैवानुशास्यते। तत्राहङ्कार आत्मन उत्कर्षविशेषपरिकल्पनादुपजायतेऽहं प्रभुरिति। ममकारस्तु स्वीकृतार्थवशित्व-कल्पनायामुपजायते। ममेमे विषया इति। दर्पो दृप्तता गर्वो मद इत्यर्थः। भवः संसारः कर्मक्लेशपरायत्तस्य जन्ममरणपरम्परया गतिपञ्चकपर्यटनम्। तत्र वर्तमानस्य कस्य नाम विदुषोऽहङ्कारममकाराभ्यां दर्प उत्पद्यते। यदि हि कस्यचित् क्वचिदसाधरणमीशत्वं स्यात् तदा युज्येतास्य तदालम्बनो दर्पोऽहमेवैषां विषयाणां ममैव चैते विषया इति वशित्वदर्शनात्। न चैतत् संसारपर्यापन्नस्य वालस्य सम्भवति। तथाहि सर्वसत्त्वसाधारणकर्मनिर्जाताः सर्वे रूपादयो विषयास्तदेषु सर्वसत्त्वसाधरणपरिभोगेषु साधारण-तरु-षण्ड-मण्डपादिष्विव न युक्तोऽहङ्कारममकार-परिग्रहाद् दर्पः, राजनटवत्।

यथा राजनटो मुहूर्त्तेन राजा मुहूर्त्तेनामात्यो मुहूर्त्तेन ब्राह्मणो गृहपतिर्दासश्च भवति। तथा राजानवस्थितः। पञ्चगतिरङ्गनाटनात्। भवति चात्र–

**ऐश्वर्यभोगसम्पद्वा यस्मात् पुण्येन लभ्यते।**
**तस्मात् कर्मात्मके लोके न दर्पो युज्यते सतः।।**

अत्राह। यस्मात् सर्वारम्भो राजन्यधिकृतस्तस्मादधिकारनिमित्तस्य दर्पो युज्यत इति। उच्यते–

**गणदासस्य ते दर्पः षड्भागेन भृतस्य कः ।**
**जायतेऽधिकृते कार्यमायत्तं यत्र तत्र वा ।।२।।**

समुद्भूतादत्तादानेऽपि प्राथमकल्पिके लोके क्षेत्रपरिरक्षार्थे प्रतिबलः पुरुषो महाजनेन धन्यषड्भागवेतनेन भृतः। कथन्नास्माकं हितं स्याज्जनोऽयमस्मद् रक्षार्थं परिचरेच्चेत् एवं सम्यक् रक्षाकार्येण प्रजारञ्जनाद् 'राजे' त्याख्यायते। ततः प्रभृति सर्वे राजानः षड्भागवेतनेन प्रजां पालयन्ति। तस्मादपि षड्भागभृता राज्ञा 'लोककार्यं मदायत्तमि'ति दर्पयितुं न युज्यते। स्वामिना कस्मिंश्चित् कार्ये दासेऽधिकृतेऽपि स्वामिनः किञ्चित् कार्यं तदायत्तं भवति। तेन दासेन 'मदायत्ता'इति स्वामिनं प्रति दर्पो न युज्यते। तस्माद्यद्येकायत्तश्चापि स्यादनेन स्वाधीनसिद्धिर्न युज्यते। तदा हे! भूपते! महाजनायत्तस्य का कथा? तस्मादस्य दर्पः सर्वथा न युज्यते, कान्तारमार्गदर्शकवत्।

यथा कश्चिद् राजा दिग्विजयं कर्तुं प्रस्थितः, स्वनियुक्तेन मार्गदर्शकेन चाण्डालेन महदरण्यमतिक्रान्तयत्। स राजाऽपि सबलकायस्तदायत्तोऽभवत्। तेन तत्कारणात् 'सबलकायो राजा मदायत्त' इति मदः कर्तुं नाम्नायते एवं राजाऽपि 'प्रजा मय्यायत्ते'ति मदो न करणीयः। आह चात्र–

**सर्वकार्याधिकारत्वाद् राजदर्पो हि युज्यते।**
**षष्ठभागभृतित्वात् किं दर्पोऽनानुचितः किल।।**

अत्राह। यस्माद् राजास्वामी दाता च, तस्मादपि राजनि दर्पो युज्यत एव। धनसंसाधन-दान-सङ्ग्रहाधिकारसम्पन्नत्वादिति। उच्यते–

**लभ्यं लब्ध्वा यथा पोष्यो दायको मन्यते प्रभुः।**
**देयं दत्त्वा तथा स्वामी दाताऽहमिति मन्यते।।३।।**

यथा राजपोष्यगणः स्वसेवाया निर्जातमवश्यं लभ्यं दातव्यं वार्षिकवेतनं मासिक-वेतनं वा लब्ध्वा आत्मनि हीनभावनां राजनि विशिष्टभावनां चोत्पादयति। 'स्वामी दाते'ति चिन्तयति। एवं राजाऽपि पोष्यगणायावश्यं दातव्यं वेतनं दत्त्वा 'दायकोऽहमि'ति मन्यते। तत्र यथा पोष्यगणो राजाश्रितं पुरुषकारजनितं लभ्यं धनं लब्ध्वाऽपि हीनचित्तो भवति, राजानं प्रति दर्पं न करोति, एवं राज्ञोऽप्यवश्यदातव्यार्थं दत्त्वा दर्पो न युज्यते, वेतनप्राप्तदासवत्।

यथा दासं वेतनमवश्यं दातव्यम्, अत्र दायकस्य दर्पो न युज्यते, न च दासस्य। एवं राज्ञो धनस्य सङ्ग्रहणे दाने वा दर्पो न युज्यते। भवति चात्र–

**भृत्याय वेतनं दत्त्वा राजदर्पो हि युज्यते।**
**वणिक्सु धनकामेषु तथा युक्तिर्न किं भवेत्।।**

अत्राह। इच्छातो विषयसुखोपभोगेषु सदा सन्निहितेषु राजाऽहङ्कारी भवति। तद्धेतुकतया मदमत्तोऽप्यवश्यं भवतीति। उच्यते–

**दुःखस्थानेषु चान्येषां विपर्यस्ता हि ते स्मृतिः।**
**सन्तोषस्ते कुतो भावी परकार्योपजीविनः।।४।।**

स्त्रीमद्यद्यूतादिवद् विषयेष्वतिरागस्तु जितेन्द्रियैर्दुःखस्थानमुक्तः, अजितेन्द्रित्वात्। तस्मादिदमैश्वर्यमनेक-विपत्कारणत्वाद् दुःखस्थानं सदपि यदि तुभ्यमभ्युदयस्थानं भवेत् तर्हि अविद्यया कार्यसिद्धिरभवत्। अपि चोक्ते विषये आसक्तान् तोषयितुं विषयोपसेवनं करोतीति, महाजनरक्षाधिकृतदुःखनैरन्तरर्येण परकार्यं कृत्वा तत्फलोपजीव्यत्वात् क्लेशः, कुतः सुखभागः? चौरदण्डदानवत्।

यथा–चौराय दण्डदानं हीनकर्म, तेन तुष्टिर्न युज्यते, एवं स राजा वर्तत इति। उच्यते–

**यदासक्त्या कुलीनेषु लोके वै जायते भयम्।**
**तेन दर्पो भवेद्यस्मिन् तस्मिंस्तु नान्यतो भयम्।।**

अत्राह। राजा तु लोकस्य रक्षकः, अतो रक्षकत्वात् सोऽवश्यं मदमत्तो भविष्यति। अन्यथा न्यायाननुगमने प्रजा विनष्टा भवन्तीति। उच्यते–

**लोकस्य रक्षको राजा रक्षणीयोऽवभासते।**
**किमेकेन भवेद् दृप्तः किन्नान्येन विना मदम्।।५।।**

यदि 'लोकरक्षा मदायत्ता' इति मत्वा राजनि मदो भवेत् तर्ह्यात्मरक्षाया लोकायत्तत्वादात्मानं रक्षणीयमवबुध्य कथं न विमदो भवेत्। लोकेनारक्षितो राजा लोकं पालयितुं न शक्नोति, दम्पतीवत्, वनसिंहवच्च।

कश्चित् पुरुषः पत्नीमवोचत् 'मया दुःखशतान्यनुभूयन्ते, त्वमकृच्छ्रेण गृहे सुखेन तिष्ठसी'ति। सा चावोचत् 'दिवसमेकं तावद् गृहकार्यं कुरु, ततो ज्ञास्यसी'ति। तेन तथा कृतम्। स उद्विग्नोऽप्यभवत्। यथा दम्पती परस्परं रक्षतस्तथा राजाऽपि प्रजाः रक्षति, प्रजाश्चापि राजानम्। एवं सिंहो वनम्, वनं च सिंहः। आह चात्र–

**योऽज्ञो मानप्रतीपक्षं त्यक्त्वाऽहङ्कारमेव च।**
**आदत्ते खलु तन्मानं मन्योपायैर्न नश्यति।।**

अत्राह। यदा राजा प्रजाः पुत्रवत् प्रतिपालयति, तदा स विजेता। याः कुलाश्रयाः पुण्यकर्मवत्यस्तासां पुण्यषड्भागहरो भवति। तस्मात् स्वपरादिकुशलसम्पन्नस्यास्य मदो युज्यत इति। उच्यते—

**सर्वजातौ स्वकार्येषु तुष्टाजीवास्तु दुर्लभाः।**
**त्वय्यपुण्यं भवेत् स्याच्चेत् कठिना सद्गतिस्तव।।६।।**

सम्प्रति पञ्चकषायप्रवृत्तिप्राबल्यात् सर्वेषां जातिपरायणानां स्वस्वकर्मसु तुष्टिर्दुर्लभा, प्रायशोऽस्थिरत्वं चाभासते। यदि त्वं तासां पुण्यस्य षड्भागहरोऽसि तद्वत् पापस्यापि भविष्यसि। एवं सति जातिपरायणः क्लेशाभिभूतत्वात् शिथिलो भवति। पापमित्रानुकारिष्वपुण्यबाहुल्यात् तुभ्यं सुगतिर्दुर्लभा। एवं तावत् स्वपापैरेव राज्ञां सुगतिरसम्भवा चेत् तर्हि सकलभुवनपापेन का कथा। तस्मात् स्खलितमतयो विनश्यन्ति, क्षीरमत्स्यबुभुत्सुः कुष्ठीवत्।

यथा कुष्ठी विपर्यासावस्थितत्वात् स्वरोगप्रतीकारहेत्वौषधान्येव न सेवते, अपितु क्षीरं मत्स्यं च भक्षयते, एवं राजाऽपि न केवलं स्वयं महद्पुण्यं सञ्चयति, अपितु जातिपरायणानां दुश्चरितेन सार्धमप्यात्मानं योजयति, प्रमादस्थानावस्थितत्वात्। भवति चात्र—

**षड्भागं कर्मणामत्र राजा नूनं हि भुञ्जते।**
**लोके ह्यपुण्यबाहुल्यात् सुगतिस्तेन दुर्लभा।।**

अत्राह। यस्माद् राजा लोकनाथः स्वाधीनश्च, तस्मादस्याहङ्कारोचितस्वभाव इति। उच्यते—

**यः परप्रेरितः कुर्याद् भुवि मूर्खः स उच्यते।**
**कोऽप्यन्यो न पराधीनो विद्यते त्वत्समः खलु।।७।।**

यः परप्रेरणया किञ्चित् करोति कल्पयति वा न स्वातन्त्र्येण, स लोके मूर्ख इत्याख्यायते। अत्र यादृशो राजा तादृशः पराधीनोऽन्यः कोऽपि नास्ति। स त्वनेकैर्मित्रैरचोदितोऽस्थिरस्वभावो भवति, प्रायशश्च परायत्तस्वभावो भवति। स तु करणीयमकरणीयं वा यत्किञ्चित् करोति, तत्परचोदनयैव करोति। यतः परायत्तावस्थितो लोके राजैव परमो मूर्खः पराधीनश्च, तस्मात्तस्याहङ्कारोऽयुक्तस्वभावः, कुक्कुरवानरचर्यावत्।

यथा कुक्कुरवानरौ उद्ग्रहोत्सर्गयोः पराज्ञां शृणुतस्तथा राजाऽपि परायत्तः, चारचक्षुस्त्वात्। आह चात्र—

**मित्रप्रचोदितो राजा कृत्याकृत्यं करोति हि।**
**ततो राजा पराधीनो मूर्खो मूढोऽत्र केवलः।।**

अत्राह। यतो हि सकललोकरक्षा राजायत्ता, तस्मादप्यहङ्कारो युक्त इति। उच्यते—

**मदायत्ता हि रक्षेति लोकाद् गृह्णाति वेतनम्।**
**स्वयं च कुरुते पापं तत्समः कोऽस्ति निर्दयः।।८।।**

यदि 'रक्षा मदायत्ते'ति कृत्वा राजा लोकाद् वेतनं गृह्णाति तर्हि सः सद्वृत्तानुगमनेन दरिद्रजनप्रतिपालनपरो भवेत्। एवं हि तदभ्युपगमोऽनुष्ठितः स्यात्। न चैष एवमनुकरोति, एवमयं तु वेदनदानासमर्थेषु पापिषु मारण-बन्धन-तर्जन-ताडन-निष्कासनादिकार्येण प्राणविभवसर्वस्वहरणमुखेन निष्ठुरतया प्रवर्तते। तस्मान् निर्लज्जोऽयं रक्षाफलं वेतनं लोकाद् गृह्णन्, रक्षाफलार्थाय स्वयं पापकर्मकरणात् कोऽन्यो निर्दयो लोके। पापकर्मप्रवृत्तिकुशलत्वात् स एव निर्दय इत्यभिप्रायः, शूनिकवैद्यवत्।

कस्मिंश्चिच्छूनिकेऽस्थिकुट्यमानेऽक्षण्यस्थिकीलं प्रविष्टम्। स वैद्यसकाशं ययौ। तेन वैद्येनोपनाहेनामयशमनं औतं, शल्यं नोद्धृतम्। ततः स पुनः पुनः प्रवर्तते, स वैद्यश्चापि अक्षिप्रकोपं शमयति, शल्यं नोद्धरति। तस्माद् रोगिणः प्रचुरं धनमपि हृतम्। तद्वैद्ये ग्रामान्तरं गते, तद्वैद्यसुतेन नेत्रशल्यमुद्धृतम्। यादृशः स वैद्यस्तादृशः राजाऽपि वर्तते। लोकात् प्रचुरं धनमपि हरति। सर्वथा सर्वलोककार्यमपि न करोति। आह चात्र–

**यो रुदन् भृति लोभेन सुक्रूरः परघातकः।**
**अत्यन्तनिष्ठुरो लोके कस्तदन्यो जनो भवेत्।।**

अत्राह। राजा पापात्मकेषु दयां कुर्यात्, यदि पापात्मकान् न दण्डयति, तदा सकलोऽयं लोको नङ्क्ष्यति। तस्माल्लोकरक्षार्थं पापात्मका अवश्यं निगृहीतव्या इति। उच्यते–

**पापकारिषु लोकेषु दयालुर्न भवेद् यदि।**
**रक्षणीया न स्युः सर्वे बालाश्चापि पृथग्जनाः।।९।।**

यद्ययमकुशलकारितत्वाद् दयापात्रं न स्यात्, सम्प्रति को दयापात्रं भविष्यति? तस्माद् दयाया अपात्रत्वात् समस्तबालपृथग्जनोऽप्यस्य रक्षणीयो न भविष्यति। अत्र बालो नाम यो बाललक्षणैर्युक्तः। पृथग्जनस्त्वार्यमार्गानुत्पादः, अकुशलकर्मकरणादेव, तद्द्वयविशिष्टा 'बालपृथग्जना' इति कथ्यन्ते। दयालवस्तु यस्मात् तैस्ते परिपाल्यन्ते, येषु दयाऽस्ति। एवं तद्दया तु परानर्थानिरोधाशया, तत्परिपालनं स्नेहेन तत् साधनम्। तस्मात् स कथं दयां विना तत्फलं रक्षिष्यति? रक्षां विना वेतनग्रहणे स्फुटतया चौररूपेण घोषितस्यापि चौरस्य ग्रामे नगरे च निवासः, शरीरधनरक्षावत्।

यदि राज्ञा पापकारिषु दया न क्रियते तर्हि सर्वानर्थभूतत्वात् स्वशरीरं धनं चापि रक्षणीयं न स्यात्, किन्तु रक्ष्यते। एवं सर्वे पापकारिणोऽप्यनुकम्पनीयाः सन्ति। आह चात्र–

**रक्षितव्या न ते राज्ञा रक्षिता ये स्वधर्मतः।**
**रक्ष्यते यदि दुश्शीलस्ततस्तेन हि रक्षितः।।**

अत्राह। प्रजापालनार्थं दण्डेन क्रूरे दण्डिते सति राजनि पापं न भवति, सदुपकारप्रवृत्तेः। उच्यते–

**आत्मतोषसमुत्पादहेतुः कुत्र न विद्यते।**
**हेतुभिस्त्वागमादीनामपुण्यं क्षीयते नहि।।१०।।**

आत्मतुष्टिकरो हेतुर्नाम कुत्र नास्ति? वाडिशिकसूकरलुब्धकादयः पापकर्मानन्दात्मका अप्येवं मन्यन्ते– 'अयं

प्राणिवधस्त्वस्माकं कुलपरम्परागतः। अयं तु प्रजापतिना आजीवः परिकल्पितः, नास्त्यत्र कश्चिदप्यधर्म'[२] इति। एवमात्मपरितोषकारणानि भवन्ति, तेषामपुण्यक्षयो न भवति। एवं राज्ञोऽपि वर्तते। एवमात्मनि पापबाहुल्यं दृष्ट्वा दुर्गतिषु तद्विपाकदर्शने तस्य हृदयं शोकाग्निना विनश्य शतधा च भिन्नं भविष्यति। तत्प्रहाणार्थमयमसद्दर्शन-मलिनविचारैरात्मानमाश्वसिति। तत्रापुण्यक्षयो न भवति। एवं यथा विशिष्टानां कल्याणार्थं हितशंसा भवति, एवं निगृह्यार्थक्रूराणामहितशंसाया अपि भावान् निर्दयक्रूरचित्तेषु, अन्येषां कृते राक्षसाभिन्नेषु राजसु, कुतस्तत्राभ्युदयावकाशः? 'दण्डेन न्यायकर्तारो राजानोऽधर्म-पाठकादयश्चाप्यसांवरिका' इत्यागमेनापि तेऽनर्थमयत्वेन सन्दर्शिताः। 'राजानोऽसांवरिकाः, परापकारप्रवृत्तत्वाद्, वधकवदि'त्यनुमानमपि भवति, तत्तु कर्मविपाकप्रत्यक्षदर्शनवतां योगिनां प्रत्यक्षमपि भवति। तस्मादागमानुमानोपमानप्रत्यक्षैस्तदपुण्यसद्भावाद् राजसु पापकर्माणि भवन्त्येव, पृष्ट्वाऽजीर्णभक्षवत्।

कश्चित् पुरुषः 'अजीर्णे सत्यहं पृच्छामी'त्यात्मतुष्ट्या 'खादान्यहमि'ति ब्राह्मणाः पृष्टाः। तैरुक्तम्– 'खादे'ति, एवं 'जलं पीत्वा शयै किमि'ति सर्वं पृष्टम्, तैरनुज्ञातम्। सोऽपि सर्वं कृत्वा दुःखमाप्तवान्। वैद्य आह– 'किमर्थं त्वया एवं कृतम्?' स आह–'मयाऽपृष्ट्वा किमपि न कृतमि'ति। यथा पुरुषोऽयमन्यान् पृष्ट्वा आत्मानं तोषयितुमपथ्याचरणे महागम्भीररोगेण ग्रस्तः, एवं राजानोऽप्यात्मतुष्टिजनकहेतुभिरात्मानं तोषयित्वा पापकर्माणि कुर्वन्ति, तस्मात् सत्त्वनरकेषु तद्धेतुकं महद्दुःखं साधयन्ति। शास्त्रे प्रमाणीकृतेऽप्येषां पापकारिणामनिष्टं फलं त्वधर्माद् भवतीति। आह चात्र–

**यद्यागमाधिकारेण न पापं हिंसके नृपे।**
**कस्मादेवंविधे न स्याद् धर्मः संसारतारके।।**

अत्राह। यत् सम्यक्लोकपरिपालनम्, तदेवाभ्युदयाय पार्थिवानां धर्मः, तस्मान् न प्रयोजनमन्यधर्मेणेति। उच्यते–

**सम्यगारक्षणं नाम राज्ञो धर्मो भवेद्यदि।**
**युद्धशिल्पकृतां चापि किन्न धर्मो भविष्यति।।११।।**

यथा वैतनिकस्य यथावदुपकारिणि सत्यपि तक्षकलौहकारादिषु तदनुग्रहनिमित्तकधर्मो न भवति, एवं सम्यक्रक्षां कुर्वत्स्वपि षड्भागभृतकेषु राजसु धर्मो न भविष्यति, काश्मीरखननवत्, आयुधसंकुट्टावच्च।

यथा काश्मीरा नगररक्षाकर्मपरिखादि कुर्वन्ति, तैर्देशवासिनां रक्षाऽपि भवति, तेषु तत्कारणेन पुण्यं न जायते। एवं राजस्वप्यस्ति।

अपि च–यथा आयुधसंकुट्टका जनरक्षणार्थमायुधानि कुट्टयन्ति, तेषु च तन्निमित्तिकं पुण्यं न जायते, एवं राजस्वप्यस्ति। आह चात्र–

**पालनेन भवेद्धर्मो यदि नान्येन राजनि।**
**सम्यक् कार्मिकभूतेषु धर्मः स्यादपि शिल्पिषु।।**

अत्राह। यस्मादत्र सर्वो लोको राजायत्तस्तस्मान्न सर्वेण राजा कुत्सनीय इति। उच्यते-

**यथायत्ते नृपे लोके निन्द्यते पार्थिवो हि सः।**
**जननी सर्वलोकस्य भवतृष्णा यथा सता।।१२।।**

यद्यपि सगृहस्थप्रव्रजितसकललोकस्य यावत्करणीयं राजायत्तम्, तथापि स तिरस्करणीय एव। यथा–सतृष्णेषु भवदर्शनाद् वितृष्णेष्वदर्शनाच्च भवतृष्णा संसारे जगज्जनाज्जनन्यस्ति, तथापि संसारचारके कृत्स्नजगद्बन्धनसंसारहेतुत्वादविपर्यस्तदृष्टिभि-र्निगर्हणीयैव भवति, एवं राजापि। यद्यपि सकललोकपितृभूतस्तथापि स ह्यत्युग्रानेकदुर्गति-फलकर्मसु विनियोगान् निगर्हणीय एव, कान्तारवणिग्वत्।

यथा–अटवीकान्तारे सार्थसमूहो रक्षादिसंसाधनसम्पादने वणिगायत्तो भवति। स तु बहुतरमूल्यनिक्षेपान् निगर्हणीयो भवति, न तु विनिन्द्यते सार्थवाहः। एवं लोकोऽपि रक्षाद्युपकारात् पार्थिवायत्तस्तथापि पार्थिवो निर्गर्हणीयः, स्वार्थसिद्धिपरत्वात्। आह चात्र–

**गुणेष्ववस्थितो राजा पिता लोकस्य यद्यपि।**
**तथापि स्थितिदोषत्वान् निन्द्यो वायुनिभः सताम्।।**

अत्राह। यस्मान् मतिमान् दयालुः राजा लोकं सम्यक् परिपालयति, तस्मादस्मिन् धर्मो भवतीति। उच्यते–

**नामूढैः प्राप्यते राज्यं मूर्खे न विद्यते दया।**
**रक्षके सत्यपि राज्ञि न धर्मो निर्दये स्थितः।।१३।।**

राज्यं नाम सर्वप्रमादमदाधिष्ठानम्। अस्मिन्नैश्वर्यमात्रासक्त्या स्वपरजनोपकार-मार्गमुत्सृज्य प्राप्ते 'अमूढ' इति भवितुं कथं शक्नोति। एवं लोकक्रियाविक्षेपे निबद्धचेतसाऽनेनान्धवदात्मानं भोगांश्चानित्यानपि अनुबद्धेन सन् नेक्ष्यते। अप्रणिहितचित्तत्वाच्छीले जगद्रञ्जनत्वमपि सर्वत्र दृष्टादृष्टेष्टफलसम्पदमनुपहत्य नेक्ष्यते, तद्विपरीतदोषसमूहान् गुणत्वेनायं मूढतर एव, अतो मूढ एव राज्यं लभते। मूढे राजनि दया न तिष्ठति, मानावस्थितत्वात्। निर्दये नृपे धर्मोऽपि नास्ति, हिंसाबाहुल्यात्। अत्र धीमत्सदयराजनि धर्मो विद्यत इति यदभिमतम्, न तत्। यो वेतनं प्रतिगृह्णन्नपि लोकं न पालयति, स प्रत्यहं चौर एव, न राजा, निर्दयोग्रदत्तराजामात्यवत्।

राज्ञ उग्रदत्तस्यामात्यो दण्डितजनात् स्वर्णमुज्झङ्कयितुं नाशकत्। स राजा तस्मै 'त्वं कथमशक्नोरि'ति कुपितः। तस्यैको मित्रबन्धुरासीत्। तेन स भणितः। स प्राह। उज्झङ्कयिष्य इति। ततस्तेन कथञ्चिदुझङ्करणाय तीव्रमुत्पीडनमारब्धम्। तेन राज्ञाऽपि स एव बन्धुरामात्ये नियोजितः। तेनापि राजप्रसादनकामेन महापापकर्म कृतम्। अन्ते यदा सः शस्त्रेण घातयितुं नापारयत् तदाग्निना सर्वस्थानानि दग्धानि। तत्र बहूनि प्राणिसहस्राणि घातितानि, तस्य तेन राज्ञानुमोदितम्। तदेवं यत्र मौढ्यं तत्र दया न विद्यते। यत्र दया नास्ति तत्र कुतः पुण्यावाप्तिः। राज्ञां चैव सर्वमस्ति। अत एषां गोपायतामपि धर्मो न सम्भवति। आह चात्र–

**अहिंसा मूलं धर्मस्य यस्मादाहुः कृपात्मकाः।**
**तस्मान्न विद्यते धर्मो निर्दये तु नराधिपे।।**

अत्राह। ऋषिप्रणीतेन ह्यत्र धर्मेण हिंसां कुर्वतोऽपि राज्ञो नास्त्यधर्म इति। उच्यते–

**ऋषीणां चेष्टितं सर्वं कुर्वीत च विचक्षणः।**
**हीनमध्यविशिष्टत्वं यस्मात्तेष्वपि विद्यते।।१४।।**

ऋषीणां कायवाङ्मनसां विचेष्टितं सर्वमेव पण्डितेन न कर्तव्यम्। यस्मात् तेष्वपि हीनमध्यविशिष्टत्वं विद्यते।[३] ऋषीणामिह कायवाङ्मनसां विचेष्टितं सर्वमेव पण्डितेन न कर्तव्यम्। यस्मात् {तेषु}[४] ऋषिष्वपि हीनमध्यविशिष्टत्वं विद्यते तत्र यस्य शास्त्रे हिंसाकारणवशाद् धर्मो भवति स हीनः। यस्य स्यान्न स्यादिति संशयः स मध्यः। यस्य त्वधर्म एव हिंसेति स विशिष्टः। तस्ताम् सर्वेषामृषीणां शास्त्रमप्रमाणम्। तत्र यदिष्टमृषिप्रणीतेन ह्येव धर्मेण कुर्वतोऽपि राज्ञो नास्त्यधर्म इति तन्न, विश्वामित्रवशिष्ठजामदग्न्यवत्।

विश्वामित्रवशिष्ठजामदग्न्यानां चौर्याभक्ष्यभक्षणागम्यगमनप्राणातिपातश्रवणात्, तत्र विश्वामित्रस्य चौर्यमभक्ष्यभक्षणं च श्रूयते[५]। श्वपचेभ्यः किल श्वमांसमपजिहीर्षुणोक्तम्।

**न ते शक्यं तत्तु जीवता कर्म पापं प्रायश्चित्तं ह्येतदस्मद्विशेषात्।**
**मृतश्चाहं तर्तुं पापमेतन्न शक्तः तस्माद् ह्येतद् भक्षयिष्ये।।**[६]

वशिष्ठोऽक्षमालायां चाण्डाल्या अक्षिप्रतिपन्नः श्रूयते[७]। ततः किल पुत्रा जाता[८] इति। जामदग्न्येनापि वत्सापहरणकोपात् कार्त्तवीर्यस्यार्जुनस्य बाहुसहस्रं पातितम्[९]। एवं चाह–

**दान्तस्य क्षमिणोऽपि दुर्जनजनैस्तैस्तैर्व्यलीकव्रणैः**
**सामर्षं क्रियते बलादपि मुनेर्व्युत्क्रान्तधैर्यं मनः।**
**गोर्वत्सापनयेन दोहसमये हम्भारवैस्तत्कृतं**
**यद्रामस्य सुनिर्मलस्य परशोर्धारां प्रवृष्टा नृपाः।।**[१०]

तथा तेनैव मात्रा संचोदितेन त्रिःसप्तकृत्वा पृथिवी निःक्षत्रिया कृता[११]। एवं च किल तस्य मात्रोक्तम्–

**ऋजुना मृदुना तपस्विना शतशो मान्यतमेन चाहे।**
**न जगस्य विनाशकारणं न परैरेकमपि व्यपेक्षितम्।।**
**अपकारमयेन कर्मणा न नरस्तुष्टिमुपैति शक्तिमान्।**
**अधिकां कुरु वीर यातनां द्विषतां मूलमशेषमुद्धर।।१२ इति।।**

ततस्तस्य धनुर्निनादशब्दः श्रूयते–

**प्राकारशृङ्गाण्यतिवर्त्तमानो गृहाणि भिन्दन्निव पार्थिवाणाम्।**
**स जामदग्न्यस्य धनुर्निनादो जग्राह केशेष्विव कार्त्तवीर्यम्।।१३**

आह चात्र–

**न तत्प्रमाणं कर्तव्यं शास्त्रमात्मार्थपण्डितैः।**
**यस्यार्थं पुरुषाः कृत्वा व्रजेयुर्दुर्गतिं ध्रुवम्।।**

अत्राह। शास्त्रार्थं प्रमाणीकृत्य स्फीतां वसुमतीं सम्यक् परिपालितवन्तो यस्मात् पुरातना राजानस्तस्मादपि शास्त्रं प्रमाणम्। उच्यते–

**पुत्रवत् पालितो लोकः पुरतः पार्थिवैः शुभैः।**
**मृगारण्यीकृतः सोऽद्य कलिधर्मसमाश्रितैः।।१५।।**

कलियुगात्पूर्वोत्पन्नैः पार्थिवैश्चक्रवर्त्यादिभिः शुभैर्युक्तायुक्तपरीक्षकैर्धर्मानुकूलं शास्त्रं प्रमाणीकृत्याधर्मानुकूलं परिवर्ज्य दशकुशलकर्मप्रतिष्ठितैः प्रियैकपुत्रवज्जगत्प्रेमानुगतैः पालितो लोकः। साम्प्रतं तु कलियुगोत्नैः पार्थिवैः स्वचित्तदौरात्म्यपरायत्तैरर्थमात्रतृष्णापरैरधर्मानुकूलं शास्त्रं प्रमाणीकृत्य धर्मानुकूलमुत्सृज्य तथायं लोको निष्करुणैरुद्वासितो यथा मृगारण्यीकृत इत्यतोऽपि नाधर्मयुक्तं शास्त्रं प्रमाणमिति, अपरिसंजातेक्षुम्लेच्छपीडनवत्।

यो हि म्लेच्छदस्युर्मोहादपरिसंजातमिक्षु पीडयति सोऽनर्थमेव करोति नार्थम्, तद्वत् राजा चेत् पालनीयान् न पालयति, न तस्यैहिकार्थो न पारत्रिकः, अपुण्यकरणात्। आह चात्र–

**स्वराष्ट्रपरराष्ट्रेषु न विभागः कृतो[14]ऽत्र यत्।**
**प्रजा भवन्ति सुखिनस्तच्छास्त्रं सत्कृतं[15] बुधैः।।**

अत्राह। राज्ञः खल्विह शत्रुश्छिद्रेषु प्रहरतो नास्त्यधर्मः, शास्त्रदृष्टित्वादिति। उच्यते–

**छिद्रप्रहारिणः पापं यदि राज्ञो न विद्यते।**
**अन्येषामपि चौराणां तत् प्रागेव न विद्यते।।१६।।**

यदि खलु शत्रूनन्यान् वा छिद्रेषु प्रहरतो राज्ञः पापं न विद्यते। ननु राज-तस्कारादन्येषामपि चौराणां धनारक्षकाणां किञ्चिच्च् छिद्रं प्राप्य परधनमपहरतां छिद्रप्रहारित्वात् प्रथमं पापेन न भवितव्यम्। छिद्रप्रहारित्वेन तेषां ज्येष्ठभूतत्वात्। पश्चाद् राज्ञो, न चैतदेवमिष्टमित्यतो यदिष्टं राज्ञः छिद्रेषु प्रहरतः पापं नास्तीति, तन्न, अजितसेनराजपुत्रवत्।

केनचित् किल राज्ञा अमात्यः प्रोक्तो 'यदा मे मरणं भवति तदा अस्मद्भ्रातरमजितसेनं राजकुमारमभिषेक्ष्यसी'ति। ततस्तेनामात्येन तस्मिन् राजनि मृते छिद्रप्रहारिणा स राजकुमारो घातितः। आत्मना च तद्राज्यमवष्टब्धम्। तस्यातीवाकीर्तिर्लोके प्रतिष्ठिता पापाचार इति। परत्र चापुण्यम्। अतोऽपायं पतितः[16] तद्वद् राज्ञां छिद्रप्रहारिणां कथमकीर्तिः पापञ्च न भविष्यतीति। आह चात्र–

**यत् कृष्णं कर्म कृतं न तस्य संजायते फलं शुक्रम्।**
**नहि पूतिवृक्ष[17]बीजाच्चम्पकबीजाङ्कुरो भवति।।**

अत्राह। राज्ञो रणमुखे शत्रून् जित्वा महान् परितोषो भवति, स्वशौर्यविक्रमार्जितां च धनसम्पदमनुपश्यतः। अथास्य रणे मृत्युर्भवति, तदा ध्रुवमस्यात्मनः परित्यागात् स्वर्गामित्वमिति। आह चात्र–

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।।[18] इति।।**

उच्यते–

**सर्वस्वस्य परित्यागो मद्यादिषु न पूजितः।**
**आत्मनोऽपि परित्यागः किं मन्ये पूजितो रणे।।७७।।**

इह द्यूतमद्यवेश्याङ्गनासु विशदं[१६] सर्वस्वमपि परित्यजन्तः पुण्यभाजो न भवन्ति। व्यसनानुपदत्वात् तत्त्यागस्य न सज्जनमनांसि आराधयन्ति। एवमात्मभावपरित्यागो रणे न पूज्यते। तस्यापुण्यायतनत्वात्। कथं हि नाम युद्धे संसरम्भमभिधावतः औपाविपर्यासात् परस्मिन्निष्ठुराशयस्य विनिपातनाय परशिरसि विनिविष्टदृष्टेः समुद्यतायुधस्य परेण विनिपातितस्य स्वर्गगमनं सम्भावयितुं युज्यते। तत्र यदिष्टं रणमुखे ध्रुवं मृतस्य स्वर्गगमनमिति, तन्न, आभीरीश्वशुरशरीरदानवत्।

काचिदाभीरी भर्तरि प्रोषिते श्वशुरमतीवावमन्यते स्म। अथ स वृद्धाभीरः तस्मिन्नागते पुत्रे तदर्थमावेदितवान्। एवं चाह 'यदि ते पत्नी पुनरप्यस्मास्ववमानं करिष्यति न ते गृहे वत्स्यामी'ति। स च न स्त्रीभीरुः पितृभक्तश्चातस्तां परिभाव्याह 'मा चेत् त्वं पितरमवमन्यसे, न तें मम गृहे वासोऽस्ति। दुष्करमप्यस्य कुरु, दुर्देयञ्चास्मै प्रयच्छे'ति, तया तथैव प्रतिज्ञातम्। अथ सा पुनः प्रोषिते भर्तरि चकितचकिता परेणादरेण श्वशुरस्य शुश्रूषां चकार। स्नानानुलेपनमाल्यदानान्नभोजनपानादिना प्रणीतेन दिवसमुपस्थाय रात्रावुष्णोदकेनास्य पादौ धावयित्वा तैलेन म्रक्षयित्वा वस्त्राण्यवमुच्य निर्वसना दुष्टयोगाहितेन क्रमेण शयनमारोढुमारब्धा। वृद्धभीर आह "पापे! किमिदमारब्धमि"ति। आभीर्याह "भर्त्राहमुक्ता दुष्करमपि त्वयास्य कार्यम्। दुर्देयमपि देयमिति न चास्माद् दुष्करतरमस्ति दुर्देयाच्च दुर्देयमि"ति। वृद्धाभीरोऽब्रवीत् "एष उपायो हीतो निर्गमनाय, तुष्टा भव। न पुनरिह गृहे स्थास्यामी"ति उक्त्वा निर्गतः। स चास्य पुत्र आगतः। पितरमपश्यन् पत्नीं पृच्छति। साऽवोचत् "न मम किञ्चित् परिहीणं परेणादरेण स मया ऋतुसुखेन स्नानानुलेपनभोजनादिनोपचरित" इति सर्वं निवेदयति। यथा स्वामिन आदेशवद् दुष्करमपि कृतम्, दुर्देयमपि दत्तम्। तथा कुर्वन्तीमपि माम् हठादुत्सृज्य निर्गतः।[२०] "त्वया किं कृतमि"ति पृष्टा सती पूर्वघटनामुक्तवती। ततस्तेन स्वामिना निर्भर्त्स्य गृहान्निष्कासिता। पिता च प्रसाद्य स्वभवनं प्रवेशितः। यथास्या आभीर्या दुष्टभार्यायाः शरीरप्रदानं न पूजितम्। एवं राज्ञां दुष्टचेतसां रणे जीवितपरित्यागो न पूजितः। लोके च दुष्टत्वान्[२१] मद्यादिषु सर्वस्वपरित्यागो न पूजित इति। आह च–

**रणे मृतस्य गमनं मेरुपृष्ठे यदि ध्रुवम्।**
**चोरयतां मृतानाञ्च कथं न स्यात् तथा गतिः।।**

अत्राह। इह राज्ञः यत् समस्तलोकनाथत्वं तदेव तस्य परितोषहेतोरवसानमिति। उच्यते–

**हे लोकनाथ! राज्ञस्ते कोऽपि नाथो न विद्यते।**
**तन्नाथत्वादमुक्तात्मा कः प्रसन्नो भविष्यति।।७८।।**

अत्र राजा सर्वलोकस्य नाथः। यथा हि लोकस्तदनुशासनेन स्वप्राणान् धनं च रक्षयितुमयुक्तं त्यक्त्वा युक्ते कर्मणि प्रवर्तते। स्वेच्छाचारत्वाद् राज्ञः कश्चिदप्यनुशासको नाथो नास्ति। 'अनाथ' इत्यपि परमविपदामधिष्ठानं वर्तते। स्वेच्छाचारिणोऽननुशास्तृत्वान् न्याये प्रवर्तकः कुतः? तस्माद् विपदङ्कावस्थितोऽयं यद्यात्मानं न परिमोचयति

तदा तन्नाथतया न प्रसन्नो भवति। तस्माल्लोकनाथत्वमस्य परितोषहेतुत्वेन न युज्यते। तस्मात् प्रमादस्थानावस्थानादुद्वेगस्यैव परमोच्ययो भवति, न परितोषस्य, पृथग्जनसंघस्थविराय प्रणामवत्।

यथैकोऽनाथः पृथग्जनसंघस्थविरः प्रणामादिना तुष्यति। तद्वदनाथो राजाऽपि प्रणामसत्कारादिना प्रसीदति। आह चात्र–

**यो विद्वान् जीवलोकेऽस्माद् वस्तुतो हि पराङ्मुखः।**
**भिन्नोऽन्वेषणतोऽनाथो वस्तुतो हि प्रसीदति।।**

अत्राह। यस्मान् मन्ददण्डस्य राज्ञः कीर्तिर्न जायते, उग्रदण्डं राजानं मृतमपि कीर्तिरनुप्रवर्तते। तस्माद् राजा उग्रदण्डो भवेदिति। उच्यते–

**मृतेऽपि यशसा राज्ञि गुणः कोऽपि न जायते।**
**त्वय्यगुणश्वपाके च कथं न स्यान् महद्यशः।।१६।।**

यदि मृतस्यापि राज्ञः कीर्तिद्वारा कश्चिद् गुणविशेषो भवेत् तर्हि राज्ञस्तीक्ष्णदण्डत्वं युज्येत्, कीर्तिद्वारा तस्य कोऽपि गुणविशेषो नास्ति। प्रसिद्ध्या तस्य तत्पापं नापनीयते। यदि 'मम कीर्तिर्लोके तिष्ठति, तावदहमविपतितधर्मो भविष्यामि, अतः प्रसिद्ध्या गुणो जायत' इति चेत्। उच्यते। नैष्ठुर्यचौर्यादिनानाविधावगुणकायोऽपि त्वयि कथं न स्यात्। यस्मात् त्वय्यवगुणाधिक्यमस्ति, तस्मात्तद्धेतुकमहाप्रसिद्ध्या नियतं पापसञ्चयात् त्वं दुर्गतिपातैकान्तनिष्ठां जनयिष्यसि। यदि प्रसिद्धिरवद्यमलं प्रक्षालयेत्, तदा श्वपचानामपि श्वसु प्रतापत्वान् महाप्रसिद्धिः स्यात्। अतः श्वपचानपि प्रक्षालयेत्, न चैतदेवम्, अतः प्रसिद्ध्या न किञ्चिदपि प्रयोजनम्। तस्मादात्मकल्याणकामो राजा उग्रदण्डो न स्यात्, आत्मघातिनीकन्यावत्।

काचिद् धनिकदुहिता मृता सती महता वैभवेन निष्कासिता। कस्याचिदन्यया कन्यया दृष्टा, दृष्ट्वा च "ममाप्येवंविधा समृद्धिर्भविष्यती"ति स्वयं पाशमवलम्ब्य निष्प्राणाऽभवद्, एवं राजाऽपि 'तस्मिन् राजनि मृतेऽप्येवमनुशासनं प्राज्वलदि'ति प्रसिद्ध्यै पापं करोति। आह चात्र–

**मृते यदि खले राज्ञि प्रसिद्ध्या यद् भवेद् गुणः।**
**कस्मात्तथा भवेनैव चौरे चापि दुरात्मनि।।**

अत्राह। यो राजा कुलीनः स एव राज्यमर्हति, नान्यः, तस्मादस्य मदो युज्यत इति। उच्यते–

**यदा सर्वस्य चैश्वर्यं पुण्येनोत्पद्यते तदा।**
**नायमैश्वर्यभाक् चेति वक्तुं चैवं न पार्यते।२०।।**

यत्र यत्र संभोगसंसाधकं कर्म पुण्यमिति विद्यते तत्र तत्रैश्वर्यसम्पत्तिः स्यात्, तत् कर्मापि नैकान्तम्। यदा 'सत्त्वोऽयं नैश्वर्यभागि'ति वक्तुं न युज्यते, शिल्पशिक्षावत्।

यथा–शिल्पशिक्षा लोके सर्वसामान्या। यः कश्चिदिच्छति, स सर्वः शिक्षते, एवं पुण्येषु औतेषु राज्यं प्राप्यते। आह चात्र–

**यदा कर्मात्मके लोके स्वकृतं भुञ्जते फलम्।**
**तदा राजन् सुखप्राप्तावीर्ष्या तत्र न युज्यते।।**

अत्राह। यस्माद्राज्यपरिपालनधर्मस्तु क्षत्रियस्यैव देशितः, नापरजातित्रयस्य। तस्मात् कुलीनेन क्षत्रियेणैव राज्यं कर्तव्यम्, नान्येन। तस्मादस्य मदो युज्यत एव। उच्यते–

**आजीवाजीवौपयिको लोके जातिरितीरिता।**
**तस्मात् सर्वेषु सत्त्वेषु जात्या भेदो न विद्यते।।२१।।**

एत आजीवोपयिकाः। यथाहि क्षत्रियादिजातयः। तथाहि–प्रथमे कल्पे तु सर्वे सत्त्वा बाह्यप्रत्ययबीजनिरपेक्षोत्पत्तित्वादुपपादुकाः, चित्तमात्रोत्पत्तित्वान् मानसाः, स्वयंप्रभा, ऋद्धिमन्तः, खेचराः, प्रीतिभोजिनः, प्रीतिधर्मिणः स्त्रीपुष्पेन्द्रियरहिताश्च। तस्मात् सर्वेषामेतेषामुपपादुकयोन्युद्भूतत्वाज्जातिविभागो न संभवति। तत्कालान्तरे कवलीकाराहारे प्रवृत्यात्यौदारिकाहाराभ्यासे तन्निष्यन्दोत्सर्जनार्थं मूत्रोच्चारमार्ग उद्भूतः। परस्परस्त्री-पुरुषेन्द्रियऔताकारभेददर्शने सति पूर्वजन्माभ्यासवशात् कामरागोत्पन्नेषु परस्परमिथ्याप्रवृत्तेः गर्भजयोनिरुत्पन्ना। ततो लोके सञ्चितसन्निधानदोषेणादत्तादानादौ प्रवृत्तेः स्वाजीवकार्यभेदाभ्युपपत्तेर्जातिभेदोऽजायत्। तथा हि किल महताजनकायेन क्षेत्ररक्षणार्थमेको योग्यजनो नियोजितः, तत्कर्मभ्युपगमात् स 'क्षत्रिय' इत्याख्यातः। दान्तिकामा ये तपः सम्पादयितुं ग्रामविमुखाः ते 'ब्राह्मण' इत्याख्यातः। राजाज्ञाकारिणो वैश्याः, कर्षणादिक्षुद्रकर्मरतास्ते शूद्राः। तेषामपि कर्मविशेषस्याभ्यन्तरभेदात् कर्मकरादिजातिभेदोऽभवत्। एवं सति 'जीवाजीवौपयिको लोके जातिरितीरिता।' यस्मादेतदेवं तस्मात् सत्त्वेषु जातिऔतो भेदो नास्ति। तस्माद् भेदाभावाज्जातिर्मदहेतुर्न युज्यते, नवघटपर्यायवत्।

यथा नवो घटः पर्यायेण यथाभिलाषवत् क्रियते। अभिलाषद्वारेण तैलघटो घृतघटश्च यावद् भवति। यथा घटस्तथा प्रथमकल्पे यत्कार्यं कृतं तज्जातीति कथ्यते। आह चात्र–

**कुलहीनः कुलीनो वा कर्मणा येन जीवति।**
**ततः प्रभृति कालेन तत्तज्जातिषु जायते।।**

अत्राह। यस्मात् कुलचतुष्टयं ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च व्यवस्थितम्, कुलं व्यवस्थितं तस्मात् सत्त्वेषु जातिभेद इति। उच्यते–

**सुदीर्घोऽतीतकालो हि स्त्रीणां चित्तं च चञ्चलम्।**
**तस्माद्धि क्षत्रियो नाम जात्या किञ्चिन्न विद्यते।।२२।।**

इह पित्रोः संजायते संजातञ्च 'कुलमि'त्याख्यायते तर्हि तद् दुर्लभम्, स्त्रीषु व्यभिचारदर्शनात्। तत्रातीतकालदीर्घत्वात् स्त्रीणाञ्च चित्तस्यापि चापल्यात् तासामन्यकुलसंसर्गे सन्तानान्युत्पद्यन्ते। तस्मात् कुलं सन्दुष्यति। तस्मान् मिथ्याचारिणीभिर्जाति दूषितानां जातिऔतकुलपरम्परामानं न युज्यते। तदेवं क्षत्रियो नाम जात्या न विद्यते। वर्तमाना राजानः प्रायः शूद्रयोनिकाः। तेषामपि न युज्यते, मार्कण्डेयकुण्डिकान्यास[२२]वत्, व्यास[२३]वच्च।

यथा लोके नश्यमाने मार्कण्डेयस्य परिभ्रमणे गृहपरिवर्तनं कुण्डिकापरिवर्तनं च श्रूयते। तेन ब्राह्मणगृहे हेमकुण्डिका न्यस्ता। चिरात् तद्गृहमागत्य तेन पृष्टम्–'अस्मिन् ब्राह्मणगृहे कोऽस्ती'ति। त ऊचुः। नेदं

ब्राह्मणगृहं, क्षत्रियगृहमिदम्। मार्कण्डेय आह–'एको न्यास आसीत्, केनचिद् ब्राह्मणेन हेमकुण्डिका न्यस्ता। त ऊचुः–'न हेम्नोऽपितु रजतजातीये'ति। स तेषां हस्ते तां निक्षिप्य पुनश्चिरादागतः। वेश्यगृहत्वेन परिवर्तितम्, कुण्डिका च ताम्रजातीया। पुनस्तेषां हस्ते निक्षिप्यान्यस्मिन् काल आगते सति तच्छूद्रगृहत्वेन परिवर्तितम्, कुण्डिकायाश्चापि लौहजातीयपर्यन्तं परिवर्तनं श्रूयते। यथा हीयं हेमकुण्डिकाऽन्यस्मिन् समये तत्तदवस्थायां परिवर्तिता, तद्गृहमप्यवस्थाभेदेन भिन्नत्वेनाभवत्, एवं लोकस्य जातिपरिवर्तनमप्यस्ति। तस्मात् क्षत्रियो नाम जात्या न किञ्चिदपि विद्यते।

व्यासस्यापि पराशरेण प्रातर्नीहारेणाच्छाद्य धीवरकन्यायां गन्धवत्यामुत्पत्तिर्श्रूयते। स हि द्वीपे जातत्वाद् द्वैपायनो नामापि। वेदव्यसनत्वाद् व्यास[२४] इत्युच्यते। आह चात्र–

**अनन्तत्वात्तु कालस्य स्त्रीवर्गस्य च चापलात्।**
**विद्वान्सस्तु ततो ह्यत्र जातिमानं न कुर्वते।।**

अत्राह यदि जात्या क्षत्रियो नास्ति, तदा प्रजापालनकर्मणा क्षत्रियो भवेदिति। उच्यते–

**जायते यदि शूद्रोऽपि क्षत्रियो नाम कर्मणा।**
**विप्रोऽपि कर्मणा शूद्रः केन मन्ये न जायते।।२३।।**

यदि हि इदानीमक्षत्रियोऽपि क्षत्रियकर्म कुर्वन् क्षत्रियो भवति। शूद्रोऽपि हि नाम ब्राह्मणकर्म कुर्वन् ब्राह्मणो भविष्यति प्रतिगृहणन्नधीयानश्च, तथाप्यन्योप्यन्यदीयं कर्म समाचरन् स एव स्यात्। तत्र यदिष्टं कर्मणा क्षत्रियो भविष्यतीति। तन्न। नौपारगमनवत्।

यथा नौः पारं गच्छत्यागच्छति। तत्र नद्या उभयकूलस्थितो ब्रुवाते 'नौः पारं गता नौः पारं गते'ति। न च किञ्चित् सिद्धं पारमस्ति। स एवासिद्धो ब्राह्मणः क्षत्रियो वा। यदि शूद्रः कर्मणा क्षत्रियो भवत्येवं विप्रोऽपि कर्मणा शूद्रो भविष्यति। आह च–

**सद्यः पतति मांसेन लाक्षया लवणेन च।**
**त्र्यहेण शूद्रो भवति यो विप्रः[२५] क्षीरविक्रयी।।२६ इत्यादि।**

आह चात्र–

**कर्मणा यदि वर्णाः स्युर्जातिस्तत्र न कारणम्।**
**न च द्वाभ्यां भवन्त्येते जातिः प्राग् दूषिता यतः।।**

अत्राह। रज्यैश्वर्येण हि महता महतो जनस्य शक्नोत्यैश्वर्यसंविभागं कर्तुं कालेन यतस्तस्मान् महदैश्वर्यमेष्टव्यं राज्ञेति। उच्यते–

**पापस्यैश्वर्यवद्राजन् संविभागो न विद्यते।**
**विद्वान्नाम परस्यार्थे कः कुर्यादायतीवधम्।।२४।।**

सत्यं राज्ञा महदैश्वर्यं महता कालेनोपार्जितं शक्यं महाजनस्य संविभक्तुम्, तत्तु न विना महाजनपीडया शक्यं निष्पादयितुम्, अवश्यं च महाजनपीडया महत् पापं भविष्यति[२७]। महता पापेन, परत्र महदात्मदुःखं भवितव्यम्। यथा चैश्वर्यं संविभज्यते नैवं तन्निमित्तमवद्यमुपचितं संविभक्तुं पार्यते केवलमेकाकिनैव तद्दुःखमनुभवितव्यम्। तत्कोऽयमपण्डितः 'परस्मै अल्पोपकारार्थं संविभक्ष्यामी'त्यनल्पानर्थप्रदानदक्षमसाधारणमवद्यमुपचिन्वन्नायत्या वधमात्मनः कुर्यात्तदिदं ह्रियस्स्थानं न मदस्य, महिषोपघातवत्, शूनिकदारवच्च।

यथा महिषः स्वपरार्थमेकेन हन्यते बहुभिः परिभुज्यते। घातकस्यैव पापम्। तथा राजा राज्यहेतोः पापं कर्म करोति, बहवश्च परिभुञ्जते। तेन कृतेन पापेनापाये सुदारुणफलं तु तमेव राजानं भविष्यति।[२८]

तथा च–शूनिकदारकोऽधर्मभयान्न मारयति स च स्वजनेनोच्यते 'मारय त्वं यस्तत्राधर्मो भविष्यति स सर्वेषामस्माकं समतया भविष्यती'ति। तेनोपायेनोक्तं 'महती मे शिरसि वेदना तां भाजयथे'ति। त ऊचु'र्न शक्यत' इति। स प्राह। 'तत् कथमपायवेदना समतया भविष्यती'ति। आह चात्र–

**अनिन्द्यमिह[२९] लोके यत् परत्र च सुखावहम्।**
**तत् कर्तव्यं मनुष्येण परत्र सुखमिच्छता।।**

अत्राह। राज्ञः खल्विह महत्यैश्वर्येऽवश्यमेव मानेन भवितव्यमिति। उच्यते–

**दृष्ट्वा समान् विशिष्टांश्च परांश्छक्तिसमन्वितान्।**
**ऐश्वर्यजनितो मानः सतां हृदि न तिष्ठति।।२५।।**

परत उत्कर्षमात्मनः पश्यतो मानः स्यात्। स चानवस्थितः परापेक्ष एवेति न विद्वांसो मन्यन्ते। तस्मादपहाय मानं हितमाधित्सुना गुरव इव स्वामिन इव परे नावमन्तव्याः। तदेवं कुर्वाणाः स्युरेव ते भाजनं सम्पदां, जगदाराधनप्रवृत्तत्वात्, वासुलपत्नीवत्।

वासुलब्राह्मणस्य पत्नी कथयति स्म 'न मत्सदृशी स्त्री काचित् स्त्रीरूपेण पृथिव्यां संविद्यते न च त्वं मामनुरूपेण वस्त्रालङ्कारेणार्चयसी'ति। सा तेनोपायेन रुद्रनाम्नो राज्ञोऽन्तःपुरं प्रवेशिता। तस्यास्तत्र परिचारिकां दृष्ट्वा रूपमदो नष्टः श्रीमेव राजपत्नीम्। तथा राज्ञाऽऽत्मनः समान् विशिष्टांश्च दृष्ट्वा मदं चाहङ्कारञ्च युक्तं त्यक्तुम्। आह चात्र–

**दीने राजनि तावन् मानो राज्ञो न युज्यते कर्तुम्।**
**तुल्ये श्रेष्ठे च नृपे कुतोऽवकाशोऽस्ति मानस्य।।**

आचार्यार्यदेवपादानां बोधिसत्त्वयोगाचाराच्चतुःशतकादहङ्कारविपर्यासप्रहाणोपायभावनासदर्शनं नाम चतुर्थप्रकरणवृत्तिः।।

## संदर्भग्रन्थ-

१. विपर्यासस्य-भोटपाठे नास्ति।

२. द्र.-सहजं कर्म कौन्तेय! सदोषमपि न त्यजेत्। श्रीभगवद्गीता-१८/४८। पृ.-१०५, गीता प्रेस, गोरखपुर, सं.-२०३२। अपि च-सहजं किल यद्विनिन्दितं न तु तत्कर्मविवर्जनीयकम्। परशुमारणकर्मदारुणः अनुकम्पामृदुकोऽपि श्रोत्रियः।। -अभिज्ञानशाकुन्तलम्-५.१, सम्पा.- शिवप्रसाद द्विवेदी, प्रका.- भारतीय विद्या प्रकाशन, दिल्ली/वाराणसी, १९९८।

३. ऋषीणां.विद्यते- शास्त्रिसंस्करणे नास्ति। द्र.- Catuhasatika by Arya Deva, ed. Harprasad Shastri, Memoirs of the Asiatic Society of Bengal, Vol. 3, No. 8, Calcutta, 1914. p. 449-514

४. तेषु-शास्त्रिसंस्करणे नास्ति।

५. आकरोऽज्ञातः।

६. आकरोऽज्ञातः। शास्त्रिसंस्करणे पद्यमिदं गद्यरूपेण विद्यते, पृ.-४६२।

७. द्र.- पौराणिक कोश पृ.-८, ४५८, सम्पा.- राणाप्रसाद शर्मा, प्रका.- ज्ञानमण्डल लिमिटेड, वाराणसी, १९८६

८. आजाता-शास्त्रिसंस्करणे, पृ.-४६२।

९. द्र. श्रीमद्भागवतपुराणम्- ९.१६, पृ.-४२०, प्रका.- मोतीलाल बनारसीदास, दिल्ली, १९८३।

१०. आकरोऽज्ञातः।

११. द्र.- पौराणिक कोश, पृ.- १०२, २६१

१२. आकरोऽज्ञातः।

१३. आकरोऽज्ञातः।

१४. विभागकृतो-शास्त्रिसंस्करणे, पृ.-४६३।

१५. संस्कृतं-शास्त्रिसंस्करणे।

१६. अतोऽपायं पतितः-शास्त्रिसंस्करणे नास्ति।

१७. प्रकीर्यः पूतिकरजः पूतीकः कलिमारकः। अमरकोशः। २/४/४८।। 'करञ्जवृक्ष' इति भाषायाम्।

१८. द्र.-श्रीमद्भगवद्गीता- २/३७।। पृ.-२१, गीता प्रेस, गोरखपुर, सं.-२०३२।

१९. विषदं-शास्त्रिसंस्करणे, पृ.- ४६४।

२०. यथा स्वामिन आदेशवद्..माम् हठादुत्सृज्य निर्गतः- नास्ति शास्त्रिसंस्करणे।

वस्तुचारूत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत्प्रतिपादयितुमिष्यते तद् तद् व्यङ्ग्यम् अयमर्थश्च व्यञ्जनया वेद्यतेऽतएव व्यङ्ग्योऽप्युच्यते। काव्ये चारूत्वं प्रतीयमानेनार्थेनैव न वाच्यार्थेन। यथोक्तमानन्दवर्धनाचार्येण-

"अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन। सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन।"

काव्ये हि व्यङ्ग्यस्त्रिविधो भवति। वस्तुरूपोऽलङ्कारूपो रसादिरूपश्चेति। तत्र वस्त्वलङ्काररूपो व्यङ्ग्योऽर्थो वक्तुरिच्छया कदाचिद् वाच्यतामपि सहते, किन्तु रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। न च रसश्रृङ्गारादिपदैरभिधीयते, अपितु विभावानुभावव्यभिचार्यभिधानद्वारेणैव प्रतीयते। तेनाऽसौ व्यञ्जनाव्यापारगम्यो व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः। अभिहितान्वयवादिभिरभिमता तात्पर्यवृत्तिरपि पदार्थपरस्परसंसर्ग-रूपवाक्यार्थबोधे परिक्षीणा न व्यङ्ग्यबोधिनी। अत एवोक्तं साहित्यदर्पण-

**वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम्।**
**अङ्गीकार्या तुर्यावृत्तिर्बोधे रसादीनाम्।। इति।।**

एवं च काव्यात्मभूतस्य रसादिव्यङ्ग्यस्य व्यञ्जनयेव प्रतीतिरिति। अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्य-ध्वनिभेदयोर्यो वस्तुरूपो लक्षणामूलव्यङ्ग्योऽर्थः स न लक्षणाबोध्यः।

"ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्"

इति वचनाल्लक्षणाया विषयोऽन्यः फलं चान्यत् तच्च व्यञ्जनागम्यम्। व्यङ्ग्यं विना तु तत्र लक्षणैव न भवति। उक्तञ्च-

**"यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।**
**फले शब्दैकगम्येऽत्र व्यञ्जना नापरा क्रिया।"**

एवं च वस्तुव्यङ्ग्यस्य व्यञ्जनयैव प्रतीति शब्दशक्तिमूले ध्वनौ अभिधाया नियन्त्रणेन अर्थान्तरस्य प्रतीतावुपमादेरलङ्कारस्य च प्रतीतौ व्यञ्जनादृते नान्यो व्यापारः। उक्तं च.......

**"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।।"**

इति वस्त्वलंकाररूपव्यङ्ग्यस्य व्यञ्जनयैव बोधः। अर्थशक्तिमूलध्वनौ अभिहितान्वयवादे मीमांसकमतेऽभिधया केवलं पदार्थबोधे तदनन्तरं तात्पर्यवृत्त्या पदार्थसंसर्गरूपे वाक्यार्थबोधे सति तदतिरिक्तव्यङ्ग्यबोधाय अवश्यं व्यञ्जना स्वीकार्या। अत्रैव ध्वनौ अन्विताभिधानवादे मीमांसकमतेऽपि सामान्यविशेषरूपः पदार्थ एवाभिधाविषयः अतिविशेषभूतो वाक्यार्थोऽपि नाभिधाविषयस्तत्राप्यर्थान्तरभूतस्य व्यङ्ग्यस्य बोधेऽवश्यमेव व्यञ्जनाङ्गीकार्या। उक्तं हि लोचने-

व्यञ्जना व्यापारगम्ये व्यङ्ग्ये नाभिधा समयाभावात्। न तात्पर्यात्मा तस्यान्वयप्रतीतामवे परिक्षयात्। न लक्षणात्मा स्खलद्गतित्वाभावात्। तत्रापि हि स्खलद्गतित्वे पुनर्मुख्यार्थबाधानिमित्तं प्रयोजनमित्यनवस्था स्याद्। तस्मादभिधातात्पर्य-लक्षणाव्यतिरिक्तश्चतुर्थोऽसौ व्यापारो ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिशब्द-व्यदेशनिरूपितोऽभ्युपगन्तव्यः।

"नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते" इतिवादिनां मीमांसकानां मतेऽपि निमित्तस्य शब्दस्य नियतनिमित्तत्वानिश्चयान्नैमित्तिकस्य व्यङ्ग्यस्य प्रतीतिरेव कथम् इति व्यङ्ग्यप्रतीतौ संकेतस्याभावात् व्यञ्जनैव स्वीकार्या।

'सोऽयमिषोरिवदीर्घदीर्घतरोऽभिधाव्यापारः।'

इति मीमांसकमतेऽपि यद्यभिधया एव सर्वविधार्थबोधस्ततः किमिति लक्षणा स्वीक्रियते, कथं वा श्रुत्यादिप्रमाणानां पूर्वपूर्वबलीयस्त्वम्। कथं चानुमेयार्थस्यापि वाच्यत्वं न स्वीक्रियते इति तत्रापि व्यञ्जना स्वीकरणीया।

'यत्परः शब्दः सः शब्दार्थः।'

इति मीमांसकमतेऽपि यदेव वाक्ये विधेयं तत्रैवान्येषां शब्दानां तात्पर्यमिति उपात्तस्यैव तात्पर्य न तु प्रतीतमात्रे इति वाचोयुक्तेरसंगत्या तत्रापि व्यङ्ग्यबोधे व्यञ्जनाया अनिवार्यता। किं वा काव्यदोषाणां नित्यत्वानित्यत्वव्यवस्थायामपि व्यञ्जनैव हेतुः अभिधाव्यापारस्य सर्वत्रैव समानरूपतयाऽर्थबोधकत्वात् व्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वादुपपद्यत एव दोषविभागव्यवस्था। व्यञ्जकताश्रयेण काव्ये पदानां प्रयोगस्य सन्दर्भविशेषे औचित्यमनौचित्यञ्च जायते। किञ्चासुन्दरगुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयः ? व्यञ्जनाया एव।

न हि अभिधायां व्यञ्जनाया अन्तर्भावः संकेतभिन्नविषयत्वात्, न च लक्षणायाम्, मुख्यार्थबाधादिहेतुरहितत्वात्, न च तात्पर्यायामन्तर्भावः, संसर्गातिरिक्तार्थबोधकत्वात्। व्यञ्जना हि क्वचिद्भिधामनुगच्छति, क्वचिल्लक्षणामनुगच्छति, क्वचिच्चैतद्द्वयमपि परित्यज्यावाचकवर्णाननुगच्छति, क्वाप्यशब्दात्मकनेत्रत्रिभागाव- लोकनादिगतत्वेनापि दृश्यते। अतः सा भिन्ना एव वृत्तिः।

किञ्च "अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्" इतिवादिभिर्वैयाकरणैर्वेदान्तिभिश्च पूर्वावस्थायामसत्ये वर्त्मनि मायावर्त्मनि वा पतितैः पदपदार्थकल्पनाया अङ्गीकारेण व्यङ्ग्योदाहरणेषु व्यञ्जनावश्यमेवानुसर्तव्या। एवमेव व्यङ्ग्यस्यानुमेयतां प्रतिपादयतां तार्किकाणां मतमपि अनुमानरीत्या व्यङ्ग्यसाधने प्रमाणासत्त्वाद् हेत्वाभासदूषितमेव। व्यञ्जनाद्यास्तु तादृशव्यङ्ग्बोधने प्रमाणं बिना हेतुं विनापि सामर्थ्यमस्ति।

'अतोऽस्ति व्यञ्जना नाम तुरीयावृत्तिः।'

मीमांसकवैयाकरणवेदान्तितार्किकादिभिरपि व्यञ्जनावश्यमेवाङ्गीकार्येति ध्वन्यालोकलोचन काव्यप्रकाश- साहित्यदर्पणरसगङ्गाधरादि-ग्रन्थेषु सविस्तृतं सोदाहरणं सप्रभेदं तत्तन्मतनिराकरणपुरः परं प्रपश्चितं वर्तते।

**व्यञ्जना प्रभेदाः-**

व्यञ्जना द्विविधा शाब्दीव्यञ्जना, आर्थीव्यञ्जना चेति।

१. शाब्दीव्यञ्जना शब्दनिष्ठा, शब्दस्य परिवृत्त्यसहत्वाच्च शाब्दत्वं व्यञ्जनाया बोद्धव्यम्, येषां शब्दानां विनिमयः कर्तु न शक्यते तदाश्रया शाब्दीव्यञ्जना। शाब्दीव्यञ्जनापि द्विविधा अभिधामूला लक्षणामूला च

**क. अभिधामूला शाब्दीव्यञ्जना-**

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।।**

वाच्यार्थनियामकैश्शब्द एकस्मिन्नेव नियतार्थेऽवस्थितिं लभते। वाच्यार्थंनियामकसाधननिकरश्चायम्-

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतवः।।**
**अस्या अभिधामूलाया उदाहरणं मम्मटः प्रस्तौति-**

भद्रात्मनो दुरधिरोहतनोरिति पद्येऽस्मिन् राज्ञः स्तुतिः प्राकरणिकी, हस्तिपरकोऽपि कोऽपि परोऽर्थः व्यञ्जनयैव सम्पाद्यते।

**ख. लक्षणामूला शाब्दीव्यञ्जना-**

मुख्येऽर्थेऽनुपपन्ने लक्षणया लक्ष्यार्थस्य संयोजनं क्रियते। लक्षणायां लक्ष्यार्थस्य (गङ्गायां घोष इत्यत्र गङ्गास्थानीय गङ्गातटरूपस्य) प्रतीतिरस्तु लक्षणावृत्या साध्यते, किन्तु प्रयोजनस्य (शैत्यपावनत्वादेः) प्रतीतिर्व्यञ्जनया क्रियते। लक्षणामूलशाब्दीव्यञ्जनायाः भेदद्वयं कथितम्-अर्थान्तरसंक्रमितम्, अत्यन्तरितरस्कृतञ्च। अनयोर्द्वयोरपि भेदयोः प्रतीयमानाः प्रयोजनविशेषास्ते व्यङ्ग्या एव न लक्ष्याः। लक्षणामूलार्थान्तरसंक्रमितवाच्योदाहरणम्-

'कमलानि कमलानि भवन्ति।'

**लक्षणामूलात्यन्ततिरस्कृतवाच्योदाहरणं च-**
**"निश्श्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।"**

अत्र अन्धशब्दः सर्वथा बाधितः सन् व्यञ्जनया चन्द्रस्य विच्छायत्वानुपयोगित्वादि धर्मजातं व्यनक्ति।

२. आर्थी व्यञ्जना-अर्थस्य प्राधान्येन व्यञ्जकतायाम् अर्थास्तु वाच्यलक्ष्यव्यङ्ग्यरूपास्त्रिविधाः। अर्थाः वक्तृबोधव्यादीनामुपाधीनां सहकारेण व्यञ्जका भवन्ति अतोऽर्थस्य व्यञ्जकता सर्वदोपाधिका भवति अर्थव्यञ्जकोपाधिभूताः तु-वक्तृबोधव्यकाकूनां वाक्यवाच्यान्यसन्निधेः

**प्रस्ताव देशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।**
**योऽर्थस्यान्यार्थ ।।हेतुर्व्यापारो व्यक्तिरेव सः।।**

क. **वाच्यार्थसम्भवना-वक्तृविशिष्टा आर्थीव्यञ्जना-यथा**

**अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्।**
**श्रमस्वदेसलिलनिश्श्वास निःसहा विश्राम्यामि क्षणम्।।**

अत्र वक्त्र्या पुंश्चल्या वैशिष्ट्यादेव वाच्यार्थत् परपुरूषोपभोगरूपो व्यंग्योऽर्थः समुल्लसति।

३. **बोद्धव्यविशिष्टा-**

**औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिः श्वसितम्।**
**मम मन्दभागिन्याः कृते सखि ! त्वामप्यहह परिभवति।।**

अत्र बोद्धव्यायाः सख्या वैशिष्ट्याच्चौर्यरतिरूपोऽर्थः प्रतिभावतां मनस्सु स्फुरति।

४. **काकुविशिष्टा-**

**तथा भूतां दृष्ट्वा नृपसदसि पाञ्चालतनया**
**वने व्याधैः सार्षं सुचिरमुषितं वल्कलधरैः।**

**विराटस्यावासे स्थितमनुचितारम्भनिभृतं**
**गुरूः खेदं खिन्ने मयि भजति नाद्यापि कुरूषु।।**

अत्र काक्वा मयि न योग्यः खेदः, कुरूषु तु योग्य इति व्यङ्ग्यार्थस्य प्रतीतिः।

५. वाक्यविशिष्टा-

**तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र।**
**इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः।।**

अत्र तदेदानीमित्यादि पदानां पर्यालोचनया सर्वथा शठोऽसीति व्यङ्ग्यार्थप्रतीतिः।

६. **वाच्यविशिष्टा-**

उद्देशोऽयं सरसकदलीश्रेणि शोभातिशायी इत्यादि पद्ये वाच्यवैशिष्ट्यादेव नर्मदोद्देशः सर्वथानुकूलो सुरतोपभोगार्थं प्रवेशयोग्यश्चेति व्यज्यते।

७. **अन्यसन्निषिविशिष्टा-**

**नुदत्यनार्द्रमना श्वश्रूः मां गृहभरे सकले।**
**क्षणमात्रं यदि सन्यायां भवनि न वा भवति विश्रामः।।**

अन्यस्य कस्यापि सन्निधौ कयाचिद् विदग्धया अत्र सुरतसंकेतसमयः समुपस्थितमुपपतिं प्रति सूचितः।

८. **प्रकरणरूपप्रस्तावविशिष्टा-**

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत् सखि ! सज्जय करणीयम्।।

अत्रोपनायकं रन्तुमभिसन्ती नायिकाभिसारार्थं समुद्यतेति व्यङ्ग्योऽर्थः।

९. **देशविशिष्टा-**

**अन्यत्र यूयं कुसुमावचयं कुरू वमत्रास्मि करोमि सख्यः।**
**नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः।।**

१०. **कालविशष्टा-**

**गुरूजनपरवश प्रिय किं भणामि तव मन्दभागिनी अहमकम्।**
**अद्य प्रवासं ब्रजसि ब्रज स्वयमेव श्रोष्यसि करणीयम्।।**

अत्र मधुमासकालमहिम्ना मधुमोसेऽस्मिन्नत्रैव स्थातव्यमिति व्यङ्ग्योऽर्थः परिस्फुरति।

११. **चेष्टाविशिष्टा-**

**द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया,**
**प्रोल्लाल्योरूयुगं परस्परसमासक्तं समासादितम्।**
**आनीतं पुरतः शिरोंऽशुकमषः क्षिप्ते चले लोचने,**
**वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते।।**

द्वारोपान्तनिरन्तरे मयीति पद्ये लोचनचालनांशुकाधः प्रेक्षणादिभिश्चेष्टाभिः विपरीतरतिप्रदानाद्यर्थो व्यङ्ग्यः।

ख. **लक्ष्यार्थसम्भवा-**

**साषयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते।**
**सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया।।**

अत्र अपराधिन्याः सख्या विषये तात्पर्यानुपपत्तेर्मुख्यार्थ-बाधः, तेन लक्षणायाः प्रयोजनीभूतं शत्रुत्वातिशय रूपं व्यङ्ग्यं प्रतीतिपथमवतरति

ग. **व्यङ्ग्यसम्भवा**

**पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।**
**निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरेव।।**

अस्माद् व्यङ्ग्यार्थात् संकेतस्थानमिदमतोऽत्र सुरतसुखास्वादो भविष्यतीत्यपरो व्यङ्ग्योऽर्थोऽभिव्यक्तो भवति।

आर्थीव्यञ्जनायां सर्वत्रैव वक्तृबोधव्यादीनामुपाधीनां वैशिष्ट्यादेवव्यङ्ग्यार्थस्य प्रतीतिः, एवमुपाधीनां भेदात् बहवो भेदा भवन्ति। आर्थीव्यञ्जना यं व्यङ्ग्यमर्थमभिव्यनक्ति, असावपि त्रिविधवस्तुरसालंकाररूपेण त्रिधा विभज्यते। एवं हि-अभिधालक्षणातात्पर्यातिरिक्ता वृत्तिर्व्यञ्जना साहित्यशास्त्रे बहुधा प्रपञ्चिता। अभिधा हि एकस्य संकेतिस्य अर्थविशेषस्याभिधायिनी भवति। लक्षणा रूढिप्रयोजनान्यतरवशंवदीभूता गौणार्थस्य लक्षिका। तात्पर्याख्या शक्तिस्तु तु पदमसमूहात्मकवा क्यार्थसम्बन्धिनी। व्यञ्जना तु तदा प्रवर्तते यदा अभिधा विगत शक्तिर्लक्षणा च प्रतिहतप्रभावा जायते।

अत एव त्रिवेणिकार आशाधरस्तु व्यञ्जनां मर्मज्ञजनसेवनीयां सम्मुनते-

**शक्तिं भजन्ति सरला लक्षणां चतुरा नराः।**
**व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः।।**
**यत्राभिधालक्षणयोर्नयोगस्तात्पर्यशक्तेरपि न प्रसक्तिः।**
**शब्दस्य तत्र वननाभिधानव्यापार एषोऽभिनवश्चकास्ति।।**

सहायकग्रन्थाः-
काव्यप्रकाशः
साहित्यदर्पणः
ध्वन्यालोकः
वेदान्तपरिभाषा
परमलघुमञ्जूषा

■ पता : साहित्य विभाग, रा.सं.सं., जयपुर परिसर जयपुर

# गणपाठविषये कलापपाणिनीयव्याकरणयोस्तुलना

■ चिरञ्जीवी अधिकारी

व्याकरणस्य पञ्चाङ्गानि वर्तन्ते। तद्यथा-सूत्रपाठधातुपाठगणपाठोणादि-लिंगानुशासनानि। पञ्चाङ्गेषु गणपाठस्य स्थानं महत्त्वपूर्णमिति सर्वैः विद्वद्भिः स्वीकृतम्। गणपाठात् शब्दानां पठितः पाठक्रमो बोध्यते। सूत्रे प्रत्येकशब्दानां पाठापेक्षया गणपाठनिर्देशात् लाघवं भवति। तत्र प्रत्येकशब्दानां निर्देशः प्रायः असम्भव एव। वैयाकरणाः मात्रालाघवं स्वीकुर्वन्ति। उक्तञ्च नागेशेन-'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः'[१] इति। एतस्याः परिभाषायाः अवलोकनेन ज्ञायते यद् गणपाठस्य महत्त्वमस्तीति। अतः प्राचीनैराचार्यैः गणनिर्देशः कृतः।

पाणिनीयव्याकरणे आदिप्रभृतिशब्दाभ्यां बहुवचनशब्दैश्च सूत्रे गणाः निर्दिष्टास्सन्ति। यथा-सर्वादीनि सर्वनामानि[२], अव्ययीभावे शरत्प्रभृतिभ्यः[३], कुम्भपदीषु च[४]'त्यादीनि। कलापव्याकरणे केवलमादिशब्देनैव गणपाठाः निर्दिष्टास्सन्ति। यथा-सर्वादिः, पूर्वादिः, स्वस्रादिः, अग्न्यादिरित्यादयः।

कलापव्याकरणे प्रायः विंशत्यधिकाः गणपाठाः पठितास्सन्ति। कलापव्याकरणे यत्र कुत्रचित् साक्षात् सूत्रकारेण गणपाठनिर्देशो न कृतस्तत्र वृत्तिकारैर्व्याख्याकृद्भिश्च गणनिर्देशः कृतः। यथा-वृत्तिकारेण दुर्गसिंहेन सर्वनामसंज्ञकानां शब्दानां सर्वादिगणे पठितत्वात् 'स्मै सर्वनाम्नः'[५] इति सूत्रेण ङेस्थाने 'स्मै' इत्यादेशो विधीयते। कलापव्याकरणे पठितानां गणपाठानां पाणिनीयव्याकरणे पठितगणपाठैस्सह तुलनाऽत्र क्रियते मया-

१. सर्वादिगणः-कलापकारेण शर्ववर्मणा सर्वादिगणः साक्षान्निर्देशः न कृतः। परन्तु सर्वनामसंज्ञकाल्लिङ्गात् 'ङे' इत्यादेः 'स्मै' इत्यादेशः विहितः। कलापवृत्तिकारेण दुर्गसिंहेन सर्वनामसंज्ञकान् सर्वादिशब्दान् प्रपठ्य सर्वादिगणः निर्धारितः। कलापे सर्वादिगणे सर्व्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, त्व, नेम, सम, सिम, पूर्व्व, अपर, अवर, दक्षिण, उत्तर, पर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, अदस्, इदम्, किम्, एक, द्वि, युष्मद्, अस्मद्, भवत्, एते चतुस्त्रिंशच्छब्दाः पठितास्सन्ति। पाणिनीयव्याकरणे च सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, त्व, नेम, सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्वम्, अन्तरम्, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवत्, किम् एते पञ्चत्रिंशच्छब्दाः पठिताः।

कलापे त्वच्छब्दस्य पाठाभावच्चतुस्त्रिंशच्छब्दास्सन्ति। कलापवृत्तिकारमतेऽन्यार्थकोऽदन्त एवैकस्त्वशब्दो नान्यस्तान्तोऽपि त्वच्छब्दरिति प्रतीयते। स्वरभेदेन पृथक् तान्तपाठस्य लौकिकेऽस्मिन् व्याकरणेऽसम्भवात्। केचिद् अत्रापि तान्तमेव त्वच्छब्दं पठन्तीति टीकाकारवचनाद् विज्ञायते। यथा-'अन्यादेरिति किम् ? त्वं तिष्ठति, त्वं पश्यति। कस्यचिन्मते त्वच्छब्दस्तान्त एव गणे पठ्यते तदा वृच्छब्देनापि किम्? तान्तत्वादन्तर्गणक इव निवारको न चातिक्रम्याऽऽदिशब्दः प्रवर्तते, चरितार्थत्वात्[६], इति। दृश्यन्ते च तान्तस्य त्वच्छब्दस्य प्रयोग गीतगोविन्दकाव्ये यथा-'त्वदधरमधुरमधूनि पिबन्तम्'[७] इति।

कलापे वृच्छब्दस्य द्विवारपठितत्वात् पूर्वादि, अन्यादि एतौ गणद्वयं निर्दिष्टमस्ति। कलापपाणिनीयव्याकरणयोः सर्वादिगणे एकशब्दस्यान्तरं वर्तते। किम् शब्दस्य पाठक्रमे भेदो वर्तते। कलापे किम् शब्दः द्विशब्दात्पूर्वं पठितमस्ति।

२. पूर्वादिगणः-अस्मिन् गणे पूर्व, अपर, अवर, दक्षिण ,उत्तर, पर, अधर, स्व, अन्तर एते नवशब्दास्सन्ति। उक्तञ्च कातन्त्रवृत्तिटीकायाम्-'त्यदः पूर्वो वृच्छब्दः पूर्वादिगणसमाप्त्यर्थम् एव पठ्यते'[८] इति। पाणिनीयव्याकरणे पूर्वादिगणस्योल्लेखः नास्ति। पाणिनीये सर्वादिगणे एव अस्य पाठः क्रियते।

३. स्वस्रादिगणः-कलापव्याकरणे अष्टौ स्वस्रादिशब्दाः वर्तन्ते। ते च यथा-

**स्वस्रा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च।**
**होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादयः स्मृताः।।**

अत्र 'स्वस्रादीनां च'[९] इति सूत्रेण निपातानां स्वस्रादिसंज्ञाशब्दानामृकारस्य अर् आदेशो विधीयते।

पाणिनीये स्वस्रादिगणे सप्तशब्दाः गणिताः। यथा-

**स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।**
**याता मातेति सप्तैते स्वस्रादय उदाहृताः।।**

'न षट्स्वस्रादिभ्यः'[१०] इति सूत्रेण ङीप्प्रत्ययस्य स्वस्रादिशब्दे निषेधः क्रियते।

४. अन्यादिगणः-कलापे अन्य, अन्यतर, इतर, डतर, डतम, एते शब्दाः अन्यादिगणे पठिताः। उक्तञ्च-टीकाकारेण-'अन्यादिरयं सर्वनामान्तर्गणः पञ्चसंख्यापरिच्छिन्न एवावसीयते, तत्र वृत्करणात्। अन्य, अन्यतर, इतर, डतर, डतम[११]' इति।

पाणिनीये डतरादिगणः प्रयुक्तस्तत्र पाठक्रमो यथा-'डतर, डतम, इतर, अन्य, अन्यतर इति। 'अद्ड्डतरादिभ्यः पञ्चभ्यः[१२]' इति सूत्रेण स्वमोरद्डादेशविधानार्थ डतरादिगणः प्रयुक्तः पाणिनीये। गणपाठे वृत्करणाभावात् सूत्रे 'पञ्चभ्यः' इति निर्देशः कृतः पाणिनिना।

५. त्यदादिगणः-कलापव्याकरणे सर्वादिगणेऽन्तर्भूताः त्यद्, तद्, यद्, एतद्, अदस्, इदम्, किम्, एक, द्वि, युष्मद्, अस्मद्, भवन्त एते शब्दाः त्यदादिगणे पठ्यन्ते। त्यदादिशब्दानां 'त्यदादीनामविभक्तौ[१३]' इति सूत्रेण अकारादेशो जायते। पाणिनीयेऽपि त्यदादिगण पठितः। उभयत्र साम्यमेव कार्यं वर्तते।

६. यजादिगणः-कलापे यज्, सृज्, मृज्, राज्, भ्राज्, भ्रस्ज्, व्रश्च्, परिव्राज् एते अष्टौ शब्दाः यजादिगणे पठिताः। एतेषां क्विबन्तानां शब्दानामन्त्यस्य डकारः 'हशषछान्तेजादीनां डः[१४]' इति सूत्रेण भवति। पाणिनीयव्याकरणे तु गणोऽयं न निर्दिष्टः। तत्र महर्षि पाणिनिना एते शब्दाः सूत्रे एव पठिताः। यथा-'व्रश्चभ्रस्जसृजमृजराजभ्राजच्छशां षः[१५]' इति।

७. दृगादिगणः-गणेऽस्मिन् 'दृश्, स्पृश्, मृश्, दधृष, उष्णिह, ऋत्विज्, सृज्, असृज् एते शब्दाः पठिताः। एतेषां शब्दानामन्त्यस्य गकारादेशो विधीयते। पाणिनीये तु दृगादिगणस्य न निर्देशः परिदृश्यते। तत्र केचिच्छब्दाः निपातनात् केचिच्च क्विबादिप्रत्ययविधानात् सिध्यन्ते।

८. मुहादिगणः-मुहादिगणे 'मुह्, द्रह्, ष्णुह्, ष्णिह्, नश्' एते पञ्चशब्दाः पठिताः। उक्तञ्च टीकाकारेण-'मुहादिसमाप्त्यर्थं गणे वृच्छब्दा पठ्यते[१६]' इति। पाणिनीये साक्षात् गणोऽयं न निर्दिष्टः।

९. गर्गादिगणः-कलापे प्रायः गर्गादिगणे शतशब्दाः पठिताः। तदतिरिक्ता केचन शब्दाः अपि सन्निवेशिताः सन्ति। पाणिनीयेऽपि प्रायः शतसंख्यकाः शब्दाः पठिताः। केचिद् पाणिनीये एकोननवतिशब्दाः गर्गादिगणे पठन्ति। गर्गादिशब्दात् कलापे 'ण्यः गर्गादेः[१७]' इति सूत्रेण ण्य प्रत्ययः, पाणिनीये च 'गर्गादिभ्यो यञ्[१८]' इति सूत्रेण यञ् प्रत्ययो विधीयते।

१०. यस्कादिगणः-कलापे यस्कादिगणे शिवादिबाह्वाद्यत्र्यादिगणानां त्रिचत्वारिंशच्छब्दाः पठ्यन्ते। कलापव्याकरणे शिवादिगणः पृथक् न स्वीकृतः। अत्र 'अगस्तिकुण्डिनि' इत्येतौ शब्दौ गणेऽत्र पठ्येते, ततः अगस्त्यशब्दाद् बहुत्वेऽणो लुक् 'गर्गयस्कबिदादीनां च[१९]' इति सूत्रेण क्रियते। पाणिनीये यस्कादिगणे षट्त्रिंशच्छब्दाः पठ्यन्ते। 'अगस्तिकुण्डिनि' इत्येतौ शब्दौ पाणिनिना सूत्रे एव पठितौ स्तः। यथा- 'अगस्त्यकौण्डिन्य-योरगस्तिकुण्डिनच्[२०]' इति।

११. बिदादिगणः-बिदादिगणे व्याकरणयोः एकोनपञ्चाशच्छब्दाः पठितास्सन्ति। बिदादिगणेभ्योऽपत्यप्रत्ययस्य लुग् भवति।

१२. नदादिगणः-नदादिगणविषये कलापव्याकरणे एकवाक्यता नास्ति। वृत्तिकारेण नदादिगणस्थाः शब्दाः न संकलिताः, आकृतिगणत्वात्। टीकाकारेण तु द्विचत्वारिंशदधिकैकशतं शब्दाः संकलिताः। पञ्जीकाकारेण तु 'अण्, एयण्, इकण्, नण्, स्नण्, क्वरष्षडनुबन्धो नदादिरिति वचनादीप्रत्ययः[२१]' इत्युक्त्वा षट्प्रत्ययान्ताः शब्दाः नदादिगणे स्वीकृताः। पाणिनीयव्याकरणे नदादिगणस्य साक्षान्निर्देशो नास्ति। तत्र कतिपय नदादिगणस्थाः शब्दाः गौरादिगणे पठितास्सन्ति। ततः टाप्ङीबादिप्रत्ययाः विधीयन्ते।

१३. कुञ्जादिगणः-कलापव्याकरणे कुञ्जादिगणे द्विसप्तत्यधिकैकशतं शब्दाः पठिताः। पाणिनीये विभागशः ते शब्दाः कुञ्जादिनडादिलौहितादिगणेषु निर्दिष्टाः।

१४. बाह्वादिगणः-कलापे बाह्वादिगणे षट्पञ्चाशच्छब्दाः पठिताः। एतेभ्यः शब्देभ्यो 'बाह्वादेश्च विधीयते[२२]' इति सूत्रेण इण् प्रत्ययो विधीयते तेन बाहविः, औपबाहवि, बिन्दवि, इत्यादय रूपाणि भवन्ति। पाणिनीये बाह्वादिगणे एकोनपञ्चाशच्छब्दाः पठ्यन्ते। एतेभ्यो शब्देभ्यो 'बाह्वादिभ्यश्च[२३]' इति सूत्रेण इञ् प्रत्ययो विधीयते।

१५. गवादिगणः-कलापे एकोनपञ्चाशच्छब्दाः पठिता अत्र। गवादिगणेभ्यो शब्देभ्यो यत् प्रत्ययो विधीयते तेन गोभ्यो हितं गव्यं वनम् इत्यादयः प्रयोगाः सिध्यन्ति। पाणिनीये त्रयोविंशतिः शब्दाः पठिताः। पाणिनीये अपूपादिभ्यो विकल्पेन यत्प्रत्ययस्य विधानायापूपादिगणः पृथक् निर्दिष्टस्तेन त्रयोविंशतिः गवादिगणे पठिताः।

उपर्युक्तानां केचनगणनामवलोकनेन ज्ञायते यत् कलापव्याकरणे यानि गणपाठानि स्वीकृतानि सन्ति तानि प्रायः पाणिनीयव्याकरणपरम्परादेवांगीकृतानि। वस्तुतस्तु कलापव्याकरणस्य गणपाठाः पाणिनीयस्यैवेति। यत्र कुत्रचिद्गणे स्वल्पशब्दाः पठिताः तत्र पुनरेकः गणस्य निर्देशोऽस्ति। कलापव्याकरणस्य गणपाठापेक्षया पाणिनीयव्याकरणस्य गणपाठः स्वीकारे लाघवं प्रतीयते। इति शम्।

## सन्दर्भ-सङ्केत

१. परिभाषेन्दुशेखरः-परिभाषा-१३३
२. पाणिनीयसूत्रम्-१.१.२७
३. पाणिनीयसूत्रम्-५.५.१०७
४. पाणिनीयसूत्रम्-५.४.१२६
५. कलापसूत्रम्-२.१.२५
६. कातन्त्रवृत्तिटीका-२.२.८
७. गीतगोविन्द-६.२
८. कातन्त्रवृत्तिटीका-२.१.२८
९. कलापसूत्रम्-२.१.६६
१०. पाणिनीयसूत्रम्-४.१.१०
११. कातन्त्रवृत्तिटीका-२.२.८
१२. पाणिनीयसूत्रम्-७.१.२५
१३. कलापसूत्रम् - २.३.२६
१४. कलापसूत्रम् - २.३.४६
१५. पाणिनीयसूत्रम्-८.२.३६
१६. कातन्त्रवृत्तिटीका-२.३.४६
१७. कलापसूत्रम्-२.६.२
१८. पाणिनीयसूत्रम्-४.१.१०५
१९. कलापसूत्रम्-२.४.६
२०. पाणिनीयसूत्रम्-२.४.७०
२१. पंजिकाटीका-२.४.५
२२. कलापसूत्रम्-२.६.६
२३. पाणिनीयसूत्रम्-४.१.६६

■ पता : श्रीमातावैष्णो देवी कुरुकुलम्, चरणपादुका, कटडा (जम्मूकश्मीरः)

# षड्दर्शनसमुच्चये प्रतिपादितबौद्ध-सिद्धान्तानां समीक्षा

■ प्रदीप शर्मा लुईटेल

## ग्रन्थ परिचयः

आचार्य-श्रीहरिभद्रसूरिकृत-षड्दर्शनसमुच्चनामक-ग्रन्थोऽयं सप्ताशीति-कारिकाणां सङ्ग्रहो वर्तते। किन्तु स्वकीये बहुमहत्त्वपूर्णस्थानं लभते। प्रकाशित-दर्शनसङ्ग्रहाणामितिहासे सम्भवतः प्राचीनतमोऽयं ग्रन्थः। कतिचिद् वर्षाणि पूर्व-विवचित-दर्शनसङ्ग्रहेष्वयं प्राचीनो दृष्टीगोचरो भवति। सम्भवतः प्रचारपृष्ट्या माधवाचार्यस्य 'सर्वदर्शनसङ्ग्रहः' अस्मादग्रगव्यः स्यात् किन्तु द्वितीयस्थानन्तु अवश्यमेव लभतेऽयं ग्रन्थः।

ग्रन्थस्यास्य रचयिता आचार्य श्रीहरिभद्रसूरि श्वेताम्बर-जैन-सम्प्रदायस्य लब्धकीर्ति आचार्योऽभवत्। सम्प्रदायेऽस्मिन् अस्य नाम्ना बहवः आचार्याः लभन्ते, येषु 'षड्दर्शनसमुच्चस्य' रचयितैव प्राचीनतमस्तथा सर्वाधिको विश्रुतो वर्तते। जैनसम्प्रदायस्य सामान्यपरम्परा नुसारंमस्य परिनिर्वाणं वि.स. ५८५ मध्येऽभवत्। एतदनुसारंमाचार्य श्रीहरिभद्रसूरिमहोदयस्य समय षष्ठशताब्दी सिद्धयति।[1] किन्तु प्रमुखजैनाचार्य स्तथा पुरातात्विकविद्वान् मुनिश्रीजिनविजयेन अस्य समयो विक्रमस्य अष्टम-नवम-शताब्दी निश्चितो वर्तते। अयमेव समय सम्प्रतिरपि मान्यो वर्तते।[2] आचार्योऽयम् अद्भुत-प्रतिभाशाली-ब्राह्मण आसीत्। तथा च चित्रकूटपर्वतस्य-निकटवर्ती 'चित्तौड' नामक नगरराज्ये 'जितारिः' नामक राज्ञः पुरोहितः आसीत्। षड्दर्शनसमुच्चये षट्परिच्छेदाः सन्ति। ग्रन्थेऽस्मिन् षड्दर्शनानां समावेशः कृतो वर्तते। ते सन्ति-बौद्ध-नैयायिक-सांख्य-जैन-वैशिषिक-जैमिनीयदर्शनानि।

## विषयवस्तु

बौद्ध सिद्धान्तानां विषये आचार्य-श्रीहरिभद्रसूरिणा एकादशकारिकाभिः प्रतिपादनं कृतमस्ति।

**दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः।**
**विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च।।**[3]

संसारोऽयं दुःखमयो वर्तते। सर्वे प्राणिनःकीट-पतङ्ग-स्थावर-जङ्गमादयः दुःखमनुभवन्ति। सर्वे सांसारिकं भौतिकं सुखञ्चापि दुःखमयं वर्तते। भौतिक साधनैर्दुःखस्य न कदापि पूर्णरूपेण निवृत्तिर्भवति। तैः केवलं सुखाभासस्तु भवति, किन्तु दुःखप्रवाहो न कदापि शान्तो भवति। यतोहि दुःखस्य निवृत्तिरेव मानवाभीष्टो वर्तते। दुःखमेव जगतः स्कन्ध आधारो वा वर्तते। ते च पञ्चप्रकारकः सन्ति-विज्ञानेन्द्रिय-मन-बुद्धि-चित्त-अहङ्कारैः-र्बाह्याभ्यान्तरविषयाणां स्वरूपाख्यातिः प्रतिनिश्च विज्ञानमुच्यते। इहलोकस्था समस्तपदार्थाः भौतिकास्तथा चैताः सन्ति। बाह्यपदार्थानां संस्कारः चित्ते प्रभूतत्वात् तेनैव तस्य विज्ञानं भवति। विज्ञानमेव बाह्याभ्यान्तररूपेण प्रतीयते। जगदिदं विज्ञानमयं वर्तते, विज्ञानादतिरिक्तं किमपि नास्ति। एतदेव आत्मख्यातिरुच्यते।

द्वितीयोऽस्ति-वेदना, यस्यानुवो जायते सैव वेदना। पूर्वजन्मनः पाप-पुण्ययोः फलस्वरूपं यत् सुखं दुःखञ्च भवतः, सैव वेदना। ज्ञानेन्द्रिय-कर्मेन्द्रिय-मनोद्भिर्यस्य भौतिकपदार्थानामनुद्भवो जायते सैव वेदना तथा सुख-दुःख-हर्ष-सन्तापादयोः 'वेदना' इति नाम्ना निगद्यन्ते। शुभ-कर्मभिः स्वर्गारिक-सुख-प्राप्ति ओगश्च, पापकर्मदिम नरकादिक-दुःखभोग-इष्टानिष्टसाधनैरूत्पन्नानुभूतयः 'वेदना' एव कथ्यन्ते।

मार्गस्य अथवा वासनायाः निरोध एव 'मोक्षः'। पूर्वजन्मनः सर्वसंस्काराः, षां वासना, चित्तवृत्तिभिर्बाह्य-सांसारिक-वृत्तिः अवरूध्य आन्तरप्रत्यक्ष-करणं तस्मिन्नेव शून्यत्वं तथा शाएवतानन्दानुभूतिरेव 'मोक्षः- इति नाम्ना अभिज्ञायते।

चतुरार्यसत्यविषये प्रतिपादयति आचार्यः-दुःखमस्ति, दुःखस्य कारणमस्ति, दुःखनिरोधो वर्तते, दुःख निरोध ास्य मार्गो वर्तते।

निगद्यते 'सर्व जगादिदं दुःखमयम्' अर्थात् अयं खलु संसार दुःखमयः। तस्य मूलकारणं वासनैव वर्त्तते। वासनाकारणादेव मनुष्यो दुःखी भवति। एतासां वासनानां वर्धनादवरोधनमेव 'निरोधः' इति नाम्ना ज्ञायते। दुःख निरोधाय आचार्यष्टाङ्गिकमार्गान् पालयन् तस्य अभ्यासेनैव दुःखनिरोधो जायते।

रचनाकारः द्वादशायतनविषये सम्बोधयति-

> **'पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्।**
> **धर्मायतनमेतानि द्वादशायतनानि च।।**[४]

दुःखसमुदयोराश्रय एव आयतनमिति परिज्ञायते। यो दुःखसमुदयोरायतनमस्ति तदेव मार्ग-निरोधयोरपि वर्तते। एतेष्वेवायतनेषु सांसारिकानुभूतया आश्रिताः सन्ति। पञ्चज्ञानेन्द्रियाणि, शब्दादिपञ्चविषयाः, चित्तधर्मायतनं धर्मस्थलं वा चैत्यादयोऽथवा शरीरमेतानिद्वादश तथा (जाति-जरा-मरण-भव-उपादान-तृष्णा-वेदना-स्पर्श-नाम-रूप-विज्ञान-संस्कारः) एते द्वादशायतनानि सन्ति।

## आचार्यः प्रमाणं प्रतिपारयति

> **प्रमाणे च विज्ञेये तथा सौगतदर्शने।**
> **प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः।।**[५]

बौद्ध-दर्शने प्रमाणद्वयमेव वर्तते। प्रत्यक्षानुमानम्, यतोहि निश्चितज्ञानं द्विप्रकारकमेव भवति। किं प्रमाणं प्रत्यक्षं भवति ? किञ्च प्रमाणमनुमानं भवति ? प्रश्नोऽयं समुपस्थाप्यते। उत्तरमस्ति.......यन्नामजात्यारिकल्पनाभिः रहितं निर्विकल्पकमेवं भ्रान्तिरहितज्ञानं वर्तते तदेव प्रत्यक्षं भवति।

त्रिरूपहेतुश्यश्च साध्यज्ञानमेव अनुमानं भवति। षड्दर्शनसमुच्चये प्रतिपादितेषु बौद्ध-नैयायिक-सांख्य-जैन -वैशेषिक-जैमिनीयदर्शनेषु, बौद्धदर्शने दुःखादि चतुरार्यसत्यानां निरूपणकर्ता 'बुद्धः' एव देवतुल्यं वर्तते। प्रतिक्षणं परिणामी स्कन्ध दुःखानि सन्ति।

जगतितले येन रागादीनां सम्पूर्णसमूह उत्पद्यते, तदेव अहम् 'मम' इत्यादितत्त्वं समुदयनाम्ना मठयते। सर्वा ज्ञानधाराः क्षणस्थापितः सन्ति। एतादृशी या भावना वर्तते सैव मध्यमार्गः दुःखनिरोध-गामिनी प्रतिपद् अथवा 'आर्याष्टाङ्गिकमार्गः' इति निगद्यते।

ग्रन्थेऽस्मिन् बौद्ध दर्शनस्य केवलमेकादश कारिकाः सन्ति, एतास्वेव बौद्धदर्शनं प्रतिपादितमस्ति।

**षड्दर्शनसमुच्चयस्य टीकानां वैशिष्ट्यम्**-दर्शनसङ्ग्रहेषु आचार्य-श्री हरिभद्रसूरिकृत-'षड्दर्शनसमुच्चयः' इति ग्रन्थस्यैव अनेक टीकाकाराः सम्प्राप्ताः। यद्यपि ग्रन्थोऽयं दुरूह्ये नास्ति नासीद्वा, अस्मिंश्च प्रदत्तसामग्यपि श्री राजशेखरसूरेः ग्रन्थ-तुलनायान्तु न्यूनमेव वर्तते तथापि श्रीराजशेखरानन्तर-जातेन आचार्य-श्रीगुणरत्नेनापि अस्मिन् स्वकीय साख्या विलिखिता वर्तते।

जऽचेतनात्मक-संसारीय-व्यवहारो नाम च संज्ञा वर्तते, या तृतीय-स्कन्धोऽपि वर्तते। कस्यचित् पदार्थस्य नाम-लक्षण-व्यवहाराः संज्ञेति नाम्ना निगद्यन्ते। विज्ञानवेदनाभ्यां संज्ञायारूत्पत्तिर्जायते।

चतुर्थस्कन्धो भवति संस्कारः। विज्ञान-वेदना-संज्ञानां स्वरूपं प्रतिबिम्बं वा स्मृतिरूपेण यदा चित्ते, अधिास्थीयते। तदेव 'संस्कारः' कथ्यते। संस्कार-समूह एव धनीभूतत्त्वात् वासना भवति। या चतुर्थस्कन्धो वर्तते। सम्पूर्णजगदिदं परणो आरभ्य परममहत्तत्वं पञ्चभूतात्मकतत्त्वपर्यन्तं वा रूपमयं वर्तते। अन्तिमरूपेण पञ्चज्ञानेन्द्रियैर्यत्प्रत्यक्षं जायते तद् रूपमयं वर्तते। दुःखमयजगदोदय एतेष्वेव विज्ञान-वेदना-संज्ञा-संस्कार-रूपात्मक-पञ्चस्कन्धेषु चक्रवत् भ्रमति।

## क्षणिकवादं प्रतिपादयति आचार्यः

**क्षणिकाःसर्वसंस्कारा इत्येवं वासना तु या।**
**स मार्ग इति विज्ञेयो निरोथो मोक्ष उच्यते।।**[६]

लोकस्य सर्वे चराचरपदार्थाः पृथ्वी-जल-तेजादि-उपादान-घट-पट-गृह-नदी-सागर-शैल-वनादि पदार्थानां सत्ता आवश्च क्षणिकौ वर्तते। तेषां सर्वे संस्कारा-ज्ञान-सत्ता-स्थितयः विनाशवन्तः परिवर्तशीलाश्च वर्तन्ते। प्रत्येक क्षणे सर्वेषां सत्तासंस्कारयोः परिवर्तनं जायते। निरन्तरपरिवर्तनशीलः यः संस्कारो वर्तते स एव 'मार्गः' इति शबदेन निगद्यते। जन्ममरणयोः कारणमपि स एव वर्तते। भववासनैव उत्पत्तेमूलकारणं वर्तते। यद्यपि सर्वे संस्काराः क्षणिकाः सन्ति किन्त तेम्यो जाता या वासना वर्तते स एव मार्गो वर्तते। यदि वासना न भवति चेत् जन्म न भवेत् यदि जन्म न अवेच्चेत् दुःखमेव न भवेत्। अतः दुःखस्य मूलकारणं वासनैव वर्तते।

अस्मिन्नेव क्रमेः श्रीमणिभद्रस्यापि नाम बहु श्रूयते। स एक प्रतिभाशाली जैन आचार्य आसीत्। एतस्य जीवनवृत्यादिविषयेषु निश्चितरूपेण किमपि वक्तुं न पार्यते अस्माभिः।

षड्दर्शनसमुच्चये विलिखिता एतस्य टीका वर्तते 'लघुवृत्तिः'। सम्भवतः ग्रन्थस्यास्य प्राचीनतमा टीका वर्तते। टीकेयं सर्वप्रथमं काश्या एव चौखम्बा संस्कृत-सीरीजतः ईस्वी सन् १९०५, १९२१, १९५७ मध्ये श्री दामोदरलाल गोस्वामिना संशोधनं कृत्वा प्रकाशिता आसीत्।[७] अधुना रूपेऽस्मिन् प्रकाश्यते।

**विद्यातिकलस्तस्य च वृत्ति**-आचार्य-श्रीहरिभद्रसूरिकृत षड्दर्शनसमुच्चयस्य तृतीया महत्वपूर्ण टीका 'विवृत्तिः' वर्तते। अस्या रचयिता आचार्य श्रीविद्यातिलको वर्तते। यः सोमतिलकः' इति नाम्नपि ज्ञायते। अस्योपनामादीनां ज्ञानन्तु अस्य विवृत्तेः पुष्पकयैव जायते। आचार्य श्री हरिभद्रसूरिसूरेः केनचिच्छिष्येण 'अवचूरिः' इति नाम्ना टीका विलिखिता। किन्तु सा दृष्टिगोचरा न जाता।[८] षड्जैनाचारैरेकस्मिन् लघुग्रन्थे विस्तृतटीका विलिखिता एतेन आचार्य श्रीहरिभद्रसूरि प्रति तस्य श्रद्धा कियन्ती अस्ति, इति अस्माभिः सम्यक् ज्ञातुं शक्यते। एवं कृते सति परवर्तिनां प्रेरणायारेतत् मूलकारणं भविष्यति।

## समीक्षाः-

आचार्यश्रीहरिभद्रसूरिणा ग्रन्थेऽस्मिन् दुःखतत्त्वनिरूपणादारण्य बौद्धेः कति प्रमाणानि मन्यन्ते, अस्यापि सम्यक् प्रतिपादनं कृतमस्ति। सर्वप्रथमं दुःखानि निरूप्यमान श्चतुरार्यसत्यानि कानि सन्ति ? एतेषां निरोधः कथं भवितुमर्हति ? तैरेव साकं पञ्चस्कन्धा प्रतिपादिताः, एतेष्वेव पञ्चस्कन्धेषु दुःखानि स्वीयन्ते।

एदनन्तरं लोकेऽस्मिन् यावन्तः कीट-पतङ्गः-स्थावर-जङ्गमादयः सन्ति एते सर्वेपि दुःखमनुभवन्ति। तथा च संसारे यानि वस्तूनि विद्यन्ते, तानि सर्वाण्येव क्षणिकानि। एतसिमन्निवृत्तिरर्थात् निरोध एव 'मार्गः' इति शब्देन व्यवह्रीयते। यो मार्गोऽस्माभिरार्याष्टाङ्गिकमार्गः इति नाम्नापि पदिज्ञायते। स्पष्टीक्रियते यत् जगतितले यस्मात् सम्पूर्णरागादीनां समूह समुपजायते तादृशमहम्, 'मम' इत्यादिस्वरूपतत्त्वं 'समुदयः' इति नाम्ना ज्ञायते।

द्वादशायतनमपि स्पष्टीक्रियते। पञ्चज्ञानेन्द्रियाणि, शब्दादिपञ्चविषयाः, मनः अर्थात् चित्तम्, धर्मायतनमर्थात् धर्मस्थलमित्यारीनि द्वादशायतनमुच्यते।

**प्रमाणं स्पष्टीक्रियते**-प्रमाणं द्विप्रकारकं भवति। प्रत्यक्षानुमान् सम्यज्ज्ञानाय प्रत्यक्षानुमाने एते द्वावेव प्रमाणे आवश्यके वर्तते। यत् कल्पनाभ्रान्तिभ्यां रहितज्ञानं भवति, तदेव प्रत्यक्षप्रमाणमुच्यते। यच्च त्रिरूपहेतुभ्य सिद्धयति तदेव अनुमानप्रमाणमुच्यते। अस्य च रूपत्रयमस्ति-पक्ष-सपक्ष-विपक्षाः।

## उपसंहार-

केवलमष्टाशीतिकारिकासु निवद्धोऽयं ग्रन्थो लघुत्वादीपः जैनविदुषा श्रीहरिभद्रसूरिणा विरचितोऽयम् अतिमहत्वपूर्णसङ्ग्रहग्रन्थो वर्तते। य अद्यावधि प्रकाशित-दर्शनसङ्ग्रहग्रन्थेषु ऐतिहासिकरूपेण सर्वप्राचीनो वर्तते। ग्रन्थेऽस्मिन् आचार्य-श्रीहरिभद्रसूरेः विषय-प्रतिपादन-शैली, विषय-स्पष्टता, अल्पमतियुक्तजिज्ञासूनाङ्कृते सरलता-बोध गम्यआषाभिः अभिभूतत्वात् आचार्यश्रीराजशेखरः सूरिणा स्वरचितषड्दर्शनसमुच्चयेऽस्य सप्ताशीति- कारिकासु चतुस्त्रिंशत् कारिकास्कुत्रचित् पूर्णतः कुत्रचिच्चांशतः सम्मिलितो वर्तते।

यत्र च निरूपणं कृतमस्ति। ताः प्रति तस्य स्वकीय पूर्णनिष्ठा प्रदर्शिता वर्तते। तस्य कतिपय कीरिकाणां शब्दा अपि तद्-तद् आचार्यैः कथितशब्दैः साकं सर्वाशतः अंशतो वा साम्यता गृहीता वर्तते। यथा-प्रत्यक्षलक्षणं निरूपणकर्त्री षड्दर्शनसमुच्चस्य दशमकारिका- ''प्रत्यक्षं कल्पनापोढमभ्रान्तं तत्र बुध्यताम्'' बौद्धदर्शनस्याचार्य दिङ्नागकृत प्रमाणसमुच्चये -''प्रत्यक्ष कल्पनापोढं नामजात्यादिसंयुतम्'' इत्यनेन साकमत्यधिक-साम्यता गृह्यते।[९]

## सन्दर्भ-विवरणमेवमाधारग्रन्थाः


| ग्रन्थः | प्रकाशकः | सन् | संस्करणम् | लेखकः/संम्पादकः |
|---|---|---|---|---|
| षड्दर्शनसमुच्चयः | चौखम्बा | १६७६ई. | चतुर्थम् | डॉ. कामेश्वरनाथ मिश्र<br>अमर भारतीय<br>प्रकाशन, वाराणसी |
| षड्दर्शनसमुच्चयः | भारतीय ज्ञानपीठ | १६६४ ई. | प्रथमम्<br>प्रकाशन, वाराणसी | डॉ. हीरालाल जैन |
| षड्दर्शनसमुच्चयः | भारतीय ज्ञानपीठ | १६६४ ई. | प्रथमम्<br>प्रकाशन, वाराणसी | डॉ. हीरालाल जैन |
| षड्दर्शनसमुच्चयः | भारतीय ज्ञानपीठ | १६६४ ई. | प्रथमम्<br>प्रकाशन, वाराणसी | डॉ. हीरालाल जैन |
| षड्दर्शनसमुच्चयः | भारतीय ज्ञानपीठ | १६६४ ई. | प्रथमम्<br>प्रकाशन, वाराणसी | डॉ. हीरालाल जैन |
| षड्दर्शनसमुच्चयः | भारतीय ज्ञानपीठ | १६६४ ई. | प्रथमम्<br>प्रकाशन, वाराणसी | डॉ. हीरालाल जैन |
| षड्दर्शनसमुच्चयः | चौखम्बा अमरभारती | १६७६ ई. | चतुर्थम्<br>प्रकाशन, वाराणसी | डॉ. कामेश्वरनाथ मिश्र |
| षड्दर्शनसमुच्चयः | चौखम्बा अमरभारती | १६७६ ई. | चतुर्थम्<br>प्रकाशन, वाराणसी | डॉ. कामेश्वरनाथ मिश्र |
| षड्दर्शनसमुच्चयः | चौखम्बा अमरभारती | १६७६ ई. | चतुर्थम् | डॉ. कामेश्वरनाथ मिश्र<br>प्रकाशन, वाराणसी |


■ पता : कनिष्ठ शोध अध्येता (पालि) राष्ट्रिय संस्कृत संस्थान, लखनऊ परिसर, लखनऊ

# निर्दिश्यमानस्यादेशा भवन्तीति परिभाषाया अन्यथासिद्धिः

■ विष्णुकान्त पाण्डेय

ननु प्रणिदापयतीत्यादौ 'दाधा ध्वदाप्'[1] र्न स्यादत उच्यते 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'[2] परिभाषेति। यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यते इति परिभाषार्थः। एवं प्रणिदापयतीत्यत्र 'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुग्णौ'[3] इति सूत्रेण विहितः पुगागमो दाधातुमुद्दिश्य विहितः। अतः पुगागमो दाधातोरवयवीभूतस्तेन दाग्रहणेन दायो ग्रहणं भवति। अतः घुसंज्ञात्वात् 'नेर्गदनदपत'[4] इति सूत्रेण णत्वं सिद्धं भवति।

एवम् 'उद्+अस्थात्' इत्यत्र 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषया अकार विशिष्ट्स्य स्थाग्रहणेन ग्रहणात् 'उदः स्थास्तम्भोः[5] पूर्वस्य' इति सूत्रेण पूर्वसवर्णः प्राप्तः, स मा भूदित्येतदर्थं परिभाषा स्वीक्रियते 'निर्दिश्य मानस्यादेशा भवन्तीति[6]'। षष्ठी प्रकृति जन्य प्राथमिको पस्थितिविषयत्वं निर्दिश्यमानत्वम्।

'षष्ठी स्थानेयोगा'[7] इति सूत्रमावर्तते। तत्र द्वितीयसूत्रस्यायमर्थः-षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिष्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते न तु प्रतीयमानमित्यर्थस्तेन निर्दिश्यमानस्योदशा भवन्ती तीदं सिद्धं भवति।

'उद् अस्थात्' इत्यत्र 'अस्थात्' इति निर्दिश्यमानं नास्ति द्वितीयोपस्थितेः। अर्थात् यदा 'यदागमास्तद्गुणीभूतस्तद्ग्रहणेन गृह्यन्ते' इति परिभाषा प्रवर्तते तदा स्थापदेन 'अस्था' इत्यस्य ग्रहणं भवति। प्रथमं तु स्थापदेन 'स्था' इत्यस्यैव ग्रहणं भवति प्राथमिकोपस्थितिकत्वात्। तेन उत्थानमित्यादिवत् यत्र 'स्था' इति वर्तते, तत्रैव पूर्वसवर्णो न तु उदस्थादित्यादौ। एवभनया परिभाषया निर्जरसावित्यादौ जराशब्दस्यैव जरस्। जराशब्द एव ह्यत्र प्राथमिकोपस्थितिविषयत्वेन प्रत्यक्षनिर्दिष्टः। जराशब्दान्तस्य (निर्जर इत्यस्य) तु निर्देशस्तदन्तविधिलभ्यत्वाद् आनुमानिक इति भावः।

अनया[7] परिभाषया येन[8] विधिस्तदन्तस्य' इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं 'यदागभाः' इति लब्धास्य च। तेन सुपद इत्यत्र पाच्छब्दान्तस्य विधीयमानोऽपि पदादेशः प्रकृतपरिभाषया पाच्छब्दस्यैव सर्वादेशो भवति न तु तदन्तस्येति। एवमुदस्थादित्यत्र पूर्वसवर्णो न भवति।

ननु निर्दिश्यमानपरिभाषास्वीकारे अस्य च्वौ[9] इत्यादौ दीर्घाणाम् (मालीभवतीत्यादौ) आदेशानापत्तिः, तेषां निर्दिश्यमानत्वाभावादिति चेन्न, जातिपक्षे दोषाभावात्। व्यक्तिपक्षेऽपि 'न भूसुधियोः'[10] इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः।

वस्तुतस्तु 'निर्दिश्य[11]मानस्यादेशा भवन्ति' इति परिभाषा न कर्तव्या, 'यतो हि महाभाष्यकारेण भगवता पतञ्जलिना षष्ठी स्थानेयोगा'[12] इति सूत्रे विलिखितं यत् 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येषा परिभाषा न कर्तव्या भवतीति।

तथा हि-षष्ठी स्थानेयोगेति सूत्रस्य प्रत्याख्यानायाऽऽह महाभाष्यकारः-'ननु[13] चोक्तम् एकशतं षष्ठ्यर्थाः,

यावन्तो वा ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति। इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम्। एवमर्थं षष्ठी स्थानेयोगा इतीदं सूत्रमुच्यत इति। नैष दोषः=अर्थात् सूत्राभावेऽपि न दोषः। यद्यपि लोके बहवोऽभिसम्बन्धाः-आर्था यौना मौखाः स्रौवाश्च। शब्दस्य तु शब्देन सह कोऽन्योऽभिसम्बन्धो भवितुमर्हति-अन्यदतः स्थानात्। अर्थात् शब्दस्य शब्देन सह स्थान्यादेशाभाव एवं सम्बन्धो भवितुमर्हति। तेन अस्तेः स्थाने भू र्भविष्यति'' सूत्रं न कर्तव्यमिति भावः।

एतदनन्तरं महाभाष्यकारेण सूत्रस्य समर्थनायोक्तं यत् शब्दस्यापि शब्देनानन्तरादयोऽभिसम्बन्धाः। अस्तेर्भूर्भवतीति सन्देहः-स्थानेऽनन्तरे समीपे वेति। अर्थात् यतो हि शब्दस्य शब्देन सह अनन्तरादयोऽपि सम्बन्धा भवितुमर्हन्ति। अतः अस्तेनन्तरः समीपे वा 'भू' इत्यादेशो मा भूदित्येवमर्थ षष्ठी स्थानेयोगा' इति सूत्रं कर्तव्यम्।

एतदनन्तरं पुनः सूत्रस्य प्रत्याख्याना भगवता पतञ्जलिना प्रतिपादितं यत् अस्तेः स्थानेऽनन्तरे समीपे वा भूरिति ''सन्देहमा[१४]त्रमेतद् भवति। सर्वसन्देहेषु चेदमुपतिष्ठते-'व्याख्यानतो विशेष-प्रतिपत्तिर्नहि सन्देहादलक्षणम्[१५] इति स्थाने इति व्याख्यास्यामः। इत्थं महाभाष्यकारेण पुनः जिज्ञास्यते यत् 'न[१६]तर्हीदानीभयं योगो वक्तव्य इति। अर्थात् सूत्रस्य प्रत्याख्याने जाते सूत्रं न कर्तव्यमिति। एतदनन्तरं तेनोक्तं यत् ''सूत्रं[१७] कर्तव्यम्। किं प्रयोजनम्, षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता।''

अयं भावः-यतः 'षष्ठी[१८]' सैव स्थानेयोगेति सूत्रार्थेन 'पादः[१९] पदि''त्यस्यायमर्थः-पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दस्तस्य स्थाने पदादेशः स्यादिति। इत्थं सुस्पष्टं यत् षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयभानमिति सूत्रार्थेनैव परिभाषा गतार्था 'सा[२०]' न कर्तव्येति भावः।

अत एव महाभाष्यकारेण 'षष्ठी स्थानेयोगा' इति सूत्रस्य भाष्ये लिखितम् 'षष्ठी स्थानेयोगा' इति सूत्रस्य 'षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता' इत्यर्थस्वीकारेण 'निर्दिश्यमानस्यादेशा भवन्ति इत्येषा परिभाषा[२१] न कर्तव्या भवति।'

अयं भावः-भगवता पाणिनिना 'षष्ठी स्थानेयोगेति सूत्रं कृतम्। निर्दिश्यमान परिभाषाया योऽर्थः तमर्थं स्थानेयोगेति सूत्रस्यापि स्वीकृत्य परिभाषाया अन्यथासिद्धिरेव महाभाष्यकारेण सूचिता। अत एव सूत्रपरिभाषयोर्मध्ये लाघवात् सूत्रमेव कर्तव्यं भवतीति सङ्गच्छते।

भूतिकारेण तात्याशास्त्रिमहोदयेन तु निर्दिश्यमान परिभाषायाः खण्डनं कृतम्। परिभाषाखण्डनप्रकारविशेषो हि-''केचित्तु-[२२]उदः स्थेति सूत्रे सकारं प्रश्लिष्य सकाराद्योः स्थास्तम्भोरित्यर्थेन उदस्थादित्यादौ न दोषः। 'जराया' इत्यादिसूत्रेषु अल्पाक्षरबोधकपदस्यैव स्थानषष्ठ्यन्तत्वम्, इतरेषामवयवार्थक षष्ठ्यन्तत्वम्। तथा चाङ्गावयवजराशब्दस्य स्थान इति वैयधिकारण्येनान्वयान्न निर्जरशब्दे दोषः। नापि 'अतिस्य' इत्य, तत्रास्तेस्तकारस्य त्य द्यवयवत्वाभावात्। अपिवदित्यत्र यदागमपरिभाषाया अनित्यत्वान्न अपाशब्दस्य पाशब्दत्वाभावात् पिबादेशः।' भूतिकारस्य खण्डनमिदं न समीचीनं 'उदः स्थास्तम्भोः' इत्यादेरूक्तार्थकल्पने मानाभावात्। परिभाषाया अन्यथासिद्धत्वात् भाष्यविरूद्धत्वाच्च।

अयं भावः-महाभाष्यकारेण निर्दिश्यमान परिभाषायाः खण्डनं न कृतम् अपितु परिभाषाया अन्यथा (अन्येन प्रकारेण) सिद्धिः कृता। अर्थात् 'षष्ठी स्थानेयोगा' इति सूत्रमङ्गीकृत्य निर्दिश्यमानस्यादेशा भवन्तीति परिभाषाया

योऽर्थः सोऽर्थ एव स्थानेयोगेति सूत्रस्य प्रतिपाद्य 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषा न कर्तव्या भवतीत्युक्तम्। एतेन परिभाषाया अन्यथासिद्धिरेव सूच्यते न तु खण्डनम्।

न च 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येषा परिभाषा न कर्तव्या भवतीति महाभाष्यकारकथनेन खण्डनमेव बोध्यत इति वाच्यम्, तथा सति षष्ठी स्थानेयोगेति सूत्रस्यैव खण्डनं स्यात्। किन्तु महाभाष्यकारेण 'न[२३]र्तर्हिदानीमयं योगो वक्तव्यः। वक्तव्यश्च किं प्रयोजनम् ? षष्ठ्यन्तं स्थानेन यथा युजत्येत यतः षष्ठ्युच्चारिता' इत्युक्त्वा 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यर्थकस्य षष्ठी स्थानेयोगेति सूत्रस्य समर्थनमेव कृतम्। अत एव कैयटेनोक्तम्-''अस्यैव[२४] सूत्रस्यषष्ठी स्थानेयोगोति सूत्रस्य निर्दिश्यमानस्यादेशा भवन्तीत्ययमर्थः। षष्ठीति षष्ठ्यन्तं गृह्यन्ते। तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते न तु प्रतीयमानमित्यर्थः।'' इत्थं सुस्पष्टं यत् महाभाष्यकारस्य अन्यथासिद्धौ तात्पर्यं न तु खण्डने। अत एव 'हयवरट्' मा.सू.५ इति सूत्रे भाष्ये महाभाष्यकारेण। ''अयोग[२५]वाहानामुपदेशेऽलोऽन्त्यविधिः प्रयोजनम्। वृक्षस्तत्र, नैतदस्ति प्रयोजनम्। निर्दिश्यमानस्यादेशा भवन्तीति विसर्जनीयस्यैव भविष्यतीति'' विलिखितम्। अत्र निर्दिश्यमानस्यादेशा भवन्तीत्यस्य निर्दिश्यमानस्यादेशा भवन्तीत्यर्थकेन षष्ठी स्थानेयोगेति सूत्रेण विसर्जनीयस्यैव भविष्यतीत्यर्थो वर्तते।

इत्थं सुस्पष्टं यत् निर्दिश्यमानस्यादेशा भवन्तीति परिभाषा न कर्तव्या। 'षष्ठी स्थाने योगा' इति सूत्रेणैव परिभाषायाः गतार्थत्वादिति दिक्।

## सन्दर्भ


१. पा.सू. १-१-२०

२. परिभाषेन्दुशेखरे प. ११

३. पा.सू. ७-३-३६

४. पा.सू. ८-४-१७

५. पा.सू. ८-४-६१

६. परिभाषेन्दुशेखरे प. १२

७. पा.सू. १-१-४६

८. निर्दिश्यमानस्यादेशा भवन्ति प.

९. पा.सू. १-१-७२

१०. पा.सू. ७-४-३२

११. पा.सू. ६-४-८५

१२. परिभाषेन्दुशेखरे प. १२

१३. पा.सू. १-१-४६

१४. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे भाष्ये।

१५. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे भाष्ये।

१६. परिभाषेन्दुशेखरे प. १

१७. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे भाष्ये।

१८. 'षष्ठी स्थानेयोगा' इति सूत्रं न कर्तव्यम्।

१९. अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा। तेन अव्यव षष्ठ्यादिष्वतिप्रसङ्गो न भवति। अर्थात् 'शास इदङ्हलोः'' ऊदुवधाया गोहः' इत्यादौ दोषो न भवति।

२०. पा. सू. ६-४-१३०

२१. निर्दिश्यमानस्यादेशा भवन्ति (प. १२) इति परिभाषा न कर्तव्या।

२२. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे भाष्ये।

२३. 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषा भूति टीकायां भूतिकारस्य खण्डनमिदं समागतम्।

२४. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे भाष्ये।

२५. षष्ठी स्थानेयोगा (पा.सू. १-१-४६) इति सूत्रे प्रदीपे।

२६. हयवरट् (मा.सू.५) इत्यत्र भाष्ये अयोगवाहानामट्सु शर्षुचोपदेशः कर्तव्य इति प्रथमः पक्षः। तथा च अयोगवाहानां अविशेषेण (सामान्येन) अल्प्रत्याहारे उपदेशः कर्तव्य इति द्वितीयः पक्षोऽपि समागतः। उक्तं हि महाभाष्यकारेण 'अविशेषेण संयोगोपधासंज्ञाऽलोऽन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधा इति। तत्र अलोऽन्त्यविधिश्च प्रयोजनमित्यस्या यमाशयः-'वृक्षः तरति' प्लक्षः तरतीत्यत्र ''विसर्जनीयस्य सः'' (८.३.३४) इति सूत्रेण विसर्गस्य स्थाने सत्वे कृते 'वृक्षस्तति ''प्लक्षस्तरतीति' रूपस्य सिद्धिर्भवति। 'विसर्जनीयस्य सः' इति सूत्रस्य 'पदस्य' (पा.सू.८-१-१६) इति सूत्राधिकारान्तर्गतत्वेन 'पदाङ्गधिकारे तस्य च तदन्तस्य च' (प. ३०) इति परिभाषया विसर्जनीयान्तस्य स इत्यर्थस्वीकारात् सम्पूर्णस्य पदस्य स्थाने सकारादेशे प्राप्ते विसर्गरूपायोगवाहस्य सामान्येन अल्प्रत्याहारे उपदेशत्वात् 'अलोऽन्त्यस्य' (पा.सू. १.१.५२) इति सूत्रेण विसर्गस्यैव स्थाने सकारादेशो भवति। न तु सकारान्तस्य पदस्य। अतोऽयो गवाहानां सामान्येन=अविशेषेणोपदेशःकर्तव्य इति महाभाष्यकारेण प्रतिपादितम्। एतदनन्तरम्-तेनोक्तं यदलोऽन्त्य-विधिः प्रयोजनं नास्ति निर्दिश्यमानस्यादेशा भवन्तीत्यनेनैव विसर्गस्य भविष्यति। निर्दिश्यमानस्यादेशा भवन्तीत्यर्थकेन 'षष्ठी स्थानेयोगा' (पा. सू. १.१.४९) इति वचनेन विसर्गस्य भविष्यतीति भाष्याशयः।

■ पता : उपाचार्य, (व्याकरण विभाग), राष्ट्रिय संस्कृत संस्थान जयपुर परिसर, जयपुर

# शिल्प सौन्दर्य की दृष्टि से लक्षदास कृत 'कृष्णरससागर'

■ राजेश कुमार शुक्ल

कृष्णकाव्य का प्रचुर साहित्य ब्रज भाषा प्रधान है, किन्तु भाषा भावों की वाहिका होने के नाते अभिव्यक्ति की स्वतन्त्रता चाहती है, वह किसी कटघरे में बँधना नहीं चाहती। शायद इसीलिए लक्षदास जी ने अपने 'कृष्णसागर' ग्रन्थ को शिल्प सौन्दर्य की दृष्टि से नवीनता दी और परम्परा से हटकर अवधी भाषा में कृष्ण काव्य का प्रणयन किया। यद्यपि इससे पूर्व कृष्णकाव्य से सम्बन्धित कई ग्रन्थों का सृजन अवधी भाषा में हो चुका था। कुछ प्रमुख ग्रन्थों में मलिक मुहम्मद जायसी कृत 'कान्हावत' जो अवधी कृष्ण काव्य परम्परा का प्रथम प्रबन्धात्मक ग्रन्थ है। इसमें जायसी ने अवतारवाद पर आस्था प्रकट करते हुए कृष्ण को विष्णु के अवतार के रूप में चित्रित किया है।[1] इसके बाद लालच दास का 'हरिचरित' दोहा चौपाई शैली में रचित एक प्रबन्ध काव्य है। माधव कवि रचित 'विनोदसागर' में भी कृष्ण की लीलाओं का वर्णन है। चरनदास कृत 'ब्रजचरित' एवं 'ब्रजवासीदास कृत 'ब्रजविलास' इसी कोटि की रचनाएँ हैं।

लक्षदास कृत 'कृष्णरससागर' अवधी भाषा में रचित एक महान ग्रन्थ है। जिसमें कृष्ण की सभी लीलाओं का वर्णन है, जिसका मूल उत्स श्रीमद्भागवत है। शिल्प सौन्दर्य की दृष्टि से यह ग्रन्थ अनुपम है।

लक्षदास जन कवि थे कृष्ण के सम्पूर्ण चरित का वर्णन उनका प्रतिपाद्य था किन्तु भाषा के स्तर पर उन्होंने कोई समझौता नहीं किया भाव के अनुकूल भाषा का प्रयोग उनका वैशिष्ट्य है। उनकी शब्द सम्पदा किसी एक भाषा की मोहताज नहीं है। भाषा वैविध्य जन कवियों का स्वभाव है अतः उनकी रचना में भाषा की विविधता दृष्टिगत है। यथा-तत्सम् शब्दों में-कर्म, द्विज, मृग, पय, कंत, नृप, अमृत आदि शब्दों का सहज प्रयोग हुआ है। अर्धतत्सम शब्दों के अन्तर्गत-कीरति, दरसन, मारग, रितु, करमठ, धरम आदि शब्दों का व्यवहार हुआ है। तद्भव शब्दों में-दूध, हाथ, काज, छाँही, मोती, लाज, कन्हैया आदि शब्द प्रमुख हैं। देशज शब्दों में-झगरत, तुतराता, रोटी, झलकत, हरानी आदि। विदेशी शब्दों के अन्तर्गत अरबी शब्दों में-लायक, मुरीद, महल। फारसी शब्दों में-सरम, पीर, बंदी आदि शब्द दृष्टिगत हैं। हिन्दी की प्रमुख बोलियों के शब्दों में यथा अवधी में-पॉउ, गॉउ, हमार, मारत, ब्रजभाषा के शब्दों में-नारिन, सोरहो, नेवतो, नीको, बिकानों भोजपुरी शब्दों में-नथुनिया, दुलहिया, रावरे, खड़ी बोली के शब्दों में-वह, किया, तेरे, आये, हमारा आदि विशेष है। कुछ उदाहरण इस प्रकार देखे जा सकते हैं-

तत्सम शब्दों में-'मीन'-जल बिनु मीन दीन प्रभु जैसे।[2]

अर्धतत्सम शब्दों में-समरपन-तुम्है समरपन तनु संपति घर।[3]

तद्भव शब्दों में-माषन-कोमल माषन से मन तारे।[4]

देशज शब्दों में-पौढाऊँ-कौनी सेज लाल पौढाऊँ।[5]

अरबी शब्दों में-मुरीद-जेहि मुरीद सीषन्ह कहे छेमा।[6]

फारसी शब्दों में -चाल - पंडित मूरष नारि नर है तिन्ह की येह चाल।[७]

अवधी शब्दों में - गॉउ - बिसरो घरू निजु गॉउ ठिकाने।[८]

ब्रज भाषा शब्दों में - पियारो - कहा मिले सो प्रान पियारो।[९]

भोजपुरी शब्दों में - दुलहिया - नई दुलहिया दूलह लाला।[१०]

खड़ी बोली शब्दों में - मेरी - है यह जन्म पत्रिका मेरी।[११]

रस साहित्य शास्त्र का प्राण तत्त्व है जिसके प्रथम आचार्य भरत मुनि हैं। 'कृष्णरससागर' ग्रन्थ स्वयं अपने नाम को सार्थक करता है। तैत्तिरीयोपनिषद में 'रसो वै सः' कह इसे ब्रह्म तक कहा गया है। 'कृष्णरससागर' का अंगी रस भक्ति रस है किन्तु इसके अलावा शास्त्रीय नौ रसों को भी महत्ता मिली है। 'कृष्णरससागर' में यत्र-तत्र श्रृंगार, हास्य, वीर करूण, रौद्र भयानक, वीभत्स, अद्‌भुत, शान्त, वत्सल आदि के उदाहरण भरे पड़े हैं। यथा भयानक रस-जब भयंकर परिस्थितियों पदार्थो या जीवों को देखने या उनके सम्बन्ध में सुनने, आतंकवादी या शक्ति सम्पन्न शत्रु या प्रबल विरोध के कारण हृदय में 'भय' नामक स्थायी भाव जाग्रत होता है, वही विभाव, अनुभाव एवं व्यभिचारी भाव के संयोग से पुष्ट होकर भयानक रस में परिणत हो जाता है, जैसे-

**सांटी सो जसुमति डेरवावै। बिहसि लाल तब बदन देखावै।।**
**देखे सात समुद्र गिरवर वन। तीनिउ(लोक) देषि डरपी मन।।**[१२]

अलंकारों को वाणी के भूषण के रूप में ख्याति प्राप्त है। इनके प्रयोग से काव्य में रमणीयता आती है। अलंकार को सिद्धान्त के रूप में प्रतिष्ठित करने का श्रेय आचार्य भामह को है। 'कृष्णरससागर' में शब्दालंकार और अर्थालंकार दोनों की छटा दृष्टिगत है किन्तु विशेष रुचि अनुप्रास और यमक में रही है। इसके साथ-साथ वक्रोक्ति, श्लेष, उपमा, रूपक, उत्प्रेक्षा, दृष्टान्त, सन्देह एवं विशेषोक्ति आदि के उदाहरण यत्र तत्र मिलते हैं। यथा विशेषोक्ति अलंकार में विशेषोक्ति का अर्थ है, विशिष्ट प्रकार का कथन या उक्ति। अर्थात् जब पर्याप्त कारण के होते हुए भी कार्य सम्पन्न नहीं होता है, तब वहाँ विशेषोक्ति अलंकार की छटा होती है जैसे-

**सात दिना सातै निसा बरषे जलधि यकंक।**
**नीर लष्यौ नहि अवनि पर सुरपति भयो ससंक।।**[१३]

आचार्यो ने शब्द शक्तियों के तीन प्रकार-अभिधा, लक्षणा और व्यंजना बताये हैं। कवि या रचनाकार अपने भावों को प्रकट करने के लिए जिन शब्दों का प्रयोग करता है, उनका कोई न कोई अर्थ अवश्य होता है। बिना सार्थक अर्थ के शब्द का कोई महत्त्व नहीं है। आचार्य भामह ने 'शब्दार्थौ सहितौ काव्यम्' कह कर इसी ओर संकेत किया है, जो शब्द की एक प्रमुख विशेषता भी है। गोस्वामी तुलसीदास जी ने भी 'गिरा अरथ जल बीचि सम कहियतु भिन्न न भिन्न'[१४] कहकर यह सिद्ध कर दिया है कि जैसे लहर जल से अलग नहीं है, उसी प्रकार वाणी (शब्द) और अर्थ अलग-अलग नहीं हैं। 'कृष्णरससागर' में तीनों शब्द शक्तियों के उदाहरण मिलते हैं। उदाहरण के लिए व्यंजना शक्ति के अन्तर्गत अभिधा मूला शाब्दी व्यंजना का चमत्कार

देखिए। जब अभिधा शक्ति द्वारा अनेकार्थी शब्द में एक अर्थ निश्चित हो जाता है, तदुपरान्त जिस शक्ति द्वारा उस शब्द के अन्य अर्थ का ज्ञान होता है, वहाँ अभिधा मूला शाब्दी व्यंजना होती है जैसे-

**राम कृष्ण ब्रज करहि बिहारा। करौ कंस ब ा आज हमारा।।**[१५]

उपर्युक्त पंक्ति में 'राम' शब्द के अनेक अर्थ-दशरथ के पुत्र 'राम', कबीर के निर्गुण 'राम' ब्रह्म के वाचक आदि निकलते हैं। किन्तु यहाँ 'राम' के साथ कृष्ण शब्द का प्रयोग हुआ है अतः 'राम' शब्द से यहाँ आशय कृष्ण के बड़े भाई 'बलराम' से है। अतः यहाँ पर अभिधामूला शाब्दी व्यंजना का चमत्कार है।

आचार्य वामन ने रीति को काव्य की आत्मा स्वीकार कर 'विशिष्ट पद रचना' कहा है और विशिष्ट का अर्थ है-गुण सम्पन्न रचना। हिन्दी साहित्य में इसे शैली के अर्थ में महत्ता प्राप्त है। प्रत्येक रचनाकार की शैली भिन्न भिन्न होती है। ''प्राचीन काल में रीतियों की संख्या का आधार भौगोलिक था इसी लिए विदर्भ देश की रीति वैदर्भी, गौड़ देश की रीति गौड़ी और पाञ्चाल देश की पाञ्चाली कहलाई।''[१६] 'कृष्णरससागर' में वैदर्भी, गौड़ी और पाञ्चाली तीनों रीतियों के दर्शन होते हैं। यथा गौड़ी रीति में ओज और कान्ति की प्रचुरता के कारण ओजस्विता का स्वर प्रधान रहता है। डॉ. मिश्र का मन है कि ''दीर्घ समास वाली ओज और क्रान्तिकारी गुणों से युक्त, अक्षराडम्बर युक्त पुरुष एवं संयुक्ताक्षरों वाली शैली गौड़ी रीति है।[१७] 'कृष्णरससागर' में गौड़ी रीति की छटा निम्नलिखित चौपाई में देखी जा सकती है-

**तरनि तेजु सो तुरंग लिलाटा। कुपित भयो नृप बाँचत पाटा।।**
**बाँ ाे आनि तुरत नृप अैना। साजि बाजि गजरथ भट सैना।।**[१८]

काव्य में गुणों का स्थान विशिष्ट है जिनका रस से बड़ा घनिष्ठ सम्बन्ध है। आचार्य विश्वनाथ और मम्मट ने माधुर्य, ओज और प्रसाद तीन गुणों को स्वीकार किया है। 'कृष्णरससागर' में तीनों गुणों का चमत्कार मिलता है यथा- ओज गुण का सम्बन्ध कठोर और परूषा वृत्ति से है। ओज का अर्थ है- तेजस्विता। अतः जिस काव्य के पढ़ने या सुनने मात्र से चित्त में स्फूर्ति आ जाए, वहाँ ओज गुण का चमत्कार होगा। जैसे-

**बान बान सो काटिय डारै। षड्ग उचारि उचारि पचारै।**
**टूटै ढाले जिरह सनाहा। रन सागर संग्राम अथाहा।।**[१९]

छन्द का शाब्दिक अर्थ है-बन्धन। कविता में छन्द का होना अनिवार्य है। अतः लय, वर्ण, अथवा मात्राओं के व्यवस्थित और सुनियोजित अनुपात का नाम छन्द है। इसकी मूल आत्मा लय तथा प्रवाह है। 'कृष्णरससागर' में प्रचुरता दोहा, चौपाई छन्दों की है। किन्तु यत्र तत्र भावातिरेक से सोरठा, गीतिका, बरवै, सखी, चौपाई एवं चौबोला आदि छन्दों का प्रयोग मिलता है। उदाहरण के लिए बरवै छन्द का चमत्कार देखें। बरवै अर्द्ध सममात्रिक छन्द है इसमें बारह तथा सात मात्राओं पर यति होती है। चार चरणों में कुल मात्राओं की संख्या अड़तीस होती है। प्रथम और तृतीय चरण में बारह-बारह मात्राएँ तथा द्वितीय और चतुर्थ चरण में सात-सात मात्राएँ प्रयुक्त होती है जैसे-

**रही खड़ी रथ देखत पुनि रथ धूरि।**
**गिरी समीर लता जनु डारी तूरि।।**[२०]

मुहावरे एवं लोकोक्तियों के प्रयोग से भाषा में लालित्य एवं ओज की श्री वृद्धि होती है। ये लोक जीवन के अंग हैं। डॉ. शोभा राम शर्मा का मत है कि-"मुहावरा किसी भी भाषा का वह प्रचलित वाक्यांश है जो अन्तर्निहित लक्षणा अथवा व्यंजना शक्ति द्वारा प्रत्यक्ष अर्थ के स्थान पर एक विलक्षण अर्थ गौरव तथा सजीवता की वृद्धि में सहायक है।[२१] अतः भाषा को सजीव प्रवाह पूर्ण, बोधगम्य एवं सशक्त बनाने के लिए मुहावरों का प्रयोग होता है। कृष्णरससागर में प्रयुक्त मुहावरों में कुछ उदाहरण इस प्रकार हैं-

**रहौ आपनो बस मो नॉही।**[२२]
**तेइ तेइ बचन तिरीछ कहै।**[२३]
**इन पर प्रान निछावरि कीजै।**[२४]

लोकोक्ति का अर्थ है जनता जनार्दन की उक्ति। लोकोक्ति का सम्बन्ध पूरे वाक्य से होता है। डॉ. वासुदेवशरण अग्रवाल का मत है कि "लोकोक्तियों में गागर में सागर भरने की प्रवृत्ति काम करती है। इनमें जीवन का सत्य बड़ी खूबी से प्रकट होता है।[२५] अतः लोकोक्ति एक प्रकार के जनमानस की भाषा में प्रचलित वह नैतिक या व्यावहारिक कथन हैं जो किसी विषय को स्पष्ट करते हैं तथा इसमें जीवन की कोई न कोई सत्यानुभूति रहती है। 'कृष्णरससागर' में लोकोक्तियों के कुछ उदाहरण देखे जा सकते हैं-

**सींचि गंग जल भांग बुनवाई।**[२६]
**ज्यौ जल बिना जियै नहि मीना।**[२७]
**पाई रंक महानिि जैसे।**[२८]

काव्य दोषों के सम्बन्ध में रचनाकार की भावुकता एक प्रमुख कारण है क्योंकि काव्य रचना करते समय भावुक कवि रस निष्पत्ति में इतना तल्लीन हो जाता है कि उसे भाषा शिल्प के बाह्य कलेवर की ओर ध्यान हट जाता है परिणामतः उनके काव्य में दोषों का समावेश स्वतः हो जाता है। रसानुभूति अथवा आनन्दानुभूति में विद्यातक तत्त्वों को दोष कहते हैं। आचार्य मम्मट के अनुसार- "दोष वह तत्त्व है जिससे काव्य में मुख्य अर्थ का अपकर्ष होता है। अपकर्ष को और स्पष्ट करते हुए लिखा है कि उद्देश्य की प्रतीति का विद्यातक होना ही मुख्यार्थ का अपकर्ष है।"[२६] दोषों की संख्या विद्वानों ने भिन्न भिन्न बताई है। प्रमुख रूप से काव्य के पाँच प्रकार -"पदगत, पदांशगत, वाक्यगत, अर्थगत और रसगत विद्वानों ने स्वीकार किया है।[३०] 'कृष्णरससागर' सभी दोषों के उदाहरण दृष्टिगत है। उदाहरण के लिए पदगत या शब्दगत दोष का सम्बन्ध किसी शब्द या पद को दूषित करने से है। जिनका उचित परिहार पद या शब्द को परिवर्तित करने से हो सकता है। उदाहरण के लिए निम्नलिखित पंक्तियों को देखिए-

**चक्रवाक हंसनि के टोला।**
**मुनिमन हरन सुहावन बोला।।**[३१]

उपर्युक्त पंक्तियों में 'टोला' 'बोला' शब्दों में व्याकरण विरूद्ध होने का दोष है। इनके स्थान पर यदि क्रमशः 'टोली' 'बोली' शब्द प्रयुक्त होते तो पद या शब्द गत दोष का उचित परिहार हो जाता।

उपर्युक्त विवेचन के आधार पर कहा जा सकता है कि लक्षदास कृत 'कृष्णरससागर' का शिल्प सौन्दर्य उच्च्च कोटि का है। अवधी भाषा के माध्यम से कृष्णकाव्य का प्रणयन करने में, भावों की मनोनुकूल अभिव्यक्ति में भाषा कहीं कोई बाधा नहीं बनती है। छन्दोविधान, रसयोजना, अलंकार योजना, शब्दशक्ति, काव्यगुण, शैली, लोकोक्ति एवं मुहावरे सभी दृष्टियों से यह अनुपम ग्रन्थ है।

## सन्दर्भ-सङ्केत


१. अवधी भाषा एवं साहित्य का इतिहास-लेखक-प्रो. राजेन्द्र प्रसाद श्रीवास्तव, पृष्ठ-११५ भवदीय प्रकाशन अयोध्या संस्करण १६६३-६४।

२. 'कृष्णरससागर'' रचयिता-लक्षदास, पृ./पंक्ति ११२/३ प्रकाशक-नागरी प्रचारिणी सभा वाराणसी, प्रथम संस्करण सम्वत् २०२७ वि।

३. कृष्णरससागर-पृष्ठ/पंक्ति-८०/१

४. कृष्णरससागर-पृष्ठ/पंक्ति-१५०/०६

५. कृष्णरससागर-पृष्ठ/पंक्ति-११२/२२

६. कृष्णरससागर-पृष्ठ/पंक्ति-२२८/५

७. कृष्णरससागर-पृष्ठ/पंक्ति-१४८/१०

८. कृष्णरससागर-पृष्ठ/पंक्ति-८७/१२

६. कृष्णरससागर-पृष्ठ/पंक्ति-२२६/७

१०. कृष्णरससागर-पृष्ठ/पंक्ति-६७/१४

११. कृष्णरससागर-पृष्ठ/पंक्ति-१६१/१०

१२. कृष्णरससागर-पृष्ठ/पंक्ति-१०४/११-१२

१३. कृष्णरससागर-पृष्ठ/पंक्ति-१२४/१५-१६

१४. रामचरितमानस-गोस्वामी तुलसीदास, बालकाण्ड दोहा-१८

१५. कृष्णरससागर-पृष्ठ/पंक्ति-१४४/११

१६. कबीर की भाषा-लेखक-डॉ. महेन्द्र पृष्ठ-२७०/प्रकाशक :-शब्दकार २२०३ गली डकौतान तुर्कमान गेट दिल्ली-६, प्रथम संस्करण, अगस्त १६६६

१७. काव्यशास्त्र-लेखक-डॉ. भगीरथ मिश्र, पृष्ठ-१८८, प्रकाशक :- विश्वविद्यालय प्रकाशन चौक, वाराणसी ११वाँ संस्करण १६६४ ई.।

भविष्यति इति। संस्कृतस्य सन्दर्भेऽपीयमुक्तिस्सङ्गच्छति। परमत्र क्वचिदन्यत्र गन्तव्यं नास्ति, अपि तु अस्मिन्नेव देशे तं परितः संस्कृतमयवातावरणस्य निर्माणं कर्तव्यं भविष्यति। न्यूनातिन्यूनं कक्षायां तु एतत्कार्यं भवेदेवेति। एतदर्थं संस्कृतशिक्षकैः महोत्तरदायित्वं वोढव्यमिति।

## संस्कृतमाध्यमेन संस्कृतशिक्षणस्य महत्त्वम् (Importance of Sanskrit Teaching through Sanskrit Medium)

भारते सामान्यतः शिक्षणदृष्ट्यां संस्कृताङ्ग्लभाषयोः औते मृतभाषाक्रमेणैव शिक्षणपद्धतिः आध्रियते। भाषाज्ञानार्थं सर्वप्रथमं व्याकरणं पाठ्यते अनुवादस्य चाभ्यसो विधीयते। मन्त्रवत् व्याकरणस्य नियमानां परिभाषाणाञ्च रट्टनं औत्वा छात्राः लक्ष्यं (भाषाधिगमं) विस्मरन्तः अगतिकगतिमाप्नुवन्ति। उच्चारणस्य वार्तालापाभ्यासस्य चोपेक्षा क्रियते।

एषैव स्थितिः 'इङ्ग्लैण्ड'देशे फ्रेञ्चजर्मनसदृशभाषाणां वरीवर्तते। तत्रैतासां भाषाणां शिक्षणव्यवस्थायाः दोषवशात् छात्राः केवलमेतासां परिचयमेव जानन्ति, न तु भाषाम्। अनेन एताभिः भाषाभिः मौखिकात्मप्रकाशनस्य क्षमतायाः विकासस्य सर्वथा उपेक्षा भवति। अस्मादेतत् प्रकटीभवति यत् दोषो भाषायां नास्ति, प्रत्युत भाषाशिक्षणेऽस्ति। नो चेत् कथमेकत्र भाषमाणा भाषा अपरत्र मृता स्यात्। अस्मिन् सन्दर्भे प्रमाणवचनं ब्रूते पर्सिवियलरेनमहोदयः (सारांशः)- 'व्याकरणस्य प्रचुरज्ञानं धृत्वाऽपि भाषाज्ञानविहीनस्य अपेक्षया व्याकरणज्ञानविहीनरसन् भाषायाः प्रचुरज्ञाता श्रेयस्करो भवति।'[१६]

अर्थात् व्याकरणस्य ज्ञानाद्विहीनो भूत्वाऽपि भाषायाः व्यवहारे प्रवीणो दीक्षितो वा श्रेयस्करः, परन्तु व्याकरणस्य प्रकाण्डपण्डितो भूत्वाऽपि भाषाव्यवहारे असमर्थो नास्ति श्रेयस्कर इति। सिद्धान्तमात्रं व्याकरणम् भाषा च तस्य प्रयोगः। व्याकरणं भाषानुगमामि स्यात्, न तु भाषा व्याकरणानुगामिनी।

ततो भाषते रेनमहोदयो यत्- 'व्याकरणमनिवार्यं सजीवभाषा च तस्य व्याख्या, इत्येतदवगमनं तादृशमेव भविष्यति, यादृशं भोजनस्य स्थानापन्नरूपेण पाचकगुलिकानामाहरणमि'ति।[१७]

तन्मते आङ्ग्लबालकः षष्ठवर्षावस्थां यावद्धाराप्रवाहरूपेण आङ्ग्लभाषां भाषते, किन्तु सः व्याकरणस्य नाम अपि न जानाति। एतदेव तथ्यं कस्या अपि भाषायाः अधिगमविषये चरितार्थं भवति। यदि वयं संस्कृतस्य परिप्रेक्ष्ये आलोचयामश्चेदत्राऽपि बह्व्यः व्यक्तयः लप्स्यन्ते, याभिः व्याकरणसूत्राणि कण्ठस्थीकृतानि, परन्तु धारावाहिकरूपेण संस्कृतं वक्तुमसमर्थास्सन्ति। यतो हि मौखिकमात्मप्रकाशनं नियमानां ज्ञाने न हि, अपि तु प्रयोगे अभ्यासे च विलसतीति।

### सन्दर्भाः-

01. 'The Sunday Hindustan Standard', 11 Sept. 1949, p.1-

०२. राजस्थानपत्रिका, हिन्दीदैनिकम्; सम्पादकीयशीर्षकम्, क्या है संस्कृत शिक्षा का उद्देश्य, (दिनाङ्कः ०४.०१.२००७) पृ.सं. ८.

०३. मनुस्मृतिः, द्वादशोऽध्यायः, श्लोकसङ्ख्या-१०५ इति।

०४. हलायुधकोशः, उत्तरप्रदेशहिन्दीसंस्थानम्, लखनऊ, पृ.सं. ४५७ इति।

०५. 'तच्च प्रत्यक्षं द्विविधं- सविकल्पकनिर्विकल्पकभेदात्', श्रीमद्धर्मराजाध्वरीप्रणीता वेदान्तपरिभाषा, सम्पा.- प्रो. पारसनाथद्विवेदी, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः, वाराणसी, २०००, पृ.सं. ६८ इति।

०६. अमरकोशः, तृतीयकाण्डम्, विशेष्यनिघ्नवर्गः, श्लो.सं. ७६ इति।

०७. संफाया, रघुनाथः, संस्कृत शिक्षण, प्रथमं संस्करणम्, हरियाणा ग्रन्थ अकादमी, १६६०, पृ.सं. १७६ इति।

08. "This method (Direct Method) was approved and spread by International Phonetic Association of france." -M.Ediger, Teaching English Successfully, Discovery Publishing House, 2010, p.14.

09. Vinayak Pandurang Bokil; A New Approach to Sanskrit, Chitrashala Prakashan, Poona, 1956.

10. Comprehensive Dictionary of Education, compiled by Maqbool Ahmad. AT-LANTIC Publishers, 2007, p. 155.

11. ".....is that a foreign word or word group should be associated with it's meaning directly, in other words without the habitual intervention of the native speech." -Kirkman quated by Thompson and Wyatt, The Teaching of English in India, Oxford University Press, London, 1952 p.34.

12. "The Fundamental principle of the direct method- that the vocal oral appeal is stranger than the visual in fixing foreign phraseology - is generally accepted as being sound psychologically, but the fact that all children are not linguistically minded, is ignored by the method, and this leads to poor work from mis fits." -Thompson and Wyatt, The Teaching of English in India, Oxford University Press, London, 1952, p.37&38.

13. "Translation ought to be used sparingly, and at all events, it is not necessary to translate whole con nected pieces, but merely a word or, at the very most, a sentence now and then." -Otto Jespersen, How to Teach a Foreign Language, G. Allen and Unwin, London, 1923 p. 20.

14. "Strictly speaking it occupies no place at all in it, for since the method is in it's essence a system of acquiring a Language by dint of using it may in fact be

said frankly to ignore grammar."-Thompson and Wyatt; The Teaching of English in India, Oxford University Press, London, 1952, P. 35.

15. "It is better to know a lat of English and no grammar, than to know a lat of grammar and no English. In other words, the grammar is theory and English is practice, and in teaching a living language practice is essential. The grammar should bellow the English and help to explain the construction of English, not the English follow the grammar to help and illus trite that." -Percivial Wren; 'The Indian teacher's guide to the theory and practice of mental, moral and physical education' Bombay, (1910), p. 117.

१६. पाण्डेयः, इन्दिराचरणः; संस्कृतशिक्षणसमीक्षण, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १६६२, पृ.सं. १६२.

17. "To treat grammar as essential and the living language as a useful illustration of it's rules, is like endeav oring to live upon the digestive pills as a diet and taking a little food to show how it works." - Also there, p. 125.

■ पता : सहायकाचार्यः, शिक्षाशास्त्रविभागः, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः) लखनऊ-परिसरः, लखनऊ (उ.प्र.)

# हिन्दीभाषायां संस्कृतभाषायाः प्रभावः

■ डॉ. रामबहादुरदुबे

भाषाशब्दः भाष् अङ् टाप् द्वारा सिध्यति। भाषया एव कश्चिदपि जनः स्वीयं भावं प्रकटयति। सृष्ट्यादौ हावभावप्रदर्शनेनैव जनाः स्वीयं भावं प्रकटयन्तिस्म इति केचन आधुनिकाः इतिहासकाराः वदन्ति। तत्र कालक्रमस्य प्रभावात् लिपेः अविष्कारः सञ्जातः। तदनन्तरं स्थानभेदेन क्षेत्रभेदेन वा पृथक्-पृथक् भाषायाः प्रयोगः स्वतः एव सञ्जातः। कोश-कोश पर पानी बदले तीनकोश पर वाणी, इति लोकोक्तिः, यत्र तत्र सर्वत्र हिन्दीक्षेत्रेषु श्रूयते। परं या कापि भाषा भवतु, या कापि वाणी वा सूक्ष्मधिया अन्विष्यते चेत् सर्वासां भाषाणां मूलाधारा आधारभूता वा यदि काचित् भाषा अस्ति सा भाषा देवभाषा गीर्वाणवाणी वा उच्यते।

उक्तमपि "संस्कृतं नाम दैवीवाक् अन्वाख्याता महर्षिभिः" इति। अनेन वचनेन अस्याः भाषायाः पवित्रता प्राचीनता प्रमाणिकता च सर्वभाषापेक्षया समधिका सिध्यति। भारतीयाध्यात्मचिन्तनानुसारेण देवानां मुखादेव वेदाः निःसरिताः। येषां माध्यमः संस्कृतमेव। विश्वसाहित्ये आदिमः ग्रन्थः वेद एव। अस्य रचना संस्कृतमाध्यमेनैव सञ्जाता विद्यते। अतः संस्कृतभाषायाः प्राचीनता सिध्यति।

या कापि भाषा भवतु सा भावानां वाहिका एव भवति। भाषामाध्यमेनैव जनाः स्वहृदयस्थं भावं परस्परं व्यवहरन्ति प्रकटयन्ति वा। हिन्दीभाषायाः अपि उत्पत्तिः संस्कृतभाषाद्वारा एव सञ्जाता विद्यते इत्यत्र नास्ति काचित् विप्रतिपत्तिः।

हिन्दीभाषा संस्कृतभाषायाः पुत्री अस्ति इति हिन्दीसाहित्यकाराः आमनन्ति। परिवारे भवन्तु नाम अनेके पुत्राः अन्ये सम्बन्धिनो वा, परन्तु पुत्र्याः यत् स्थानमस्ति तस्याः स्थानस्य पूर्त्तिः नान्येन केनचित् सम्बन्धिद्वारा भवितुम् अर्हति। तथैव हिन्दीभाषा संस्कृतभाषायाः पुत्री अस्ति। संस्कृतसाहित्यपरिवारः तावत् सर्वाङ्गपूर्णः न भवति यावत् कस्यापि ग्रन्थस्य हिन्दीभाषायाम् अनुवादो न भवति। यतः अद्यत्वे प्रायः उत्तरभारते हिन्दीभाषायाः समधिकः प्रचारः प्रसारश्च दृश्यते। अतः संस्कृतभाषायाः बहुनिकषा हिन्दीभाषायाः स्थितिः वर्तते।

हिन्दीशब्दस्य उत्पत्तिरेव सिन्धशब्दद्वारा सिन्धीशब्दद्वारा वा सञ्जाता इति केचन स्वीकुर्वन्ति। केचन हिन्दमहासागरतटवर्तीक्षेत्रस्य भाषा हिन्दीभाषा अस्तीति स्वीकुर्वन्ति। अस्माकं भारते हिन्दीभाषायाः विपुलं क्षेत्रमस्ति। हिन्दुस्तानस्य विशालभूभागे प्रयुज्यमानायाः सप्तदश वाण्याः मूलाधारा हिन्दीभाषा एव वर्तते। अस्मात् कारणात् हिन्दीभाषा अखिलभारतीयजनानां भावोद्गमस्य भाषारूपेण स्वीकर्त्तुं शक्यते।

भारतस्य हिन्दीभाषा-भाषीक्षेत्रे पञ्च उपभाषाः प्रचलिताः विद्यन्ते। पश्चिमी-पूर्वीहिन्दी-हरियाणवी- राजस्थानी-पहाड़ी चेति पञ्च उपभाषासु हिन्दीभाषायाः प्रत्यक्षप्रभावः सुस्पष्टरूपेण द्रष्टुं शक्यते। एषु क्षेत्रेषु ये ये साहित्यकाराः सञ्जाताः तेषां कृतिषु संस्कृतभाषायाः प्रत्यक्षप्रभावः सुस्पष्टरूपेण द्रष्टुं शक्यते।

भारतस्य पश्चिमीहिन्दीक्षेत्रस्य अन्तर्गतासु उपभाषासु व्रजभाषा, हरियाणवी, बुन्देली, कौरवी (खड़ीबोली), कन्नौजी, तथा पूर्वीहिन्दीक्षेत्रस्य अन्तर्गतासु उपभाषासु अवधी, वघेली, छतीसगढ़ी, भोजपुरी, मैथिली, मगही, एवमेव राजस्थानान्तर्गतासु उपभाषासु पूर्वी-पश्चिमी-उत्तरी-दक्षिणीराजस्थानी उपभाषा, एवमेव पहाड़ीक्षेत्रस्य पृथक्पृथक् प्रभागेषु पृथक्-पृथक् उपभाषा विलसन्ति। यत्र यत्र स्थानविशेषेषु यावन्तः साहित्यिकग्रन्थाः उपलभ्यन्ते

तत्र-तत्र सर्वत्रैव संस्कृतस्य प्रभावः सुस्पष्टरूपेण द्रष्टुं शक्यते। हिन्दीसाहित्ये व्रजभाषायां संस्कृतस्य प्रगाढ़ः प्रभावः सुस्पष्टरूपेण द्रष्टुं शक्यते। भक्तिकाले कृष्णकाव्यपरम्परायाः बहुलता दृश्यते। तत्र प्रायेण सर्वाण्यपि काव्यानि व्रजभाषाश्रितानि सन्ति। एषां समेषामपि काव्यानाम् उपरि श्रीमद्भागवतमहापुराणस्य प्रत्यक्षप्रभावः सुस्पष्टरूपेण दृश्यते। श्रीमद्भागवत्महापुराणस्य रचना संस्कृतमाध्यमेन सञ्जाता वर्तते एतदर्थं व्रजभाषाश्रितकाव्यानाम् उपरि संस्कृतस्य प्रभावः सुस्पष्ट एव। व्रजभाषायाः प्रमुखः कविः सूरदासः वर्तते। सूरदासेनापि स्वकीये पद्ये संस्कृतस्य बहुनां पद्यानां प्रयोगः कृतः विद्यते। तद्यथा-

**''सो दुविधा पारस नहीं जानत कञ्चन करत खरो''**[1]

अत्र कञ्चनशब्दः विशुद्धसंस्कृतभाषायाः विद्यते। एवमेव अन्यपद्येषु निरालम्ब-अगम-अगोचर-भ्राता-पूर्व-खग-काग-नवनीत-प्रभृतयः शब्दाः विशुद्धसंस्कृतभाषायाः एव सन्ति। बुन्देलीभाषायामपि श्रीमति गङ्गाधरव्यासेन कविताः विरचिताः सन्ति। तद्यथा-

**हमखो प्रीति पछारूँ खटकी। पैल न मानी हटकी।।**

अस्मिन्नपि पद्ये प्रीति इति शब्दः संस्कृतभाषायाः एव वर्तते। एवमेव हिन्दीभाषायाः अथवा खड़ीबोली वर्तते, इयं वैश्विकपरिदृश्ये प्रतिष्ठापिता इव प्रतीयते। तत्र आवेदन-प्रतिवेदन-बोलचाल-मान्यवर-दुग्ध-विडम्बना-उर-प्रतिज्ञा-अमृत- प्रभृतयः शब्दाः हिन्दीभाषायाः विपुलं भण्डारं अभिव्यञ्जयन्ति।

एवमेव हिन्दीभाषायाः विपुलं पद्यात्मकं साहित्यं रामचरितमानसः सर्वोत्कृष्टः ग्रन्थः वर्तते। तत्र तु संस्कृतस्य बहुनां शब्दानां व्यापकः प्रयोगः विस्तृतरूपेण अवलोक्यते। तद्यथा कानिचन उदाहरणानि-

**उमा रमा लक्ष्मणहि निहारी। बोले वचन मनुज अनुसारी।**
**अर्धरात्रि गई कपि नहिं आयऊ। राम उठाई अनुज उर लायऊ।।**
**सकहुँ न दुखित देखि मोहि काहुँ। बन्धु सदा तव मृदुल सुभाउ।**
**मम हित लागि तजेहुँ पितु माता। सहहुँ विपिन हिम आतप बाता।।**[2]

उपर्युक्तपद्येषु बहुत्र संस्कृतशब्दाः स्वीयं वैशिष्ट्यम् अभिव्यञ्जयन्ति। इत्थं बघेलीभाषायामपि आनन्दशब्दः संस्कृतभाषायाः एव अस्ति। रीतिकालीनकविषु केशवदास-बिहारी-घनानन्द-प्रभृतीनां काव्येषु संस्कृतस्य प्रभावः महन्महत्त्वाधायकः एव वर्तते।

किमधिकम् ? वर्त्तमानहिन्दीसाहित्येऽपि भारतेन्दुहरिश्चन्द-अयोध्यासिंहहरिऔध-जयशङ्करप्रसाद ''निराला''-सूर्यकान्त-महादेवीवर्मा-सुमित्रानन्दनपन्त-रामधारीसिंहदिनकर-हरिवंशरायबच्चन-अज्ञेय-प्रभृतीनां काव्येषु संस्कृतस्य प्रभावः सर्वतो भावेन प्रसृतो दृश्यते। इत्थं निष्कर्षतः इदं वक्तुं शक्यते यत् हिन्दीभाषायां संस्कृतस्य प्रभावः प्रतिपदं वर्तत एव। संस्कृतभाषा सर्वासां भाषाणां जननी, ज्ञानविज्ञानस्य उत्पादयित्री, कामधेनुवत् सकलसुखदात्री च वर्तते। उक्तमपि अस्ति-

**भारते संस्कृता भाषा कामधेनु प्रकीर्त्तिता।**
**जननी विश्वभाषाणां विज्ञानस्योपकारिणी।।**

## सन्दर्भ

१. सूरसागर (सूरदास) २. रामचरितमानस लंकाकाण्ड (तुलसीदास)

■ पता : असिस्टेन्ट प्रोफेसर राष्ट्रियसंस्कृतसंस्थानम् लखनऊ परिसरः, लखनऊ

# "भारतमाता ब्रूते" महाकाव्ये लोकसन्देशः

■ हीरा पाण्डेय

मानवतायाः पोषकमुत्थापकं चास्ति साहित्यम्। गुणोऽयं यस्मिन् साहित्ये आधिक्येन वर्तते तद् साहित्यमुत्कृष्टं भवति। मापदण्डोऽप्यस्ति साहित्यसमीक्षायाः अयमेव यत् या रचना मानवताम् .अनुप्राणितङ्करोति, यया च आनन्दानुभूत्यपि सम्भवो भवति, सा रचनैव साहित्ये उच्चस्थानस्याधिकारिणी भवति।

**भारतीयः समाजोऽयं, स्वीये संस्कृति-सभ्यते।**
**प्रायोऽपमानयन् मोहात्, परकीये प्रशंसति।।**[1]

विषयोऽयं भारतीयानां कृते हर्षस्य गौरवस्य च वर्तते यत् पाश्चात्य संस्कृतेः सभ्यतायाश्चान्धानुकरणं परित्यज्य भोगवादिनि कलियुगेऽपि केचन विद्वांसः कवयश्च देववाणीसंस्कृत भाषायाम् स्वरचनाधर्मितया भारतीयसंस्कृतेः सभ्यतायाश्चानुसरणं कर्तुं प्रेरयन्ति, मार्गदर्शनं च कुर्वन्ति।

डॉ हरिनारायणदीक्षिताः (आचार्याः एवं भूतपूर्वाः अध्यक्षाः संस्कृतविभागस्य तथा अधिष्ठातारः कलासंकायस्य कुमाऊँविश्वविद्यालये) अप्येतादृशाः कवयः सन्ति। भवतः जन्म जनवरीमण्डले उत्तरप्रदेशेऽभवत्। दीक्षितमहोदयाः लब्धप्रतिष्ठाः संस्कृतविद्वांसः सन्ति। 'भारतमाता ब्रूते' इति तस्य महाकाव्यम् अस्य कथनस्य पुष्टिङ्करोति।

द्वाविंशतौ सर्गेषु रचितेऽस्मिन् महाकाव्ये प्रो. हरिनारायणदीक्षितमहाभागेन भारते भारतीयसंस्कृतेः सभ्यतायाः च ह्रासं दृष्ट्वा भारतमातुः मनोदशायाः तस्याः वेदनायाः च वर्णनं कृतम्।

भारतीयेभ्यः संदेशश्च दीयते यत् सावधानैर्भूत्वा भारतमातुः पीड़ायाः कारणं समूलं नष्टं कुरुत, यतोहि व्यर्थजीवनममीषां पुत्राणां येषां समक्षं तेषां माता रोदनङ्कुर्वन्ती जीवति। ये पुत्राः स्वमातुः कृते किमपि न कर्तुं शक्नुवन्ति ते अयोग्या भविष्यन्ति जगति वर्तमानं प्रत्येकं सम्बन्धं निर्वोढुम्।

भारतमाता ब्रूते इति महाकाव्ये महाकविः भारतमातरं भारतीयां संस्कृतिं सभ्यताञ्च मानवपात्ररूपेण उपस्थितां करोति। महाकाव्ये भारतमाता स्वसंस्कृतिसभ्यतायाः परिचयं कुर्वन्ती कथयति-

**यं मेनिरे धर्मपथानुगामिनम्, न्यायप्रियं धर्मपथानुगामिनम्।**
**यश्चोच्यते स्माखिल भूमिमण्डले, सुवर्णपक्षी बहुमानपूर्वकम्।।**[2]

**तस्यैव देशस्य यशस्विनः प्रभो, भूरस्म्यहं भारतमातृनामिका।**
**एते उभे संस्कृति-सभ्यताभिधे, सुते च मे स्तः परिचायिके च मे।।**[3]

**कुल्यायाः सुप्रवाहार्थं, यथाकूलद्वयं मतम्।**
**तथा मे सुप्रसारार्थं, द्वयमेतत्प्रकाम्यते।।**[4]

महाकवेः सन्देशः स्पष्टः अस्ति यत् यथा परिवारे सुतायाः सम्मानं क्रियते, तस्याः उन्नतेः बहुप्रयत्नः क्रियते, तथैव भारते भारतीयसंस्कृतेः सभ्यतायाः च सम्मानं भवेत्, तयोः उपेक्षा कदापि न भवेत्। भारते भारतीय संस्कृतिसभ्यतयोः उपेक्षया अपि च पाश्चात्य-सभ्यतायाः संस्कृतेश्च विकासेन भारतीयजनेषु लज्जा-सज्जनता-धैर्य-सत्यनिष्ठता-कर्त्तव्यपरायणतासदृशाः गुणाः सततं क्षीणतां प्राप्नुवन्ति, अधीरता धूर्तता अज्ञानतादुर्जनतादीनां प्राबल्यं भवति। भारतस्य आधुनिकीं परिस्थितिं दृष्ट्वा भारतमाता कथयति-

**ईर्ष्यासूया च पैशुन्यं, कार्पण्यं कामदासता।**
**कृतघ्नत्वं च धूर्त्तत्वं, यान्ति वृद्धिं समन्ततः।।[५]**

**द्यूतं च कूटं कपटं छलं बलं, प्रयुज्यते चाद्य निजार्थसिद्धये**
**सत्यं सुनीतिः शुभकामना मिथो, न श्रूयते नापि च दृश्यते क्वचित्।।[६]**

भारतीया संस्कृतिः पुरुषार्थचतुष्टयस्य मार्ग दर्शयत्यस्मान्, यस्यानुसरणेन रामराज्यसदृशः समाजः सङ्कल्पितः। किन्त्वद्य जनाः केवलमर्थकामयोः सेवने तत्परस्तिष्ठति।

**कामार्थौ प्रबलायेते, प्रायः सर्वत्र भारते।**
**अन्यौ च पुरुषार्थौ द्वौ, धर्ममोक्षौ विषीदतः।।[७]**

अतः पुरुषार्थचतुष्टयस्य सिद्धिं-कर्तुं प्रेरयति म्हाकविः।

महाकाव्यस्य एकोनविंशतितमे सर्गे महाकविः दूरदर्शनस्य चर्चां करोति। तदनुसारं भारतसर्वकारेण एतद् दूरदर्शनं गृहे-गृहे अतनोत्, येन भारतवासिनः स्वसंस्कृतिं सभ्यताञ्च जानन्त, तयोः वैशिष्ट्यं जानन्तु, तदनुसारञ्चाचरणङ्कुर्वन्तु। किन्त्वद्य विषयोऽयं खेदस्य वर्तते यदेतद् कुमानवान् कुभावाँश्च दर्शयन्ति, चरित्रहीनता गौरवेण दर्शयन्ति, पाश्चात्यसभ्यता, संस्कृतिञ्च पोषयन्ति-

**मातरं पितरं बन्धुं, स्वसारं सम्पदे जनः।**
**छलयन् दर्श्यते तस्मिन्, दुर्वारे दूरदर्शने।।[८]**

**ननान्दा चाथवा श्वश्रू-रमृष्यन्ती वधू गुणान्।**
**असूयन्ती तथा तस्यै, तस्मिन् प्रायः प्रदर्श्यते।।[९]**

महाकवेः आशयोऽस्ति यद् दूरदर्शने भारतीयसंस्कृतेः पोषककार्यक्रमान् शिक्षाप्रदज्ञानवर्द्धकश्रृंखला एवं प्रदर्शयितुं युज्यते।

नारीदुर्दशा - यौतकप्रथा-नारीमनोवृत्तौ परिवर्तनं, विद्यार्थिषु अनुशासनहीनता, राजनीति दुर्दशा, समाजदुर्दशादीनां मूलकारणं भारतीयसभ्यतासंस्कृतेः अनुसारं आचरणस्य अभावः अस्ति अतः महाकविः कथयति यद् अस्माभिः भारतीय सभ्यतासंस्कृतेरनुसारं आचरणं करणीयम्। पुरुषार्थचतुष्टयस्य सिद्धिः करणीया। अन्यथा अस्तित्त्वस्यास्माकं विनाशस्योत्तरदायिनः वयं स्वयमेव भविष्यामः।

विंशतितमे सर्गे शिक्षादशावर्णनमस्ति तद्नुसारम्-

**क्षेत्रीयतायै बत यत्र मान्यता जातीयतायै च समर्थनं हृदि।**
**कार्येषु सर्वेष्वपि तेषु दीयते। विद्यालयेष्वद्य मठोपमेष्वपि।।[१०]**

**दोषाः गुरूणां प्रभवन्ति सत्वरं यथा च शिष्येषु तथा न तद्गुणाः**
**जने प्रभावं कुरुते यथा सुरा कदापि कुत्रापि तथा न गोपयः।।[११]**

**तदद्य छात्रा अपि भूरिसंख्यकाः स्वच्छात्रधर्म्माद् विचलन्ति नित्यदा।**
**स्वार्थस्य सिद्धयै वत ते च निर्भयं गृह्णन्ति मार्गं बुधवृन्दनिन्दितम्।।[१२]**

आशयोऽस्ति विश्वविद्यालयेषु विद्यालयेषु वा जातिवादः, क्षेत्रीयता, पक्षधर्मिता वा न स्यात्। छात्राश्च ज्ञानप्राप्तये पठन्तु। परीक्षासु यथा तथा उत्तीर्य सन्तुष्टाः न स्युः। महाकविः वाञ्छति यत् विश्वविद्यालये आचारशास्त्रस्य शिक्षायाः अपि व्यवस्था भवेत्, येन विद्यार्थिषु निरंकुशता-चरित्रहीनता-सदृशाः दोषाः न स्युः।

**नैकेषु शिक्षाविषयेषु सत्स्वपि नाचारशास्त्र बत तत्र पाठ्यते।**
**यानेषु तीव्रा यदि दीयते गति स्तत्तेषु योज्यो हि तदीयरोधकः।।**[१३]

''भारतमाता ब्रूते' इति महाकाव्ये समाजस्य हितायावश्यकशताधिकक संदेशाः जनसाधारणं प्रति दीयन्ते। कतिपये अधोलिखिताः सन्ति-गृह-जगतः जननीशशक्तिरूपानार्यः सम्मानं करणीयम्। तीर्थस्थानानां महत्तां इतिहासञ्च ज्ञातव्यम्। स्वयं गुणवान भूत्वा अन्यगुणिनां जनानाम् सम्मानं करणीयम्। परेषां सम्पत्तिः मृत्तिकां माननीया। स्वदेशस्य महापुररूषाः विज्ञातव्याः। कर्त्तव्यपालकस्य सम्मानं करणीयम्। परिश्रमिणः भवितव्याः। स्वपरम्परां प्रति गौरवभावः भवेत्। स्वदेशमहापुरूषाणां जीवनचरितस्य ज्ञानं करणीयम्।

निष्कर्षरूपेण इदं कथितुं शक्यते यत् महाकविना भारतीया संस्कृतिः सभ्यता व गौरवेण स्मर्यते भक्तिरसस्याक्षुण्ण धारया इदं महाकाव्यं सर्वथा व्याप्तमस्ति। दुर्गुणान् दृष्टिपथे कृत्वा लोकनायकस्य आह्वानं क्रियते। भक्तिसस्य परिपोषणेन कवेः पाठकानां च अलौकिकमानन्दं प्रयच्छद् एवं महाकाव्यम् भारतमातरं वक्त्रीं मत्वा भारतवर्षस्य गौरवगानं करोति। तस्य च सर्वविधं हितचिन्तनं करोति।

## सन्दर्भ-सङ्केत ''भारतमाता ब्रूते''


| | | |
|---|---|---|
| १. | संस्कृति सभ्यता ह्रासवर्णनात्मको द्वादशः सर्गः | श्लोक-सङ्ख्या ४२ पृष्ठ-२५१ |
| २. | भारतमातृभिलनात्मकः एकादशः सर्गः | श्लोक-सङ्ख्या २२ पृष्ठ-२३३ |
| ३. | तदैव सर्ग | श्लोक-सङ्ख्या २३ पृष्ठ-२३३ |
| ४. | संस्कृति-सभ्यताद्वासवर्णनात्मको द्वादशः सर्गः | श्लोक-सङ्ख्या ६ पृष्ठ-२४३ |
| ५. | तदैव सर्गः | श्लोक-सङ्ख्या ६ पृष्ठ-२४३ |
| ६. | समाजदुर्दशावर्णनात्मकः पंचदशः सर्गः | श्लोक-सङ्ख्या ६७ पृष्ठ-३१२ |
| ७. | संस्कृति-सभ्यताहासवर्णनात्को द्वादशः सर्गः | श्लोक-सङ्ख्या १८ पृष्ठ-२४५ |
| ८. | दूरदर्शनदोषवर्णनात्मकः | श्लोक-सङ्ख्या २५ पृष्ठ-३७२ |
| ६. | तदैव सर्ग | श्लोक-सङ्ख्या २८ पृष्ठ-३७३ |
| १०. | शिक्षादशावर्णनात्मको विंशः सर्ग | श्लोक-सङ्ख्या ५१ पृष्ठ-३६७ |
| ११. | तदैव सर्ग | श्लोक-सङ्ख्या ३६ पृष्ठ-३६४ |
| १२. | तदैव सर्ग | श्लोक-सङ्ख्या ३७ पृष्ठ-३६४ |
| १३. | तदैव सर्ग | श्लोक-सङ्ख्या ४३ पृष्ठ-३६४ |


■ पता : राष्ट्रियसंस्कृत संस्थानम् लखनऊ परिसर, लखनऊ

# मध्यम मार्ग

■ प्रियंका दूबे

भगवान बुद्ध का धर्म-दर्शन मध्यममार्ग के रूप में माना जाता है। यह मध्यम मार्ग धर्म एवं दर्शन के क्षेत्र में समान रूप से खरा उतरता है। मध्यम मार्ग में दो अन्तों का त्याग करना आवश्यक है। धर्म या आचरण के क्षेत्र में दो अन्त है-काममुख का अत्यधिक सेवन एवं आत्मपीड़ा वाली कठोर तपस्या। दर्शन या विचार के क्षेत्र में दो अन्त है, दो दृष्टियाँ-शाश्वतवाद एवं उच्छेदवाद। भगवान बुद्ध ने इन अन्तों से बचते हुए मध्यम मार्ग के रूप में आर्य अष्टांगिक मार्ग तथा प्रतीत्यसमुप्पाद के सिद्धान्त का प्रतिपादन किया था।

भगवान बुद्ध ने धर्मचक्र प्रवर्तन सुत्र में कामसुख को हीन, ग्राम्य और पृथकजनों के अनुकूल, अनार्य एवं अनर्थ करने वाला कहा था तथा आत्मपीड़ा वाली तपस्या को दुख देने वाली अनार्य एवं अनर्थ करने वाली बतलाया था।

भगवान बुद्ध के समय सामाजिक स्थिति इतनी बिगड़ गई थी कि कोई कर्मफल एवं पुनर्जन्म आदि को न मानकर कामसुख में लीन था तो कोई कठिन तपस्सा से मुक्ति मानकर अपने को कष्ट देने में लगा था। भगवान बुद्ध ने स्वयं दो अन्तों का अनुभव अपने बुद्धत्व काल के पूर्व किया था। पालि साहित्य में वर्णित है कि राजा शुद्धोधन ने पूरा प्रयास किया था कि सिद्धार्थ सांसारिक आसक्तियों में लगे रहें लेकिन सिद्धार्थ ने कामसुखों का उपभोग करके उसमें कोई चिरस्थायी आनन्द नहीं पाया और उनकी अनित्यता समझ कर उन्हें त्याग दिया। इसके बाद तपस्या में उन्होंने इतनी कठोर तपस्या की कि उनके शरीर का अस्थिपंजर मात्र शेष रह गया और उसमें भी भगवान ने लाभ नहीं देखा। अन्त में उसको भी त्याग दिया तथा बोधि की ओर उन्मुख हुए। बोधि प्राप्त करने के बाद भगवान अपनी पूर्व तपस्या के त्याग पर सन्तोष व्यक्त करते हैं, साथ ही विभिन्न प्रसंगों में कामसुखों की भर्त्सना की गई है।

संयुक्तनिकाय में भगवान से पूछे जाने पर कि-वे सभी तपस्याओं की निन्दा करते हैं एव रूक्षाजीवी तपस्या को सबसे अधिक निन्दा करते हैं क्या यह ठीक है ? भगवान के अनुकूल हैं ? भगवान ने अपने सिद्धान्त के विपरीत बतलाया एवं कामसुखों तथा तपस्याओं के गुण-दोष बतलाए थे।

भगवान बुद्ध ने मध्यम मार्ग को स्पष्ट करने के लिए कई युक्तियों को अपनाया था। संयुक्तनिकाय में वर्णित है कि एक देवता आकर भगवान से पूछता है कि आपने बाढ़ को कैसे पार किया तो उत्तर स्वरूप भगवान कहते हैं कि उन्होंने बिना रूके एवं बिना फड़फड़ाए बाढ़ को पार किया, क्योंकि यदि रूकता तो डूब जाता एवं फड़फड़ाता तो बह जाता। यहाँ पर रूकने से तात्पर्य कठोर तपस्या में लगने एवं कोशिश करने से तात्पर्य काम भोगों में लिप्त होने से है।

वीणा की उपमा में कहा गया है कि जिस प्रकार उसके तार अत्यन्त ढीले हो राग नहीं आता एवं अत्यन्त कसे हो तो तार टूट जाते हैं, उसी प्रकार वे अन्त हैं।

**मिथ्यादृष्टियाँ** – मिथ्यादृष्टि के लिए पालि साहित्य में प्रायः दृष्टि/दृष्टियां शब्द ही आया है, जो मिथ्या दृष्टियों को सूचित करता है, क्योंकि 'दृष्टि' मानने वालों को ही धर्म के विरूद्ध कहा गया है। परवर्ती साहित्य में मिथ्या दृष्टि का प्रयोग हुआ और दृष्टियों के अन्तर्गत मतों की समीक्षा मिथ्या दृष्टि के नाम से प्रचलित हो गई।

दीघनिकाय के ब्रह्मजाल सुत्र में ७२ दृष्टियों का वर्णन मिलता है। इस सुत्र को भगवान ने विभिन्न नाम देते हुए कहा था कि इसे कोई आर्यजाल, धर्मजाल, ब्रह्मजाल, दृष्टिजाल या अलौकिक संग्राम-विजय भी कह सकता है। दीघनिकाय में इन मिथ्या दृष्टियों को पूर्वान्तकल्पिक एवं अपरान्त कल्पिक नाम से विभाजित किया गया है, जिसमें पूर्वजन्म से सम्बन्धित तथा भविष्य में होने वाली जन्म से सम्बन्धित दृष्टियाँ है। संयुक्तनिकाय में तीन प्रकार से दृष्टियों का वर्णन किया गया है। पूर्वान्त, अपरान्त एवं वर्तमान में संशय। पूर्वान्त के सम्बन्ध में विचार करना है कि मैं भूतकाल में था, नहीं था ? क्या था ? कैसा था ? क्या होकर क्या हो गया? अपरान्त के सम्बन्ध में विचार करना कि भविष्य में होऊंगा नहीं होऊंगा ? भविष्य में क्या होऊंगा ? कैसे होऊंगा ? क्या होकर क्या होऊंगा ? वर्तमान में भी संशय करता है कि मैं हूं, नहीं हूं ? क्या हूं ? कैसा हूं? मेरा जीव कहाँ से आया है ? कहाँ जायेगा ? इत्यादि क्रमशः पूर्वान्त, अपरान्त और वर्तमान की ये मिथ्या दृष्टियाँ हैं।

**सत्कायदृष्टि** – सत्काय दृष्टि को सभी मिथ्या-दृष्टियों का मूल कारण कहा गया है तथा सलाह दी गई है कि स्मृतिमान रहते सत्कायदृष्टि का प्रहाण करना चाहिए। आत्मा के सम्बन्ध में विभिन्न प्रकार से विचार करने को ही सत्कायदृष्टि कहा गया है आत्मा रूपवान होता है, अरूपवान होता है, रूपवान एवं अरूपवान होता है, आत्मा एकान्तसुखी होती है, दुःखी होता है, सुख-दुःख से रहित होता है, अरोग्य होता है। या रूप, वेदना, संज्ञा, संस्कार और विज्ञान को आत्मा समझने से सत्कायदृष्टि उत्पन्न होती है।

■ पता : कनिष्ठ शोध अध्येत्री (पालि) राष्ट्रिय संस्कृत संस्थान, लखनऊ परिसर

# मैथिली भाषा पर संस्कृत का प्रभाव : विद्यापति के परिप्रेक्ष्य में

■ मैत्रेयी

आधुनिक भारतीय भाषाओं में 'मैथिली' एक क्षेत्रीय भाषा के रूप में प्रसिद्ध है। यह भाषा भारतीय संविधान की आठवीं अनुसूची में स्वीकार कर ली गयी है। मैथिली भाषा का क्षेत्र 'मिथिलांचल' के नाम से प्रसिद्ध है, किन्तु इसका विस्तार बिहार राज्य के दरभंगा, मधुबनी, समस्तीपुर, सहरसा, पूर्णिया, अररिया जिला, सीतामढ़ी, पश्चिम बंगाल का पश्चिमी क्षेत्र, उत्तरप्रदेश का पूर्वी क्षेत्र के अतिरिक्त नेपाल (द्वितीय राजभाषा) तक है। मैथिली की लिपि तिरहुता है जो बंगला से साम्य रखती है। यह अत्यन्त कर्णप्रिय, मधुर भाषा है।

विद्यापति मैथिली भाषा के प्रसिद्ध कवि रहे हैं इनका जन्म मधुबनी जिला के बिस्की नामक ग्राम में सन १३६० में हुआ था। इन्हें 'मैथिलकोकिल', 'अभिनवजयदेव', 'खेलनकवि' एवं 'कविशेखर' नामों से जाना जाता है। इनकी १४ रचनाएँ हैं जिनमें से संस्कृत में ११, अवहट्ट अथवा अपभ्रंश में २ एवं मैथिली में १०० से अधिक पदावलियों का संग्रह तथा 'गोरक्षविजय' नामक नाटक प्राप्त है। विद्यापति की सबसे अधिक प्रसिद्धि उनकी पदावलियों के कारण है जिनमें गंगास्तोत्र, शिवस्तोत्र, नचारीशिव, वन्दना, वसन्त इत्यादि प्रसिद्ध हैं।

**१. संस्कृत रचनाएँ -**

१. भूपरिक्रमा

२. पुरूषपरीक्षा

३. लिखनावली

४. शैवसर्वस्वसार

५. शैवसर्वस्वस्तार प्रमाणभूतपुराणसंग्रह

६. गंगावाक्यावली

७. विभागसार

८. दानवाक्यावली

९. दुर्गाभक्तिरङ्गिनी

१०. गयापत्तलक

११. वर्षकृत्य

**२. अवहट्ट रचनाएँ -**

१. कीर्तिलता

२. कीर्तिपताका

इनके पदों में सरसता, भावों की सुकुमारता, पद लालित्य और ध्वनि सौंदर्य प्रचुर मात्रा में उपन्यस्त होता है। संस्कृत साहित्य में लालित्य और माधुर्य के लिए जयदेव का 'गीतगोविन्द' प्रसिद्ध है। विद्यापति ने जयदेव के काव्य को आदर्श मानकर पदावली के अनेक पदों की रचना की है। इनके गीतों की सबसे बड़ी विशेषता है उनकी विलक्षणा संगीताताकता इनके पद बिना संगीत के नियमों और छन्द के आसानी से गेय हैं–यह उनकी योग्यता का चरम उत्कर्ष है। प्रत्येक पद अपने में संगीत के निधि बटोरे हुए हैं। उदाहरणार्थ–

**जय जय भैरवि असुर भयाउनि**
**पशुपति भामिनि माया।**
**सहज सुमति बर दिअ हे गोसाउनि**
**अनुगति गति तुअ पाया।।२।।**
**बासर-रैनि शबासन शोभित**
**चरन, चन्द्रमनि चूड़ा।**
**कतओक दैत्य मारि मुँहमेलल,**
**कतओक उगिलि कटल कूड़ा।।४।।**
**घन घन घनन घुघुर कत बाजए,**
**हन हन कर तुअ काता।**
**विद्यापति कवि तुअ पद सेवक,**
**पुत्र विसरू जुनि माता।।**

माधुर्यपूर्ण कोमलकान्त पदावली के प्रयोग में विद्यापति अनेक स्थलों पर जयदेव के समकक्ष प्रतीत होते हैं। यथा–

**'ललितलवंगलतापरिशीलन कोमलमलयशरी**
**मधुकरनिकरकरम्बितकोकिलकुजितकुंजकुटीरे**
**–'गीतगोविन्दम्' : जयदेव**

विद्यापति–

**'नव वृन्दावन नविन तरूगण नव-नव विकसित फूल**
**नविन वसन्त नविन मलयानिल मातल नव अलिकुल।**
**विहरइ नवलकिशोर।**

भाषा की मधुरिमा एवं भावों की हृदयग्राहिता को अधलिखित पद में देखा जा सकता है–

**'कुसुमित कानन हेरि कमलमुखि मूँदि रए दु नयान।**
**कोकिल कलरव मधुकर धुनि सुनि कर देई झाँपईका**

**जयदेव - विहरति हरिरिह सरसवसन्ते विलसति युवतिजे**

**नवल रसाल-मुकुल-मधु मातल, नव कोकिलकुम विभोर**

यहाँ अन्धानुकरण नहीं है, बल्कि कल्पना के विविध रंग बहुत सुन्दरता से भरे गए हैं, जिससे पदावली का रंग और निखर आया है।

विद्यापति के पदों पर पूर्ववर्ती संस्कृत काव्य एवं कवियों का प्रभाव दीखता है, यथा-भागवत, कालिदास, भारवि, श्रीहर्ष, अमरूक, गोवर्धनाचार्य (आर्याशप्रशती), जगन्नाथ (भामिनीविलास), श्रृङ्गारतिलक इत्यादि।

**कालिदासरचित 'अभिज्ञानशाकुन्तलम्' के पद्य**
**'दर्भाङ्कुरेण चरणः क्षत इत्रूकांडे तन्वी स्थिता कतिचिदेव पदानिः**

आसीद् विवृतवदना च विमोचयन्ती शाखासुवल्कलमसक्तमद्रुमाणा के भाव की अनुच्छाया विद्यापति के निम्न पद में पायी जाती है।

विद्यापति- नहाइ उठल तीर राइ कमलमुखि। समुख देरल गुरूजन संग लाज धनि नतमुखि। कइसन हरेव बयां सखि हे अपरूप चातुरी गोरि। सब जन तेजि कस अगुसरि संचरि। आड़ बदन तहँ केतहँ पुनि मोतिहार तोरि केंकल। कटहल हार टूटि गेल। सब जन एक-एक चुनि सञ्चरू। स्यामदरस धनि ले नयन चकोर कान्हु मुख ससिबर। कएल अमिब रसपान।

कालिदास और विद्यापति दोनों कवियों की नायिका प्रिय को देखने के लिए बहाना बनाती हैं। शकुन्तला दर्भ से पाँव बिंध जाने एवं बल्कलवस्त्र के तरूशाखाओं में उलझ जाने का बहाना बनाकर मुँह मोड़कर दुष्यन्त की ओर देखती है, जबकि राधा अपनी मोतियों की माला तोड़ मोतियों को बिखेर देती है और अपनी सखियों को मोतियों को चुनने में लगाकर कृष्ण-दर्शन का अवसर प्राप्त करती है। दोनों कवियों ने अपनी नायिकाओं की कामचेष्टाओं का उनकी प्रकृति और परिस्थिति के अनुरूप चित्रण किया है। कालिदास की शकुन्तला तपोवनवासिनी, भोली-भाली, लज्जाशील ऋषिकन्या है, जबकि विद्यापति की राधा एक अधिक प्रगलभा चतुर नायिका है। शकुन्तला और राधा दोनों की चेष्टाएँ उनकी प्रकृति के अनुकूल हैं पर शकुन्तला का पैर में कांटे गड़ने का बहाना स्वाभाविक होकर कष्ट की भावना को अभिव्यक्त करता है जो प्रिय के लिए अधिक उपयुक्त नहीं है दूसरी ओर विद्यापति की राधा अपनी सखियों को बिखरे हुए बहुमूल्य मोती को चुनने में व्यस्त बनाकर कृष्ण को देखने व पर्याप्त एवं उपयुक्त अवसर ढूँढ निकालती है।

कालिदास और विद्यापति की इन उक्तियों में पर्याप्त भावसाम्य है। दोनों कवियों ने अपने-अपने ढंग से नायिका के सौन्दर्य का चित्र खींचा है।

आर्यासप्तशती-

**लिखयति न गणायति रेखा निर्भर वाल्याम्बुधौत**
**अवधिदिवसावसानम का बभूव इति शंकिता**

विद्यापति-

"गमन अवधि तुअ न भेल बिशेख, भीत मरिगेल दिने
ताहि मेहि के अओ न सुनावे, बदन सिचय केओ लए धावे।।"

माघ-

वासांसि न्यवसत यानि योषितस्ताः शुभ्रा म्रद्युतिभिरहासिन्तै मुंदे
अत्याक्षुः स्नपनगलज्जस्यानि यानि स्थूलाश्रुस्रुतिभि ररोदि तैः शुः ८/५त्र६६

विद्यापति-

'सजल चरि रह पयोधर सीमा। कनक बेल जनि पड़ि गेल हीमा

ओ नुमि करतहि चाहि किए देहा। अबहि छोड़ब मोति तेजब नेहा

ऐसन रस नहि पाओब आरा। दूथे लागि रोइ गरए जलधारा

इस में माघ की नायिका स्नान करने के पश्चात् वस्त्र परिवर्तन कर रही है और विद्यापति की नायिका अभी-अभी नहाकर सरोवर से निकली है। माघ की नायिका के अंगों के स्पर्शजनित सुख-अनुभव करके नए वस्त्र  रहे हैं और बेचारा गीला वस्त्र उसके शरीर से वियुक्त होने के कारण जलबिन्दुओं के रूप में आँसू बहा रहा है। दूसरी ओर विद्यापति की सद्यः स्नाता नायिका का भींगा परिधान शरीर से बिछुड़ने की आशंका से आँसू बहाते हुए नायिका के शरीर से लिपट कर उससे पृथक् नहीं होना चाहता, माघ की उक्ति में पर्याप्त विदग्धता एवं रमणीय है। पर, विद्यापति की गीले वस्त्र के नायिका कें अंगों लिपट कर छिपने की कल्पना अनूठी और हृदयग्राही बन पड़ी है। जहाँ माघ ने गीले वस्त्र का रूदनमात्र व्यक्त किया है, वहाँ विद्यापति ने उसके छिपकर अंगों में लिपटकर कर रोने की कल्पना करके नायिका के शरीर के प्रति उदासीन अनुराग कवि के अतिशय्य की व्यंजना की है।

भारवि-

तिरोहितान्तानि नितान्तमाकुलैसां विगाहावलकैः प्रसारिभिः
ययुर्वधूना वदनानि तुल्यतां द्विरेकवृन्दान्तरितैः सरोरूहैः।। किराता. ८/४७

विद्यापति-

जाइल पेखल नहाएलि गोरी, कति सयं रूप धनि आनिल चोरी
केस निगारइत बहजलधारा। चमर गरए जनि मोतिय हारा
अलकहिं तीतल तैं अति सोभा। अलिकुल कमल बंढ़ल मधुलेभा

महाकवि भारवि और विद्यापति दोनों ने भींगे हुए केशों से घिरे हुए नायिका के मुख की तुलना भ्रमरे से आच्छादित कमल से की है। भारवि के द्विरेफ रितैः सरोरूहैः' इन शब्दों तथा विद्यापति के 'अलि कमल

बेढ़ल' इन शब्दों में भावसाम्य है। परन्तु, विद्यापति ने भींगे हुए बालों की तुलना मधुपान निरत (मधुलोभी) भ्रमरों से करके इस प्रसंग को उद्भावना द्वारा अधिक आकर्षक बनाया है।

विद्यापति ने पूर्ववर्ती संस्कृत कवियों से प्रेरणा ग्रहण करके अपनी पदावली में अनेक पदों की रचना की लेकिन इसके साथ-ही-साथ उन्होंने उन भावों को अत्यन्त चमत्कारपूर्ण ढंग से प्रस्तुत किया है। कल्पना के विभिन्न रंग इतनी सुन्दरता से भरे गए हैं जिससे पदावली का रंग और निखर आया है। संस्कृत के स्तोत्र साहित्य और श्रीमद्भागवत का प्रभाव भी विद्यापति की शैली तथा उसके नायक पर दीख पड़ता है किन्तु पदावली में प्रस्तुत श्रृंगार के विभिन्न पक्षों और अवस्थाओं, अनेक कोटि की नायिकाओं तथा नारी-सौन्दर्य के चित्रण देखकर कवि की प्रेरणाओं का अनुमान का दायरा वात्स्यागन के 'कामसूत्र' तथा भरत के नाट्यशास्त्र तक हो जाता है।

विद्यापति ने लोकभाषा मैथिली के माध्यम से अपने को जनमानस तक पहुँचते देखा है। इस भाषा में रचित उनके पद उनके जीवनकाल में ही इतने लोकप्रिय हो गए थे कि राजमहलों से लेकर कुटिया तक और मंदिर से लेकर कोहबर (नवदम्पति के प्रथम मिलन स्थान) तक जन मानस इसको सस्वर गाते-झूमते इनकी मधुरता का आस्वादन करने लगा था।

आज भाषा के आधार पर देश में झगड़े चल रहे हैं। दक्षिण भारतीय उत्तरभारतीय भाषा को स्वीकार नहीं कर रहे हैं, मराठी भाषा को लेकर अलग विवाद है। ऐसे विकट परिस्थिति में यदि मैथिली भाषा और विद्यापति के संस्कृत से जोड़कर तथा अन्य आधुनिक भारतीय भाषा का सामंजस्य स्थापित कर अध्ययन किया जाए तो भाषा के आधार पर राष्ट्रीय एकता की समस्या का समाधान स्वयं समाप्ति हो जायेगा।

■ पता : C/o जयप्रकाश नारायण राष्ट्रिय संस्कृत संस्थान जनकपुरी, नई दिल्ली

# प्राच्यनव्यदृष्ट्या प्रातिपदिकार्थेतिसूत्रस्थप्रातिपदिकार्थस्वरूपमीमांसा

■ **ब्रजभूषणओझाः**

भगवता पाणिनिना शब्दसाधुत्वबोधनायाष्टाध्यायी विरचिता। अस्यामष्टाध्याय्यां **"ङ्याप्प्रातिपदिकात्[१]"** इति सूत्रं समधिकृत्य ङ्यन्ताद् आबन्तात् प्रातिपदिकाच्च परे विभक्तिसञ्ज्ञकाः स्वादिप्रत्यया विहिताः। तत्र स्वादिविभक्तिनामर्थविशेषस्यानिर्देशात् **"अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे[२]"** इति परिभाषया स्वार्थे विधानापत्तौ स्वादिविभक्तीनां **पर्यायतापत्तिः** स्यात्। न च **द्व्येकयोर्द्विवचनैकवचने[३] बहुषु बहुवचनम्[४]** इति सूत्राभ्याम् एकवचनादिविभक्तीनाम् एकत्वाद्यर्थविशेषनिरूपणान्न पर्यायतापत्तिरिति वाच्यम्, एकत्वाद्यर्थविशेषनिरूपणेन एकवचनस्य द्विवचनेन साकम्, द्विवचनस्य बहुवचनेन साकम्, बहुवचनस्य एकवचनेन साकं द्विवचनेन साकं वा पर्यायतापत्तिवारणेऽपि प्रथमादिषु एकवचनानां द्विवचनानां बहुवचनानाञ्च पर्यायत्वं वारयितुम् अशक्यत्वात्। तथा सति "राममानय" "रामाय आनय" इत्यादिवाक्यात् अर्थविशेषानवगमः। अतो विभक्तीनां पर्यायतापत्तिं वारयितुं विभक्तीनामर्थविशेषं निरूपयितुं भगवता अनभिहिते[५] इति सूत्रं समधिकृत्य **"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा[६]"** **"सम्बोधने च[७]"** **"कर्मणिद्वितीया[८]"** इत्यादीनि सूत्राणि प्रणीतानि। तत्र प्रथमादिषु सप्तषु विभक्तिषु प्रथमाविभक्त्यर्थविधायकं **'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' 'सम्बोधने च'** इति सूत्रद्वयं भगवता पाणिनिना अलेखि। तत्र प्राच्यनव्यदृष्ट्या प्रातिपदिकार्थेति सूत्रस्थप्रातिपदिकार्थस्वरूपं समासादिनिर्देशपूर्वकं विविच्यते।

प्रथमाविभक्त्यर्थविधायकम् अष्टाध्याय्याः द्वितीयाध्यायस्य तृतीयपादस्य षट्चत्वारिंशत्तमं **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा"** इति सूत्रं विद्यते। अत्र सूत्रे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे इति समस्तं सप्तम्यन्तं पदम्, प्रथमेति प्रथमान्तञ्च पदं विद्यते।

घटितबुद्धौ घटकज्ञानं कारणम्, वाक्यार्थज्ञाने पदार्थज्ञानं कारणं वेति रीत्या सूत्रघटकपदार्थज्ञानमन्तरा वाक्यात्मकसूत्रस्यार्थबोधानुदयात्समासादिभेदादेकस्यैव पदस्य भिन्नार्थत्वदर्शनाच्च पदार्थज्ञानाय सर्वप्रथमं विग्रहवाक्यतदर्थप्रदर्शनपूर्वकं विग्रहवाक्ये प्रयुक्तपदानामौचित्यानौचित्य-विचारपूर्वकञ्च समासादिकं विविच्य सूत्रस्थप्रातिपदिकार्थस्वरूपं विविच्यते-

पदं पदं प्रतीति प्रतिपदम्, प्रतिपदमर्हतीति प्रातिपदिकम्, प्रातिपदिकस्यार्थः प्रातिपदिकार्थः, प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणं च वचनं चेति प्रातिपदिकार्थलिङ्गपरिमाणवचनानि, प्रातिपदिकार्थलिङ्ग-परिमाणवचनानि एव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम्, तस्मिन् प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे इति सूत्रस्थसमस्तसप्तम्यन्तपदस्य विग्रहवाक्यं सर्वत्र व्याख्यानेषु परम्परासु चोपलभ्यते।

अत्र कैश्चित्-पदं पदं प्रतीति विग्रहवाक्ये द्वित्वेनैव वीप्साया उक्तत्वेन पुनस्तस्यामेव प्रतिशब्दप्रयोगोऽन्याय्यः "उक्तार्थानामप्रयोग" इति न्यायस्य जागरूकत्वात्। यत्र च कल्पिते-पद अम् प्रति इति वाक्ये द्वित्वाभावस्तत्र प्रतिशब्दस्य प्रयोगो न्याय्य इति भणितम्। तन्न युक्तमुक्तार्थानामप्रयोग इति न्यायस्यानित्यत्वान्न्यायस्येष्टस्थले प्रवृत्तावपि, "सरूपाणामेकशेष एकविभक्तौ" इति सूत्रस्यावश्यकत्वप्रदर्शनावसरे "प्रत्यर्थं शब्दाभिनिवेश[९] इति वाक्यार्थप्रतिपादनेऽर्थमर्थं प्रतीति विग्रहप्रदर्शनेनेदृशे विषयेऽप्रवृत्तिस्वीकाराच्च। अतो द्वित्वेन वीप्साया उक्तत्वेऽपि प्रतिशब्दस्य प्रयोगो न्याय्यः।

यत्तु द्वित्वस्य प्रतिशब्दस्य च द्योतकत्वाद् द्योतकविषये च न्यायस्याप्रवृत्तिस्वीकारेण न दोष इति समाहितम्, तत्तु भाष्यासम्मतम्। भाष्यकृता हि द्योतकविषयेऽपि न्यायस्य सञ्चारितत्वात्। तत्र भाष्ये-अध्यागच्छतीत्यादावागच्छतीत्यतोऽनतिरिक्तार्थयोरधिपर्योरूक्तन्यायेन प्रयोगाभावमाशङ्क्य, "द्वौ अपूपौ" इत्यादौ उक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम्। एतच्च-"अनभिहिते" इति सूत्रस्थशेखरे प्रतिपादितम्।

प्रतिपदमर्हतीत्यर्थे "तदर्हति[१०]" इति शास्त्रेण द्वितीयान्तात् प्रतिपदशब्दादर्हतीत्यर्थे ठञि प्रत्यये प्रातिपदिकशब्दः साधुत्वमवाप्नोति। यद्यपि भगवता प्राणिनिना प्रातिपदिकपदनिष्ठशक्त्यवधारणाय **"अर्थवद ।ातुरप्रत्ययः प्रातिपदिकम्[११]"**, **"कृत्तद्धितसमासाश्च[१२]"** इति सूत्रद्वयमुपदिष्टम्। तथाऽपि सूत्रद्वयबोधितार्थस्य प्रातिपदिकशब्दव्युत्पत्त्याऽपि लाभः सम्भवतीति कृत्वा यतन्ते वैयाकरणाः।

तत्र महावैयाकरणैर्लक्ष्मीटीकाकृद्भिः प्रतिपदमुद्देश्यतया[१३] लब्धुमर्हति यत् तत् प्रातिपदिकमिति विग्रहं प्रदर्शयद्भिः प्रतिपदमर्हतीति विग्रह उद्देश्यतया, लब्धुमिति पदद्वयमध्याहृत्य पदपदं प्रातिपदिकसञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मवत्परमुद्देश्यतावच्छेदकधर्मो धातुप्रत्ययप्रत्ययान्तभिन्नार्थवत्त्वकृदन्ततदादित्त्वतद्धि-तान्ततदादित्वसमासत्वैतदन्यतमरूप इति च स्वीकृत्य सूत्रोपात्तार्थस्य व्युत्पत्त्याऽपि लाभः कृतः।

अत्रेदं तात्पर्यम्-प्रतिपदमर्हतीति विग्रहे प्रतिपदमित्यत्र द्वितीया विभक्तिः। सा च कर्मणि। कर्मणः क्रियाकाङ्क्षायाम् योग्यभवनार्थक-स्यार्हतेरकर्मकत्वादन्वयाभावेन लब्धुमित्यस्याध्याहार आवश्यकः। केन रूपेण लब्धुमिति जिज्ञासायामुद्देश्यत्वं विधेयत्वं निमित्तत्वं चेति त्रितयमुपस्थितं भवति। उद्देश्यत्वं विहाय विधेयत्वेन निमित्तत्वेन वा प्रतिपदं लब्धुमर्हति यत् तत् प्रातिपदिकमित्यर्थस्वीकारे पदशब्देन उपस्थितस्य सुबन्ततिङन्तस्य भसञ्ज्ञकभिन्नायाः प्रकृतेश्च प्रातिपदिकनिष्ठोद्देश्यतानिरूपिताविधेयत्वाभावेन प्रातिपदिकस्य पदनिमित्तकत्वाभावेन च वृत्तिविग्रहयोः समानार्थकत्वभङ्गापत्तिः। उद्देश्यता प्रतिपदं लब्धुमर्हतीत्यर्थे प्रातिपदिकस्य पदोद्देश्यकत्वाभावेन सैवापत्तिः। अतः पदपदस्य शास्त्रबोधितार्थं परित्यज्योपर्युक्तं पारिभाषिकमर्थं स्वीकृत्य प्रतिपदमुद्देश्यतया लब्धुमर्हति यत् तत् प्रातिपदिकमित्यर्थः स्वीकृतः। तथा च प्रतिपदं प्रत्येकपद्ं (सकलं पदम्), धातुभिन्नं, प्रत्ययभिन्नं, प्रत्ययान्ततदादिभिन्नमर्थवच्छब्दस्वरूपं, कृदन्तं, तद्धितान्तं समासञ्चोद्देश्य-तयोद्देश्यविधया लब्धुं प्राप्तुमर्हति यत् तत् प्रातिपदिकमिति फलितार्थः।

वस्तुतस्तु पदशब्दस्य पारिभाषिकार्थत्वकल्पने प्रमाणाभावाद् गौरवाच्च पदपदस्य शक्तार्थकत्वकल्पनमेव युक्तम्। न च धातोः प्रत्ययस्य प्रत्ययान्ततदादेश्च शक्त्याश्रयत्वेन दोष इति वाच्यम् "अधातुरप्रत्यय" इति पर्युदासबलेन धात्वादिभिन्नस्यैव शक्त्याश्रयस्यात्र विग्रहवाक्यात्।

यत्तु प्रतिपदमर्हति इति प्रातिपदिकमिति विग्रहवाक्यात् प्रातिपदिकशब्दस्य नपुंसकत्वमवगम्यते, तन्न युक्तं प्रातिपदिकशब्दस्य कोपधत्वात् "कोपधः[१४]" इति लिङ्गानुशासनेन प्राप्तं पुंस्त्वं प्रबाध्य **"चिबुकशालूक प्रातिपदिकांशुकोल्मुकानि नपुंसके[१५]"** इति लिङ्गानुशासनेन प्रातिपदिकशब्दस्य नपुंसकत्वविधानात्। वस्तुतस्तु लिङ्गानुशासनस्य भाष्यकृता "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य[१६]" इत्युक्त्वा प्रत्याख्यातत्वात्। **"अर्थवदधातुरप्रत्ययः प्रतिपदिकम्[१७]"** इत्याचार्यव्यवहाराल्लोकाच्च प्रातिपदिकशब्दस्य नपुंसकत्वमवधेयम्।

परे तु प्रतिपदं प्रतिपदे वा भवमिति प्रातिपदिकमिति प्राहुः। परन्त्वत्राऽपि भवतीति तिङ्न्तात्मके पदे प्रातिपदिकस्याविद्यमानत्वाद् विग्रहवाक्यस्यासङ्गतिः। अतोऽस्मिन् पक्षेऽपि विग्रहवाक्यघटकपदशब्दस्य सुबन्तनामधातुघटिततिङन्तोभयमात्रपरकत्वं कल्पनीयम्। अस्यां स्थितौ भवतीत्यादौ घटकतया प्रातिपदिकस्याविद्यमानत्वेऽपि न क्षतिः।

प्रातिपदिकस्यार्थः प्रातिपदिकार्थ इति "षष्ठी[१८]" इति सूत्रेण तत्पुरूषः। अत्रार्थशब्दः–अर्थ्यते बुध्यते यः इत्यर्थे "अर्थ उपयाच्ञायाम्[१९]" इत्यस्माद् धातोः धातूनामनेकार्थत्वाद् बोधकर्मणि" "अकर्तरि[२०]" च कारके संज्ञायाम्" इति सूत्रेण घञि कृते साधुतां याति। स्वस्वरूपावबोधनाय प्रातिपदिकमर्थयते यः सः प्रातिपदिकार्थ इति व्युत्पत्ति स्वीकृत्यार्थधातोः याच्ञार्थकत्वेऽपि **"कर्मण्यण्"** इति सूत्रेणापि उपपदसमासे प्रातिपदिकार्थशब्दस्य साधुत्वं वक्तुं शक्यते।

परन्तु यत्र केवलमर्थशब्दस्य प्रयोगस्तत्र पूर्वोक्तकल्पनाया आवश्यकत्वेन पूर्वोक्तपक्ष एव ज्यायान्। प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्चेति प्रातिपदिकार्थलिङ्गपरिमाणवचनानि इतीतरेतरयोगद्वन्द्वः। **प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव** प्रातिपदिकार्थ-लिङ्गपरिमाणवचनमात्रमिति "मयूरव्यंसकादयश्च[२१]" इति सूत्रेण तत्पुरूषसमासः। एवशब्देन विग्रहो मात्रशब्देन च समासः, समासस्य नित्यत्वावबोधनाय।

"द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति नियमेन द्वन्द्वान्ते श्रूयमाणस्य मात्रशब्दस्य प्रत्येकं द्वन्द्वावयवैः सहान्वयः। तथा च कौमुदीग्रन्थः–"मात्रशब्दस्य[२२]" प्रत्येक योगः" इति।

वस्तुतस्तु, प्रत्येकं द्वन्द्वघटकपदार्थानां मात्रशब्दार्थेऽन्वयो न तु मात्रशब्दार्थस्य प्रत्येकं द्वन्द्वघटकपदार्थेऽन्वयः। "मात्रशब्दस्य प्रत्येकं योगः" इति कथनं तु फलितार्थमादाय। अन्ये तु–"द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इत्याहुः। अत्रान्तशब्दः समीपबोधकः। सामीप्यञ्च क्वचित् पूर्वकृतं क्वचिच्च परकृतम्। अत्र सूत्रे परकृतं सामीप्यं **"अधिशीङ्स्थासाङ्कर्मेति[२३]"** सूत्रे च पूर्वकृतं सामीप्यम्। मात्रशब्दस्य द्वन्द्वान्त्यावयवत्वाभावादन्वयानुपपत्तिर्न शङ्क्या, परिभाषायामन्तशब्दस्य समीपवाचित्वात्। साहित्य एव द्वन्द्वः। साहित्यं च एकधर्मावच्छिन्नस्यैक-धर्मावच्छिन्नसंसर्गेणैक-धर्मावच्छिन्नेऽन्वयः। तन्मूलेयं परिभाषा। अत्र सूत्रे परिमाणपदं परिच्छेदकसामान्यपरं न तु "परिमाणं तु सर्वत" इति परिमाणविशेषपरम् उन्मानादिवाचकतुलादिशब्दादपि प्रथमाया इष्टत्वात्। अत्र वचनशब्दः संख्यापरः। "वचनं संख्या" इति प्राचां व्यवहारात्। अत्र प्रातिपदिकार्थविषये प्राचां नव्यानाम् अस्ति मतभेदः। सर्वादौ दीक्षितसम्मतमेतत्सूत्रघटकप्रातिपदिकार्थस्वरूपं सयुक्तिकं प्रतिपाद्यते–

## अत्र सूत्रे दीक्षितसम्मतः प्रातिपदिकार्थः

प्रातिपदिकार्थेतिसूत्रे स्वार्थः, द्रव्यम्, लिङ्गं, संख्या कारकञ्चेति पञ्चकं प्रातिपदिकार्थ इति पक्षे लिङ्गसंख्याग्रहणस्य स्वार्थः द्रव्यं लिङ्गञ्चेति त्रिकं प्रातिपदिकार्थ इति पक्षे लिङ्गग्रहणस्य च वैयर्थ्यादत्र सूत्रे प्रातिपदिकार्थपदेन नियतोपस्थितिकोऽर्थो गृह्यत इति प्राचीना दीक्षितादयः तथा चाह भट्टोजिदीक्षितः कौमुद्याम्–"नियतोपस्थितिकः[२४]" प्रातिपदिकार्थ" इति। तत्र किन्तावत् नियतोपस्थितिकार्थत्वमिति जिज्ञासायां प्रकृतिप्रत्ययसमासादिनिर्देशपूर्वक नियतोपस्थितिकार्थत्वं प्रतिपाद्यते–

नियता उपस्थितिर्यस्य असौ नियतोपस्थितिकः। अत्र निपूर्वकयमधातोर्व्यापकत्वमर्थः क्तप्रत्ययस्य आश्रयतावान् अर्थः षष्ठ्यर्थश्च विषयता। धात्वर्थव्यापकत्वस्य निरूपितत्वसम्बन्धेन क्तप्रत्ययार्थैकदेशे आश्रयतायामन्वयः। क्तप्रत्ययार्थस्याश्रयतावतः अभेदसम्बन्धेनोपस्थितावन्वय उपस्थितेश्च निरूपितत्वसम्बन्धेन षष्ठ्यर्थविषयतायामन्वयः तथा च व्यापकतानिरूपिताश्रयतावदभिन्नोपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति प्रातिपदिकार्थलक्षणं निष्पद्यते।

घटितबुद्धौ घटकज्ञानस्य कारणत्वात् निपूर्वकयमधात्वर्थज्ञानमन्तरा निपूर्वकयमधातुघटितनियतोपस्थितिक-पदार्थज्ञानासम्भवेन निपूर्वकयमधातोर्व्यापकत्वमर्थ इति सर्वत्र प्रतिपादितम्।

अत्रेदमाक्षिप्यते कैश्चित्-निपूर्वकयमधातोर्व्यापकत्वमर्थ इति कथनं वैयाकरणसिद्धान्तविरूद्धम् फलव्यापारयोरेव धात्वर्थत्वेन वैयाकरणैरङ्गीकृतत्वात्। उक्तञ्च भूषणसारे-

**''फलव्यापारयोर्धातुराश्रये[२५] तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।''** इति।

तन्न, व्यापकत्वस्य व्याप्त्यनुकूलव्यापारात्मकत्वेन सिद्धान्तविरोधाभावात्। अयं भावः-क्रियाप्रवृत्तिनिमित्त-पाचकशब्दात् त्वप्रत्यये कृते निष्पन्नस्य पाचकत्वशब्दस्य ''भावप्रत्ययस्य या प्रकृतिः तदुपस्थापितो योऽर्थः तत्र प्रकारीभूतो योऽर्थः स एव भावप्रत्ययस्यार्थ इति नियमेन त्वप्रत्ययप्रकृतिपाचकशब्दोपस्थापिते विक्लित्यनुकूलो व्यापाराश्रयेऽर्थे प्रकारीभूतो विक्लित्यनुकूलव्यापारोऽर्थः। तद्वत् प्रकृतेऽपि त्वप्रत्ययप्रकृति-व्यापक- शब्दोपस्थापिते व्याप्त्यनुकूलव्यापाराश्रयेऽर्थे प्रकारीभूतो व्याप्त्यनुकूलव्यापारो व्यापकत्वशब्दार्थः व्यापकताया यत्किञ्चिन्निष्ठ-व्याप्यतानिरूपितत्वेन, यत्किञ्चिन्निष्ठव्याप्यतानिरूपितव्यापकत्वस्य सर्वत्र सत्त्वेन च उपस्थितिनिष्ठव्यापकता किन्निष्ठव्याप्यतानिरूपितेति जिज्ञासायामाह शेखरकारो नागेशभट्टः-यस्मिन् प्रातिपदिके[२६] उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स इतीति। शेखरकृता प्रातिपदिकनिष्ठव्याप्यतानिरूपितैवोपस्थितिनिष्ठा व्यापकताङ्गीकृता। तथाविधव्यापकतास्वीकारे प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकता-निरूपिताश्रयतावदभिन्नो-पस्थितिनिरूपिता विषयताश्रयत्वं प्रातिपदिकार्थ-त्वमिति लक्षणं निष्पन्नम्। समन्वयो यथा यत्र यत्र वक्त्रा श्रीप्रातिपदिकमुच्चार्यते तत्र तत्र श्रोतुरात्मनि श्रीपदविषयकं श्रावणप्रत्यक्षमुत्पद्यते तदनन्तरं तस्मिन्नेवात्मनि श्रीश्रीत्वयोस्तत्सम्बन्धस्य स्त्रीत्वस्त्रीत्वत्वयोस्तत्सम्बन्धस्य च नियमेनोपस्थितिजार्यते। स्वौजस्समभिव्याहृतं श्रीपदम् अमादिविभक्तिसमभिव्याहृतं वा श्रीपदं स्यात्सर्वत्रैव पूर्वोक्तानाम् अर्थानामुपस्थितिर्नियमेन भवत्येव। अतः पूर्वोक्तानामर्थानां श्रीप्रातिपदिकात् नियमेनोपस्थित्या श्रीप्रातिपदिकप्रातिपदिकार्थत्वम्। अतस्तावन्मात्रबोधविवक्षायाम् प्रातिपदिकार्थेतिसूत्रात्प्रथमाविभक्तिः। वह्निः धूमं व्याप्नोतीति वाक्ये विपूर्वकाप्धातोर्व्याप्त्यनुकूलव्यापारोऽर्थः। तत्र व्याप्तिरूपफलाश्रयत्वेन धूमस्य कर्मता व्याप्यता च तदनुकूलव्यापाराश्रयत्वेन वह्नेर्व्यापकता कर्तृता चेति, तद्वत् प्रकृतेऽपि उपस्थितिः प्रातिपदिकं नियमयति (व्याप्नोति) इति वाक्ये व्याप्तिरूपफलाश्रयत्वेन प्रातिपदिकस्य व्याप्यत्वं कर्मत्वञ्चेति प्रतीयते तदनुकूलव्यापाराश्रयत्वेनोपस्थितेर्व्यापकत्वं कर्तृत्वञ्चेति प्रतीयते। एवञ्च व्यापकत्वस्य फलानुकूलव्यापारात्मकतया न फलव्यापारयोर्धातुरिति सिद्धान्तविरोधः।

न च निपूर्वकयमधातोर्व्यापकत्वार्थस्वीकारे साहचर्यनियमो व्याप्तिमिति वचनविरोधः, एतदुक्त्या निपूर्वकयमधातोर्व्यापारांशं परित्यज्य व्याप्तिरूपफलमात्रपरकत्वात्। एवञ्च निपूर्वकयमधातोर्व्यापकत्वमर्थं स्वीकृत्य

व्यापकता-निरूपिताश्रयतावदभिन्नोपस्थितिनिरूपितविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति परिष्करणं सुस्थिरम्। कर्मत्वादीनां श्रीशब्दवाच्यत्वेऽपि अनियतोपस्थितिकत्वेन कर्मत्वादिविवक्षायां मात्रग्रहणात् द्वितीयादिविभक्तिर्यथाशास्त्रम्।

अत्र नियतोपस्थितिकार्थस्य प्रातिपदिकार्थशब्देन ग्रहणात् सूत्रे मात्रशब्दग्रहणाच्च तटशब्दादनियतोपस्थिति-कस्य स्त्रीत्वादिलिङ्गस्य तटशब्दप्रातिपदिकार्थत्वाभावात् तदाधिक्ये प्रथमाविधानाय सूत्रे लिङ्गग्रहणं सार्थकम्।

न च तटशब्दात् स्त्रीत्वादिलिङ्गापेक्षया तटत्वादिप्रातिपदिकार्थस्यापि भानेन मात्रशब्दग्रहणात् तदाधिक्ये प्रथमाविभक्त्यप्राप्तिरिति वाच्यम्, प्रातिपदिकार्थं विहाय कस्यापि प्रातिपदिकस्य लिङ्गमात्रे वृत्यभावादुदाहरणा-प्रसिद्ध्या पुनरपि लिङ्गग्रहणवैयर्थ्यस्य तदवस्थत्वान्मात्रपदेन प्रातिपदिकार्थेतरस्यैव व्यावृत्या स्त्रीत्वादिलिङ्गापेक्षया प्रातिपदिकार्थस्याधिक्येऽपि तटशब्दात् प्रथमासिद्धेः। एवञ्च अलिङ्गाः उच्चै नीचैः इत्यादयः अव्ययशब्दाः नियतलिङ्गाः कृष्णः श्रीः ज्ञानम् इत्यादयः शब्दाश्च प्रातिपदिकार्थमात्रे इत्यस्य उदाहरणानि सन्ति।

अनियतलिङ्गाः तटः तटी तटम् इत्यादयः शब्दाः प्रातिपदिकार्थमात्रे इत्यस्य उदाहरणानि न भवन्ति, लिङ्गस्य अनियतोपस्थितिकत्वेन प्रातिपदिकार्थत्वाभावात्, अतोऽत्र लिङ्गमात्राधिक्ये प्रथमाविधानाय लिङ्गग्रहणं सार्थकम्। तथा चोक्तं कौमुद्याम्-

अनियतलिङ्गास्तु[२७] लिङ्गमात्राधिक्यस्य। तटः, तटी, तटम्। दीक्षितोक्तस्य नियतोपस्थितिकः प्रातिपदिकार्थः इत्यस्य निर्मूलत्वं न शङ्क्यम्। यमर्थं प्रातिपदिकं न व्यभिचरति सोऽर्थः प्रातिपदिकार्थ इति कैयटोक्त्या उक्तार्थस्य अर्थतो लाभात्।

## अत्र सूत्रे नागेशसम्मतः प्रातिपदिकार्थः

सूत्रे लिङ्गसङ्ख्याग्रहणसामर्थ्यात् प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रयोरेव[२८] ग्रहणमिति नागेशः। तथा सति नियतलिङ्गकस्थले अनियतलिङ्गकस्थले वा लिङ्गस्य अप्रातिपदिकार्थत्वात् लिङ्गमात्राधिक्ये प्रथमाविधानाय लिङ्गग्रहणं सार्थकम्। संख्याग्रहणमुक्तार्थानामप्रयोगः इति न्यायस्य अनित्यत्वज्ञापनार्थम् इत्यत्र न दीक्षितनागेशयोर्वैमत्यम्। एवञ्च रामः, कृष्णः, श्रीः, ज्ञानम् इति नियतलिङ्गकस्थले तटः तटी तटम् इत्यत्र अनियतलिङ्गकस्थले च नागेशमते लिङ्गमात्रे प्रथमा इत्यंशेनैव प्रथमा जायते। प्रातिपदिकार्थमात्रे प्रथमा इत्यंशस्य तु अलिङ्गाः उच्चैः नीचैः इत्यव्ययशब्दाः लिङ्गप्रवृत्तिनिमित्तकाः स्त्री पुमान् नपुंसकम् इति शब्दाश्च नागेशमते उदाहरणानि सन्ति। यतो हि-उच्चैःशब्देन उच्चैस्त्वम् इति प्रवृत्तिनिमित्तं तदाश्रयः उच्चैरिति च प्रतीयते। एवमेव स्त्रीपुंनपुंसकशब्दैः स्त्रीत्वादिलिङ्गरूपस्य प्रवृत्तिनिमित्तस्य स्त्र्यादिरूपतदाश्रयस्य च भानात् तेभ्यः प्रातिपदिकार्थमात्रे प्रथमा इत्यंशेनैव प्रथमा जायते। प्रातिपदिकार्थशब्देन यथा मुख्यः अर्थः गृह्यते तथैव आरोपितप्रवृत्तिनिमित्ताश्रयः गौणोऽपि गृह्यते। अत एव गोपालनकर्तृत्वविशिष्टे मुख्ये पुंसि प्रवर्तमानः गोपशब्दः यदा पुंयोगाद् आरोपितगोपालनकर्तृत्वविशिष्टे स्त्रीरूपे गौणे अर्थे प्रयुज्यते। तदापि लिङ्गविशिष्टपरिभाषया गोपीशब्दस्य प्रातिपदिकत्वेन तस्मात् प्रथमाविभक्तिर्जायते। एवञ्च प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रयमात्रस्य ग्रहणात् कृष्णः श्रीः ज्ञानम् इति नियतलिङ्गकस्थले तटः तटी तटम् इत्यत्र अनियतलिङ्गकस्थले च प्रातिपदिकार्थापेक्षया लिङ्गाधिक्यस्य सत्वात् प्रथमाविभक्तेरप्राप्तौ तत्र प्रथमाविधानाय लिङ्गग्रहणं सार्थकं भवति। अन्यथा स्वमोर्नपुंसकात् इत्यादिशास्त्रप्रामाण्यात् लिङ्गस्यापि प्रातिपदिकार्थत्वेन प्रातिपदिकार्थमात्रे प्रथमा इत्यंशेनैव लिङ्गाधिक्ये प्रथमायां सिद्धायां लिङ्गग्रहणं व्यर्थं स्यात्। लिङ्गस्य प्रातिपदिकार्थत्वादेव

स्त्रीत्वे द्योत्ये टाबादयः इति स्त्रियामिति सूत्रस्थभाष्यसिद्धान्तः सङ्गच्छते। न च प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः इति स्वीकारे ''अभिहिते[२९] प्रथमा'' इति वार्तिकविरोध इति वाच्यम् वार्तिकस्य तत्तत्प्रातिपदिकार्थगतकर्तृ-त्वादिकारकशक्तावन्येनाभिहितायां तत्तद्प्रातिपदिकात् स्वार्थे प्रथमा इत्यर्थकरणात्। एवञ्च उभयोर्मते स्वार्थे एव प्रथमायाः सत्वात् न वार्तिकविरोधः।

काशिकाकारस्तु ''प्रातिपदिकार्थः[३०] सत्ता'' इति प्राह। नागेशस्तमपि ग्रन्थमाधारीकृत्य व्याचष्टे यत् ''प्रातिपदिकार्थः सत्ता'' इतिग्रन्थेनाऽपि प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः इत्येव समायाति। कथमिति चेत् स्वयमेव ब्रूते ''सत्तेति प्रवृत्तिनिमित्तोपलक्षणम्, आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः'' इति।

यद्यपि काशिकाग्रन्थं व्याचक्षाणौ पदमञ्जरीन्यासकारौ ''प्रातिपदिकार्थः सत्ता'' इतिग्रन्थमन्यथैव व्याचक्षाते, तथापि ''प्रातिपदिकार्थः सत्ता'' इतिग्रन्थस्य नागेशोक्तमेव व्याख्यानं रमणीयं प्रतिभाति।

विमर्शः-सूत्रे लिङ्गग्रहणसामर्थ्यात् प्रातिपदिकार्थपदेन पारिभाषिको नियतोपस्थितिकोऽर्थः गृह्यते इति दीक्षितमतम्। अस्मिन् मते कृष्णः, श्रीः, ज्ञानम् इत्यादयो नियतलिङ्गकाः, उच्चैः नीचैः, इत्यादयोऽलिङ्गा अव्ययशब्दाश्च प्रातिपदिकार्थमात्रे इत्यस्योदाहरणानि। तटादिशब्देभ्यः विसर्गादिसमभिव्याहारे पुंस्त्वादिलिङ्गविशेषस्य भानेन पुंस्त्वादिलिङ्गस्यानियतोपस्थितिकत्वेन तटः तटं तटी इत्यादौ प्रातिपदिकार्थापेक्षया लिङ्गमात्रस्याधिक्येऽपि प्रथमाविधानाय लिङ्गग्रहणं सार्थकम्। एवञ्च तटः तटी तटम् इत्यादयोऽनियतलिङ्गकाः शब्दाः लिङ्गमात्राधिक्ये प्रथमा इत्यंशस्योदाहरणानि। कैयटोऽपि यमर्थं[३१] प्रातिपदिकं न व्यभिचरति सोऽर्थः प्रातिपदिकार्थः इत्युक्त्या प्रातिपदिकार्थपदेन नियतोपस्थितिकार्थमेव स्वीकरोति। सिंहो माणवकः इत्यादौ लक्षणास्थले सिंहशब्देन सिंहसदृशस्य माणवकादेरनियतोपस्थितिकार्थस्य भानेऽपि शक्यार्थमादाय प्रथमाया उत्पत्तौ न दोषः। अन्वयानुपपत्तिपूर्विका लक्षणा सुबन्ते निष्पन्ने पदे एव प्रातिपदिकस्य भवतीति स्वीक्रियते। प्रथमा तु लक्षणातः प्राक् प्रातिपदिकसंस्कारवेलायामेव भवति। पश्चात् लक्ष्यार्थश्च अनियतोपस्थितिकार्थस्य भानेऽपि जातसंस्कारस्य बाधायोगेन न लक्ष्यासिद्धिः।

न च नियतोपस्थितिकः प्रातिपदिकार्थः इतिस्वीकारे ''नीलो घटः'', ''वीरः पुरूषः'' इत्यादौ प्रातिपदिकार्थापेक्षया विशेष्यविशेषणभावस्य अधिकस्य भानेन मात्रपदेन व्यवच्छेदात् प्रथमा न स्यादिति वाच्यम्, विशेष्यविशेषणभावस्य वाक्यार्थत्वेन बहिरङ्गत्वात् प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः। अत्र पदसंस्कारपक्षाश्रयणमेव युक्तम्। वाक्यसंस्कारपक्षे नीलो घटः इत्यादौ प्रथमाप्रवृत्तिकालेऽपि विशेष्यविशेषणभावस्य अधिकस्य भानात् प्रथमा न स्यात्। अतोऽत्र पदसंस्कारपक्षाश्रयणमेव युक्तम्।

सूत्रे लिङ्गसंख्याग्रहणसामर्थ्यात् प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणमिति नागेशः। तथा सति नियतलिङ्गकस्थले अनियतलिङ्गकस्थले वा लिङ्गस्याप्रातिपदिकार्थत्वाद् लिङ्गमात्राधिक्ये प्रथमाविधानाय लिङ्गग्रहणं सार्थकम् संख्याग्रहणम् एकः द्वौ बहवः इत्यादौ प्रकृत्या एकत्वादिसंख्याया उक्तत्वेऽपि प्रथमाविधानायेति न दीक्षितनागेशयोवैर्मत्यम्। एवञ्च उक्तार्थानामप्रयोगः इतिन्यायस्यानित्य-त्वज्ञापनार्थं संख्याग्रहणमिति स्थितम्। एतन्मते यत्र केवलं प्रवृत्तिनिमित्ततदाश्रययोरेव भानम् तत्र प्रातिपदिकार्थमात्रे प्रथमाविधानम्। एवञ्च अलिङ्गा उच्चैः नीचैः इत्यादयोऽव्ययशब्दाः स्त्री पुमान् नपुंसकम् इति लिङ्गप्रवृत्तिनिमित्तकाश्च शब्दाः प्रातिपदिकार्थमात्रे प्रथमा इत्यंशस्य उदाहरणानि भवन्ति। नियतलिङ्गकाः कृष्णः, श्रीः ज्ञानम् इत्यादयः अनियतलिङ्गकाः तटः, तटी, तटम् इत्यादयश्च शब्दाः लिङ्गमात्राधिक्ये प्रथमा इत्यंशस्य उदाहरणानि।

अत्र दीक्षितमतापेक्षया नागेशमतमेव युक्तम्। यतः नियतोपस्थितिकः प्रातिपदिकार्थः इति अक्लृप्तस्य कल्पना स्यात्। अतः अक्लृप्तकल्पनापेक्षया दोषाभावेन क्लृप्तस्य द्विकं प्रातिपदिकार्थः इतिपक्षस्य कल्पनमेव न्याय्यम्। तथा चोक्तम्-नियमांशनिवेशे तु[३२] न मानम्।

किञ्च प्रातिपदिकार्थपदेन नियतोपस्थितिकार्थस्य ग्रहणे नानार्थकहर्यादिशब्देषु दोषः स्यात्। अत्र इन्द्राद्यर्थानामनियतोपस्थितिकत्वेन प्रथमा न स्यात्। प्रवृत्तिनिमित्ततदाश्रययोः प्रातिपदिकार्थपदेन ग्रहणे हर्यादिषु प्रकारीभूतानाम् इन्द्रत्वादिधर्माणां तदाश्रयाणां सर्वेषां प्रातिपदिकार्थत्वेन लिङ्गमात्राधिक्ये "लिङ्गमात्राधिक्ये प्रथमा" इत्यंशेन प्रथमा सिद्ध्यति।

न च नागेशमते इन्द्राणी हिमानी इत्यादौ पुंयोगमहत्त्वादेरधिकस्य भानेन प्रथमा न स्यादिति वाच्यम्, सिद्धान्ते अर्थे प्रथमा इति न्यासे दोषाभावात्। अस्मिन् न्यासे अर्थपदेन प्रातिपदिकजन्यबोधविषयः अर्थो गृह्यते स च नियतोपस्थितिकः अनियतोपस्थितिको वा स्यात्। इदं दूषणं दीक्षितमतेऽपि विद्यते। अतोऽस्य समाधानम् अर्थे प्रथमा इति न्यासे एव दीक्षितमतेऽति तथा चोक्तं मनोरमायाम् यथा न्यासे सा न स्यात् इति।[३३]

## सन्दर्भ-सङ्केत


१. पा.सू. ४/१/१-पृ.सं.-७२

२. परिभाषेन्दुशेखरे-तन्त्रशेषप्रकरणे-पं.सं. १२२-पृ. सं.

३. पा.सू. १/४/२२-पृ.सं.-४७४

४. पा.सू. १/४/२१-पृ.सं.-४३

५. पा.सू. २/३/१-पृ.सं.-४३

६. पा.सू. २/३/४६-पृ.सं.-५०

७. पा.सू. २/३/४७-पृ.सं.-५०

८. पा.सू. २/३/२-पृ.सं.-४६

९. सरूपाणामेकशेष एकविभक्तौ इति सूत्रे भाष्ये-पृ. सं.-९६

१०. पा.सू. ५/१/६३-पृ.सं.-८६

११. पा.सू. १/२/४५-पृ.सं.-४०

१२. पा.सू. १/२/४६-पृ.सं.-४०

१३. प्रातिपदिकार्थेतिसूत्रव्याख्याने लक्ष्मीटीकायाम्-पृ. सं.-७६५

१४. लिङ्गानुशासनम्-६१ पृ. सं. - ६२८

**य एन वेत्ति हन्तारं यश्चैनं मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते।। (२२१६)**

अर्थात् आत्मा न म्रियते न च हन्यते। इदमेव वर्णनं कठोपनिषदि अपि उपलभते यत्-

**हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते।। (२/१६)**

गीतायामग्रे उपदिश्यते यत्-

**न जायते म्रियते वा कदाचित्, नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।। (२/२०)**

इदमेव वर्णनं कठोपनिषदि प्राप्यते यत्-

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चित् न बभूव कश्चित्।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।। (कठो. २/१८)**

गीतायाम् आत्मविषयकं सर्वमपि वैदिकम् एव।

**गीतायां वैदिकयज्ञवर्णनम्** - यज्ञविषये गीतायां वर्ण्यते यत्

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर।। (३/९)**

अर्थात् यज्ञादतिरिक्तं सकलमपि कर्मबन्धनहेतुकं वर्तते। अत एव **"यज्ञो वै श्रेष्ठतमं कर्म"** इति शतपथे प्रोक्तम्। यजुर्वेद **"ते यज्ञपतिः मा ह्वार्षीत्"** (१/२) इत्यस्मिन् मन्त्रे यज्ञपरित्यागस्य निषेधो वर्तते। यजुर्वेदे एव वर्ण्यते यत् - **यज्ञेन यज्ञम् अयजन्त देवाः"** (३९/१६) अर्थात् समस्ताः प्राणिनो यज्ञेनैव ईश्वरं पूजयन्ति। गीतायामुपदशो वर्तते यत्-

**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भायन्तः श्रेयः परमवाप्स्यथ।। (३/११)**

अर्थात् यज्ञेन देवान् सत्करोतु। देवाश्च युष्मान् वर्धापयन्तु।

एते एव भावाः सामवेदस्य **देवान् अभि इयक्षते** (६५१) इत्यस्मिन् मन्त्रे वर्णिताः। एवं बहवः श्लोका यज्ञविषये गीतायां सन्ति ये यज्ञविषये वैदिकसिद्धान्तमनुसरन्ति।

**एवं अन्येऽपि नैके वैदिकसिद्धान्ता गीतायां विराजन्ते।**

अत्र मया अस्मिन् समये गीतायां वैदिकसिद्धान्तानां दिग्दर्शनमेव कृतम्। विशेषवर्णनसक्षमास्तु विद्वद्वरेण्या एवं किमहम् पुनरपि मया अस्यां विद्वत्पत्रिकायां स्वविवेकानुरूपः प्रयत्नो विहितः। यदि काचिदपि त्रुटिस्यात्तर्हि विद्वांसो माम् अनुगृह्णन्तु इति कथयन्ती अत्रैव लेखनाद् विरमामि।

■ पता : राष्ट्रिय संस्कृत संस्थान, लखनऊ परिसर, लखनऊ

# संस्कृतकवितासमस्यासमाधानम्

■ विनोद कुमार तिवारी

**स्तोतुं प्रवृत्ता श्रुतिरीश्वरं हि**
**न शाब्दिकं प्राहन तार्किकं वा।**
**ब्रूते तु तावत् कविरित्यभीक्ष्णं**
**काष्ठा परां सा कविता ततो नः।।**[1]

एतत्पद्यानुसारं भगवतीश्रुतिरीश्वरं स्तोतुं प्रवृत्ता प्रथमं कविरिति ब्रूते, शाब्दिकं तार्किकं वा न प्राह, तस्मात् कवितैव परां कोटिमाट्टीकते। यथोक्तमुपनिषदि-

**कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः।।**[2]

अर्थात् कवयः क्रान्तदर्शिनः = सर्वद्रष्टारः सर्वज्ञातारः। अतः कविता सर्वोत्कृष्टारचना वरीवर्ति जगतीतलेऽन्येभ्यः शास्त्रेभ्यः। समस्याबाहुल्येऽस्मिन् लोके संस्कृतकवितायाः समस्याः काः? तासां समाधानाञ्च किमिति साम्प्रतं विवेचनीयोऽत्र विषयः।

सृष्टे रूप क्रमादेव प्राणिनां जीवने रागात्मिका प्रवृत्तिरपि दृश्यते। तत्र मानवजीवनाय साहित्यसंगीतकला नितान्तं उपयोगिनीति कविवरेण भर्तृहरिणा बहुशः समुपदिष्टम्। संगीतेन सह यदि काव्योक्तिः श्रृणुयात तदा सहृदयानां चित्तं नितरां प्रसन्नं स्यात्। सत्येमेवोक्तं केनचित्-

**उद्भट्श्लोकसंगीत-बाललीलाबलोकनैः।**
**मनो न भिद्यते यस्य स योगी ह्यथवा पशुः।।**

कवयो गायकाश्च सर्वे न भवन्ति, अपि तु केचन भाग्यशालिन एव, येषां हृदि साहित्यसंगीतयोः समं प्रेमं तिष्ठति। यदि संस्कृत कविता सस्वरं समुच्चारिता पठिता वा स्याद् तदा महान प्रमोदो जायते। अतएव राजशेखरेण प्रोक्तम्-

**करोति काव्यं प्रायेण संस्कृतात्मा यथा तथा।**
**पठितुं स परं वेत्ति यस्य सिद्धा सरस्वती।।**

**अपि च-**

**यथा जन्मान्तराभ्यासात् कण्ठे कस्यापि रक्ता।**
**तथैव पाठसौन्दर्य नैकजन्मविनिर्मितम्।।**[3]

एतेन सुस्पष्ट भवति यत् संस्कृत कवितासमस्यासमाधानाय सस्वरं सम्यक्पाठविधिज्ञानमत्यावश्यकम्। साहित्य संगीतयोश्च महान् भेदो वर्तते। यतो हि कवेः सुधासगन्धा सूक्तिरेव अन्तरनुप्रविश्य आवरण-भङ्गं

विधाय चेतांसि आह्लादयति, संगीतकं तु सैकतवारिरीत्या कर्णं गतं, कर्णे एव शुष्यति।

यथोक्तं महाकविना नीलकण्ठेन-

**कर्णं गतं शुष्यति कर्ण एव संगीतकं सैकतवारिरीत्या।**
**आनन्दयत्यन्तरनुप्रविश्य सूक्तिः कवेरेव सुधासगन्धा।।**[४]

किञ्च आचार्यमम्मटेनापि काव्यप्रकाशे-

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**[५]

इति प्रोक्तम्। तेन कान्तोपदेशवत् कवितोपदेशो हृदयग्राही भवति। अर्थाद् यथाः कान्तायाः सरसवचनेन समाकृष्टाः तामसा मानवा अपि तदीयेच्छया कार्यं कर्तुं समुद्यता भवन्ति। तथैव सरसया सुमधुरया कवितया समाकृष्टमनाः तामसोऽपि जनः कवितोपदेशानुसारं कर्तव्यमार्गमधितिष्ठति, निषिद्धमार्गाच्च निवृतो भवति। अत एव कवितामहत्वं वर्णयता महाकविना नीलकण्ठेनोक्तं यत्-

**व्यामोहयन्ती विविधैर्वचो-भिर्व्यावर्तयत्यन्यकलासु दृष्टिम्।**
**कालं महान्तं क्षणवन्नयन्ती कान्तेव दक्षा कविता धिनोति।।**[६]

एतानि काव्यप्रयोजनानि हृदये निधाय संस्कृतकवितसमस्यायाः समाधानार्थं साम्प्रतमपि संस्कृतकवयः काव्यानि विरचयन्ति। तदर्थं तेभ्यः सुकविभ्यः शासनेन सहृदय समाजेन च बहुधनं सम्मानोपाधिपुरस्काराञ्च्च प्रदीयन्ते। अत एव कवयोऽपि देशस्व विविधां सामयिकीं समस्यां समाधातुं नैकविधं संस्कृतकाव्यं कुर्वन्ति। तत्प्रचारप्रसाराय सर्वकारेण दूरदर्शनमाध्यमेन आकाशवाण्या शैक्षणिकसंस्थादिभिश्च विविधमहोत्सवासरे संस्कृतकविसमवायः समायोज्यते, येनोत्साहिताः कवयः कवितां विदध्युरिति। शास्त्राणि च स्वकीयनियतविषयानेव प्रकाशयन्ति, परञ्चयंय कविता भक्ति-धर्म-शिल्प-विद्या-कला-ज्ञान-योग-विनय-समाज-राजनीत्यादि सर्वविषयान् सरसया वाचासमुपस्थापयति।

मध्ययुगीनाः केचन कवयस्तु कवितायाः परममुद्देश्यं "रामादिवद् वर्तितव्यं न रावणादिवद्" इति विस्मृतवन्तः सेयं मुख्या समस्या संस्कृतकविताया विद्यते। प्रायेण श्रृङ्गारमुद्वहन्ती तेषां कविता लोकैः सह तानपि भोगे निमज्जयन्ती दृश्यते। कामिनीनाम् अधरपल्लवस्य कुचकलशयोर्गभीरनाभेश्च वर्णने एव व्यापृत्ता सा जनानामन्तः करणे कारणत्वं वर्धयति। तदनन्तरमेषा कविता रहस्यवादस्य छायावादस्य च मोहपङ्किले निमग्नावलोक्यते। एवं विधकाव्यविषये केनचिदुक्तम्-

**यदा प्रकृत्यैव जनस्य रागिणो**
**भृशं प्रदीप्तो हृदि मन्मथानलः।**
**तदात्र भूयः किमनर्थपण्डितैः**
**कुकाव्यहव्याहुतयो निवेशिताः।।**

अत एव यथा वाल्मीकि-व्यास-कालिदास-प्रभृतयोः महाकवयोः भगवच्चरित्र-चित्रणं मुख्यरूपेणाकार्षुः, तन्माध्यमेन जगति शाश्वतीं प्रतिष्ठां च प्रापुः, तथाद्यतनीनाः संस्कृतकवयः सरसां सुगमां मनोहरां सदुपदेशयुतां च कवितां निर्माय लोके ख्यातिं प्राप्नुयुः, येन संस्कृत-कवितासमस्यायाः समाधानं सुतरां भवेत्। अत एव क्रान्तदर्शी कविदेशकालादिव्यवधानेनापि एकाग्रचेतसाऋतम्भरया प्रज्ञया प्रतिभायाः च निजवर्ण्यवस्तूनि न पश्यन्नपि तत्समीपं गत्वा योगीव तत्रस्थितान् सर्वपदार्थान् साक्षात्कृत्य तन्मयेन भावेन तद्वर्णने प्रवृत्तो भवति। एतादृशी शक्तिसम्पन्ना कवितैव बहिर्मुखं चित्तं सर्वतः समाकृष्य ईश्वरे नियोजयति। यथा चोक्तं नीलकण्ठेन-

**अनायतप्राणमसंयताक्षमब्रह्मचर्चानशनादिखेदम्।**
**चित्तं महेशे निभृतेविधातुं सिद्धः कवीनां कवितैव योगः।।**[७]

किंच सहृदयान् आह्लादयन्ती या कविता आदर्शसदुपदेशानपि जनेभ्यः समर्पयति सैवोत्तया सर्वलोकमंगलविधात्री चिरस्थायिनी च भवति सर्वस्मिन् जगति। यथोक्तं राजशेखरेण-

**एकस्य तिष्ठति कवेर्गृह एव काव्य-**
**मन्यस्य गच्छति सुहृद्भवनानि यावत्।**
**न्यस्याविदग्धवदनेषु पदानि शश्वत्**
**कस्यापि संचरति विश्वकुतूहलीव।।**[८]

अपि च कविः कविता च राष्ट्राय तज्जनेभ्यश्च सर्वदा नवां स्फूर्तिं जीवनं च प्रयच्छति, मानवानां मन्दतां व्यपनयति, अन्तः करणमुज्ज्वलं करोति। तस्मात् कविर्यशः कायेन सदैव लोकमंगलं चिकीर्षति। सन्मार्गावलोकनाय परमेश्वर एव कविरूपेणावतरति। कुशलः कविः लौकिकवस्तून्येव प्रदर्श्य किमपि तादृशं विलक्षणं रचयति, येन कवि-सहृदयाः संसारं सर्वथा विस्मृत्य दिव्यम् अनिर्वचनीयं सुखमनुभवन्तो ब्रह्मानन्दसहोदराह्लादं प्राप्नुवन्ति।

किं च प्रायेण पाषाणखण्डेषु तिरोभूतमहाप्रकाशाश्चन्द्रकान्ता इव शब्देषु शब्दाः संश्लिष्टाः सन्ति, तान् केचन् भाग्योतराः कवयः प्रत्यभिजानते। यथा निगदित कविवरेण नीलकण्ठेन-

**प्रायस्तिरोभूतमहाप्रकाशाः पाषाणखण्डेष्विव चन्द्रकान्ताः।**
**शब्देषु शब्दाः मिलिताश्चरन्ति भाग्योतरा प्रत्सभिजनते तान्।।**[९]

अत्र 'विन्यासविशेषभव्यैः'' इत्यनेन-

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन्।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।।**[१०]

इत्यानन्दवर्धनाचार्योक्तमतं परिपुष्यति। तदेवं संस्कृतकविता समस्यायाः समाधाने कवितासु वाचां सदुपयोग अपि आवश्यकः। येन वाग्देवता प्रसन्ना भूत्वा भुक्तिं मुक्तिं च दद्यात्।

संस्कृतकविता-समस्या समाधानकारणेषु च कवयो शजानश्चेति कारणद्वयं मुख्यमस्ति। अतः राजशेखरमतेन राजाश्रयेण कवयः प्रसिद्धिंगताः, कविसंश्रयेण च राजानः। यथोक्तम्-

ख्याता नराधिपतयः कविसंश्रयेण
राजाश्रयेण च गता कवयः प्रसिद्धिम्।
राज्ञा समोऽस्ति न कवेः परमोपकारी,
राज्ञो न चास्ति कविना सदृशः सहायः।।"

तदित्थं कवितासमस्यायाः समाधानं तन्महत्वं च पुरस्कृत्य प्राक्तना महाकवयः अर्वाचीनाः कथश्च सर्वथा प्रयतन्त इति मन्यते।।

## सन्दर्भ-सङ्केत

१. शिवलीलार्णव १/१६
२. ईशावास्योपनिषद् मन्त्रः ८
३. काव्यमीमांसा अध्यायः ७
४. शिवलीलार्णवः १/१७
५. काव्यप्रकाशः १
६. शिवलिलार्णवः १/२४
७. शिवलिलार्णवः २/२६
८. काव्यमीमांसा अ.४
९. शिवलीलार्णवः १/१२
१०. ध्वन्यालोक १/८
११. काव्यमीमांसा अ.६

■ पता : रा.सं.सं., लखनऊ

# ख्यातिवादमीमांसा

■ उमाकान्तचतुर्वेदी

ख्याप्रकथने धातोः क्तिन्प्रत्ययेन ख्यातिशब्दो निष्पद्यते।[1] धातूनामनेकार्थत्वात्सर्वेषु दर्शनेषु ख्यातिशब्देन भ्रमज्ञानमभिप्रेयते। स्व-स्वसिद्धान्तानुसारेण भ्रमविषयकान् पदार्थान् व्यवस्थापयितुं सर्वेऽपि ख्यातिवादाः प्रवृत्ताः सन्ति। तत्तच्छास्त्रकृद्भिः बहवः ख्यातिभेदाः कल्पिताः। परन्तेषु आत्मख्यातिः असत्ख्यातिः अख्यातिः अन्यथाख्यातिः अनिर्वचनीयख्यातिरिति पञ्च एव ख्यातिवादाः क्रमेण विज्ञान-शून्य-मीमांसा-न्याय-वेदान्तविदां सम्प्रदायानुसारेण विश्रुतिङ्गताः सन्ति। तथाहि- **आत्मख्यातिरसत्ख्यातिरख्यातिख्यातिरन्यथा। तथाऽनिर्वचनख्यातिरित्येतख्यातिपञ्चकमूङ्क्त।**

योगाचारा माध्यमिकास्तथा मीमांसका अपि। नैयायिकाः मायिनश्च पञ्चख्यातीः क्रमाज्जगुः ङ्क्त[2] -तत्रात्मख्यातिं विज्ञानवादिनो योगाचार्या बौद्धाः स्वीकुर्वन्ति। अध्यासः प्रायेण सर्वेषां परीक्षकाणां सम्मतः। किन्तु तद्भेदे वर्तन्ते विप्रतिपत्तयः। तथाहि-'तं केचिदन्यधर्माध्यास इति प्रवदन्ति।' वस्तुतो ज्ञानधर्मस्य ज्ञानाकार-रजतस्यान्यत्र बाह्यो शुक्तिकादौ अध्यासः आत्मख्यातिरित्युच्यते। इयञ्चात्मख्यातिः सौत्रान्तिकवैशिकयोरपि सम्मता। यतो हि तैः क्षणिकविज्ञानस्यैव आत्मत्वं स्वीक्रियते शुक्तिरूप्यादेश्च विज्ञानाकारत्वाभ्युपगमात्। तथा हि विमतं रजतं सम्प्रयोगमन्तरेणापरोक्षत्वाद्बुद्धिरूपम्। संस्कारसामर्थ्याच्च विज्ञानस्य रजताकारः ततश्चान्तरं विज्ञानमेव रजताकारेण पुरोवर्तित्वेन च गृह्यते। अत एव नेदं रजतमिति बोधप्रत्ययेन पुरोवर्तित्वस्यैव निषेधो न तु रजतस्येति वदति योगाचाराः।

असत्ख्यातिस्तु सर्वशून्यवादिनां माध्यमिकानां बौद्धानाम्। विज्ञानस्य असद्भाषकत्वेनासत्प्रतिपक्ष-पातित्वनियमस्वीकारात्। सत्ख्यातिवादिनो हि सर्वेऽपि प्रकाशमानत्वमात्रमेव हि वस्तूनां सत्त्वं स्वीकुर्वन्ति। ततश्च भासमानस्य सर्वस्यैव सत्त्वप्रसङ्ग इत्यसत्ख्यातिरवतारः।

अख्यातिरभिप्रेतास्ति प्राभाकराणां पूर्वमीमांसकानाम्। 'यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रम' इति। तथाहि-'इदं रजतमित्यत्र ज्ञानद्वयम्। तत्राद्यं प्रत्यक्षं द्वितीयन्तु स्मरणात्मकम्। तयोः तद्विषययोश्च विवेकाख्यातिबलाद् भ्रमत्वव्यवहारः प्रवृत्त्यादिश्च भवति, न तु संसर्गज्ञानं भ्रमात्मकमस्ति। तथा सति सर्वविज्ञानानामनाश्वासप्रसङ्गात्। अर्थाद् यस्मिन् शुक्त्यादौ यस्य रजतादेरध्यासः, तयोः शुक्तिरजतयोः तज्ज्ञानयोश्च यो विवेको भेदग्रहनिबन्धनः तज्ज्ञानाभावप्रयुक्तो भ्रमस्तद्व्यवहार इति। विमताः प्रत्ययाः यथार्थाः प्रत्ययत्वात् सम्प्रतिपन्नवत्। संसर्गज्ञानपूर्वकत्वञ्च भ्रमस्थले प्रवृत्यादेर्न स्वीक्रियते, किन्तु भेदाग्रहपूर्वकत्वमेव स्वीक्रियते।

अन्यथाख्यातिर्नैयायिकानां वैशेषिकाणाञ्च। एते इदं रजतमित्यादिभ्रममन्यथाख्यातिमिति मन्यन्ते। अर्थात् शुक्तिकायाः रजतत्वेन भानमिति। अन्यत्र सतो रजतस्य तादात्म्यसम्बन्धेन ज्ञानलक्षणाप्रत्यासत्या शुक्तिकायामलौकिकचाक्षुषप्रत्यक्षमभिमतं तेषाम्। अन्यथाख्यातिवादिनस्तु यद् यदध्यासस्तस्यैव विपरीत-धर्मत्वकल्पनामाचक्षते। अर्थाद् यत्र शुक्तिकादौ यस्य रजतादेरध्यासः तस्यैव शुक्तिकादेः विपरीतधर्मत्वकल्पनां रजतत्वधर्मकल्पनामाचक्षते इति।

अनिर्वचनीयख्यातिरद्वैतवेदान्तिनाम्।[3] एतन्मतेनान्तःकरणात्मिकावृत्तिरिन्द्रियप्रणालिकया विषयपर्यन्तं गत्वा तदाकारा भवति। रज्जुसर्पस्थले अन्तःकरणवृत्तिश्चक्षुरिन्द्रियेण रज्जुप्रदेशमागत्य सम्बद्धा भवति। किन्तु मन्दान्धकारप्रतिबन्धकबलात् सा रज्वाः वास्तविकं स्वरूपं न ग्रहणाति। एवमविद्ययावृतायां रज्जौ रज्वावच्छिन्न-चैतन्यनिष्ठा विद्यैव विक्षोभवशात् सर्पाकारा जायते। तत्राविद्यया प्रतीयमानः सर्पः सदसद्भ्यां विलक्षणः। यतोहि तत्र रज्जुसर्पो नासत्, असच्चेत् शशश्रृंगवद् बन्ध्यापुत्रवद् आकाशकुसुमवच्च न प्रतीयेत, किन्तु प्रतीयते। नापि सत्, सच्चेद् आत्मवन्न बाध्येत, किन्तु कालान्तरेण बाध्यते। किञ्च, सदसत्त्वमपि तस्य न, सदसत्त्वस्यैकैकस्यैकत्र व्याहतत्वात्। अतः सर्वथा अनिर्वचनीयः एव सर्पः रज्ज्वावच्छिन्नचैतन्ये विवर्तने। तथा चोक्तं सर्वदर्शनसंग्रहे-**"ततश्च ख्यातिबाधान्यथानुपपत्या भ्रान्तिगोचरस्य मायामरजतादेः सदसद्विलक्षणत्वलक्षणमनिर्वचनीयत्वं सिद्धम्।"**[4] किञ्च चित्सुखाचार्येणाप्येतत् समर्थितम्-**प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्। गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनःङ्क्त**[5]

वेदान्तदर्शने अन्येऽपि ख्यातिवादाः प्रवृत्ताः सन्ति। यथा-रामानुजाचार्यस्य सत्ख्यातिवादः।[6] नैयायिकानामन्यथाख्यातिरिव माध्यमिकानामसत्ख्यातिरिव वा भ्रमावस्थायां भासमानं वस्तु अन्यत्राध्यस्तावस्थायां सदस्तीत्येते ब्रुवते। अयमेव 'तत्रैव सत्' इत्याकारा सत्ख्यातिरस्ति। पञ्चीकरण-प्रक्रियानुसारेण शुक्तौ रजतत्वप्रतीतिदशायां केवलं रजतांशः प्रतीयते। दोषोपहितत्त्वाच्चारजतांशस्तत्र न गृह्यते। एवं रामानुजमतेन भ्रमावस्थायां भासमानं वस्तु तत्रैव सदस्ति। आत्मख्यातिवादे तु भ्रमावस्थायां भासमानं वस्तु विज्ञानसे सदस्ति।

तत्त्वप्रकाशिकाया[7] भोजराजेनालौकिकख्यातिप्यङ्गीकृता। तन्मतानुसारेण ज्ञाने भासमानं वस्तु अलौकिकमपि सदस्ति। तथा च माध्यमिकबौद्धानां मतेन माध्वमतेन च भ्रमावस्थायां भासमातं वस्तु अत्यन्तमसदस्ति। एवं सदसदित्युभावपि ख्यातिवादौ सुन्दोपसुन्दन्यायेन परस्परं परिस्पर्द्धन्तौ सतौ खण्डितौ भवतः। यद्वा, स्पर्धन्तौ सदसद्भ्यां विलक्षणायामनिर्वचनीयख्यातौ पर्यवस्यतः। विज्ञानभिक्षु[8]-स्वीकृता सदसत्ख्यातिस्तु सम्भवैव नास्ति। यतो ह्युक्तमुदयनाचार्येण-**"सदसदात्मरूपेण वस्तुनः प्रतीतिर्न प्रकृतावुपयोगिनी। स्वीकृतायां तस्यां भ्रान्तस्य पुरूषस्य प्रवृत्तेरसम्भवात्।"** अत एव **"स्मृतिरूपः परत्र पूर्ववद्दृष्टावभासः"**[9] इत्यनिर्वचनीयख्यातेर्लक्षणव्याख्याने श्रीमताऽमलानन्देन प्रोक्तम्-**अथवा सन्निधानेन सत्ख्यातिरिह वारिता। अवभासादसत्ख्यातिः नृश्रृङ्गे तददर्शनात्ङ्क्त**[10]

अतो निर्वचनीयख्यातिरेव ज्यायसी। किञ्च, शुक्तौ रजतावस्थारूपायामारोप्यमाणारोपविषययोः सत्त्वेनाङ्गीकारे अद्वैतमेव न सिध्यति। अनिर्वचनीयख्यातिस्तु आरोपविषय एव सत् आरोप्यन्तु सदसद्भ्यां विलक्षणत्वान्मिथ्या। एवमन्यस्य मिथ्यात्वेनापरस्य सत्त्वेनाङ्गीकार एवाद्वैतसिद्धिः। अन्यथा द्वैतापत्तिः स्यात्। अपि च तत्राधिष्ठानतयारोपविषयस्य सत्यताऽपरिहार्या, यतोहि निरधिष्ठानस्य भ्रमस्यासम्भवात्।

किन्तु शून्यवादिनो बौद्धाः भ्रमज्ञानं निरधिष्ठानमेवाङ्गीकुर्वन्ति।[11] जगत् शून्यतायां पर्यवसाययितुमेभिरारोप्यारोपावुभावपि असत्त्वेन स्वीकृतौ। अत इदं निरधिष्ठानं भ्रमज्ञानम्। माध्वमतेऽपि असत्ख्यातिरेवाङ्गीकृतास्ति। परं तत्र सदधिष्ठाने एव असद्वस्तुनः आरोपः। माध्व-माध्यमिकमतेन असद्वस्त्वपि प्रत्यक्षज्ञानस्य विषयः। यद्यप्यस्मिन्मतेऽपि अद्वैतसिद्धिर्न व्याहन्यते तथाप्यसतो वस्तुनः प्रत्यक्षासम्भवादयं पक्षो

विरूद्धः। विषयजन्यज्ञानस्यैव प्रत्यक्षलक्षणादलीकवस्तुनि ज्ञानजनकत्वाङ्गीकारे तस्यालीकत्वमेव न सिद्ध्यति। सर्वसामर्थ्यशून्यस्य वस्तुनोऽलीकलक्षणात्। एवं दुरूक्तिपूर्णेयम्-सत्ख्यातिर्भ्रमज्ञाने निर्मूला।

अतो निष्कर्षतो वक्तुं शक्यं यदुपरि निर्दिष्टासु पञ्चख्यातिसु अनिर्वचनीयख्यातिरेव भ्रमज्ञानस्वीकारेऽनिवार्या। तथा चोक्तमाचार्यशङ्करेण-**"सर्वथापितु अन्यस्य अन्य र्मावभासता न व्यभिचरित।"**[१२] भाष्यस्यास्य विवरणे भामतीकारः कथयति-" अन्यस्यान्यधर्मावभासता अनृतता, सा चानिर्वचनीयता सर्वतन्त्रसिद्धान्तः।"[१३] किञ्च भाष्यकारेणापि **अ यासो नाम अतस्मिन्स्तद्बुद्धिरित्यवोचाम"** इत्युक्तम्।[१४] एवमखिलानां ख्यातीनामन्ततोऽनिर्वचनीयख्यातावेव पर्यवसानादखिलव्यवहारनिर्वाहायेयमेव योग्या। साहित्यशास्त्रीयरसालौकिकत्ववादेऽपि कार्यज्ञापकाभ्यां विलक्षणस्य रसस्यालौकिकत्वाङ्गीकारेऽनिर्वचनीयख्याति-रेवेत्यलं पल्लवतल्लजकल्पानल्पजल्पनेनेति शम्।

## सन्दर्भ-सङ्केत


१. ख्यातिः-ख्याप्रकथने (अ.प.अ.) चक्षिङ्गदेशो (२/४/४५) वा। क्तिन् (३/३/६)।

२. वेदान्तपरिभाषा, सं.सं.वि.वि. प्रकाशन, भूमिका पृष्ठ १३

३. अद्वैतम्-द्वि+इण् कर्तृवाच्य में क्त = द्वीत भावार्थे अण् द्वैतम्, न द्वैतमद्वैतम्। दो पदार्था के अस्तित्व का अभाव या द्वितीयत्व का अभाव।

४. सर्वदर्शनसङ्ग्रह/पृ. ८५०/चौथा संस्करणं

५. चित्सुखी/पृ. ७६

६. भारतीयदर्शनम्/पृ. ४१३

७. वेदान्तपरिभाषा/भूमिका/पृ. ०६

८. भारतीयदर्शन/पृ. १४५

९. वेदान्तसार, विद्वन्मनोरञ्जिनी/पृ. ३१

१०. कल्पतरू (अमलानन्दकृत) पृ. १६

११. सर्वदर्शनसङ्ग्रह/पृ. ५१

१२. ब्रह्मसूत्रम् (शाङ्करभाष्यम्)/ पृ. १६

१३. भामतीव्याख्यानम्/पृ. १४०

१४. वेदान्तसार/भूमिका पृ. २३


■ पता : रा.सं.सं., लखनऊ परिसर लखनऊ

# नञर्थनिर्णये कौण्डभट्टस्य वैशिष्ट्यम्

■ प्रमोद कुमारशर्मा

नञोऽर्थः कः इति यदा जिज्ञास्यते तदा सर्वप्रथमं नञः अर्थद्वयं समुपल भ्यते-पर्युदासः प्रसज्यप्रतिषेधश्च। यद्यपि नञः सर्वत्र निषेधरूपोऽर्थ एव गम्यते तथापि क्वचिद् गौणत्वेन क्वचिच्च प्राधान्येनाप्यस्य ग्रहणं भवति। पर्युदासे नञि यत्र नञः उत्तरपदेन सह समासो भवति तत्र निषेधार्थस्य गुणभावो भवति। यथा-'अत्राब्राह्मणः इत्यादिषु स्थलेषु। प्रसज्यप्रतिषेधश्च तत्रैव दृश्यते यत्र क्रियया सह नञ् भवति, तत्र तस्य प्राधान्यमागच्छति, यथा-घटो नास्तीत्यादिषु स्थलेषु।

वैयाकरणानां मते पर्युदासे आरोपविषयत्वमेव नञ्द्योत्योऽर्थो भवति। आरोपश्च अतद्वति तत्प्रकारकं ज्ञानमेव। यथा-अब्राह्मण इत्यस्य आरोपितविषयत्ववान् ब्राह्मणः इत्यर्थः नितान्तमसदृशे वस्तुनि तु वस्त्वन्तरधर्मारोपो नैव सम्भवति, अतः पर्युदासनञः सदृशग्राहकत्वं न दुष्यति। पर्युदासे निषेधस्तु आर्थ एव भवति, अत एव पर्युदासे आरोपस्य प्राधान्यं तथा निषेधस्य गौणता दर्शिता भवति। प्रसज्य प्रतिषेधे नञ् क्रियया सह विशेष्यरूपेण अन्वेति। प्रसज्यप्रतिषेधे नञोऽर्थस्य प्राधान्यं भवति। तथा तस्य सम्बन्धः क्रियया सह भवति। यथा-गेहे घटो नास्ति, अत्र 'गेहाधिकरणकघटकर्तृकसन्ताभावः' इत्यर्थो भवति। अत्र एवोच्यते-

**द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ।**
**पर्युदासः सदृशग्राही प्रसज्यस्तु निषेधकृत्।।**

नञ् समासे उत्तरपदार्थस्य प्राधान्यं भवति, अतः न सः इति 'असः' इत्यत्र सर्वनामसंज्ञा भवति। आरोपितः सः इति अस्यार्थः। अत्र नञः आरोपितत्वरूपोऽर्थो द्योत्योऽस्ति न तु वाच्यः। एवमेव असर्वः इत्यादावपि सर्वनामसंज्ञायां नास्ति कश्चिद् बाधः। 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति नियमानुसारं यत्र सर्वादयः उपसर्जनीभूता उत संज्ञास्वरूपो भवन्ति तत्रैव सर्वनामतायाः प्रतिषेधो भवति। नञ्समासे तत्पुरूषे उत्तरपदार्थस्य प्राधान्यं भवतीति। कारणात् 'असर्वः', असर्वस्मै, असर्वस्मिन् इत्यादयः प्रयोगाः निर्बाधाः। अत्र नैयायिकमतानुसारम् 'असर्वः' इत्यस्य 'सर्वप्रतियोगिकोऽभावः' इत्यर्थकरणे तु नञर्थस्याभावस्यैव प्राधान्यं समायाति। तेन अत्र सर्वनामता प्रतिबद्धा भवति, अतस्तदर्थमत्र श्रीमद्भट्टोजिदीक्षितैः कारिकेयं विरचिता-

**नञ्समासे चापरस्य प्राधान्यात् सर्वनामता।**
**आरोपितत्वं नञ्द्योत्यं न ह्यसोऽर्थेति सर्ववत्।।**

अतः वैयाकरणमतानुसारं नञ्समासे नञः आरोपितात्मकः द्योत्यार्थ एव स्वीकृतः। 'अतिसर्वः' इत्यादौ तु सर्वमतिक्रान्तः इति विग्रहः अत्र सर्वशब्दस्य प्राधान्याभावात् सर्वनामसंज्ञा न भवति। 'सर्वकर्मकः अतिक्रमणकर्ता' इति तु शाब्दबोधः। अत्र सर्वशब्दस्य प्राधान्यं नास्ति। अत्र कौण्डभट्टस्य तात्पर्यमिदमस्ति यत् 'असर्वः' इत्यत्र आरोपितः सर्वः इत्यर्थे तु सर्वार्थस्य मुख्यत्वात् सर्वनामसंज्ञा सिद्ध्यति। परन्तु यत्र प्राधान्यं नास्ति तत्र 'अतिसर्वः' इत्यादिस्थलेषु सर्वशब्दस्य प्राधान्याभावात् सर्वनामसंज्ञा न भवति। अत्र हि 'सर्वकर्मकातिक्रमणकर्ता' इति बोधे अतिक्रमणकर्तुरेव प्राधान्यम्।

'घटो नास्तीति वाक्ये अभावस्य विशेष्यता अस्त्यतोऽत्र 'घटकर्तृकसत्ताभावः' इति अभावविशेष्यकः शाब्दबोधो भवति। परन्तु एतादृशः शाब्दबोधो मानस एव। शब्दतस्तु 'आरोपितसत्तावान् घटः' इति घटविशेष्यकशाब्दबोधः

न्याय्यः। नञः आरोपितरूपार्थस्वीकारे एव 'असर्वस्मै' असर्वस्मिन् इत्यादि प्रयोगाः निर्बाधाः भवन्ति। तत्र असिद्धेः नास्ति कश्चिदवसरः। नञः निपातत्वात् स द्योतकः अस्ति। निपाताः द्योतकाः भवन्ति अतः आरोपिताऽर्थः द्योत्यत्वेन उक्तः।

'घटोनास्ति' इत्यत्र समासरहिते वाक्ये 'आरोपितसत्तावान् घटः' इत्येवं तथा 'अब्राह्मणः' इति समासस्थलेऽपि आरोपितः ब्राह्मणः इत्येवं नञः आरोपरूपोऽर्थः सर्वव्यवहारे न दृश्यते। अतः नञः अन्योऽर्थः विचारणीयः स च कः स्यादिति भाष्यकाराभिप्रायं प्रदर्शयन्नाह–श्रीमद्भट्टोजिदीक्षितः।

**''अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।**
**विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम्।।**

नञः अभावः अर्थोऽस्ति। स च अभावरूपोऽर्थः द्योत्यः स्यात् वाच्यो वा स्यादित्यत्र नास्ति कश्चिद् विसंवादः। अयमभावरूपः अर्थः विशेष्यत्वेन विशेषणत्वेन वा भवतु, इत्यत्र समालोचकाः विद्वांसः स्वयमेव चिन्तयन्तु निर्णयं वा कुर्वन्तु। 'नपुंसके भावे क्तः' (३.१.११४) इति सूत्रे भाष्ये भाष्यकारेण नञर्थप्रतिपादने उक्तं यत् 'निवृत्तपदार्थकः' इति, अर्थात् नञ् निवृत्तपदार्थकोऽस्ति। अभावार्थकः इति तस्य तात्पर्यम्। निपूर्वकवृतुवर्तने इति धातोः नपुंसकलिङ्गे भावे क्त प्रत्ययः भवति तेन 'निवृत्तम्' इति शब्दो निष्पद्यते। निवृत्तं पदार्थो यस्येति बहुव्रीहिसमासे सति 'निवृत्तपदार्थकः' इति शब्दः संजायते। अत्र निवृत्त शब्दस्य अर्थः अभावो भवति। अतः भाष्यकारमतानुसारं, नञः अभावोऽर्थोऽस्ति।

**कैयटमतम्**–निवृत्तपदार्थकः' इति भाष्यस्य व्याख्यां कुर्वता कैयटेनोक्तं यत् 'निवृत्तः पदार्थो यस्मिन् सः निवृत्तपदार्थकः' इति। अस्य तात्पर्य मिदमस्ति यत् निवृत्तः आरोपितः पदस्य अर्थः यस्मिन् इत्यनेन व्याख्यानेन 'अब्राह्मणः' इत्यस्य सादृश्यादिना आरोपित ब्राह्मण्यवान् क्षत्रियादिः' इत्येवार्थ एव समक्षमायाति। अतोऽत्र नञ् निपातस्य 'आरोपित ब्राह्मण्यम्' इत्यर्थोऽस्ति। परन्तु भूषणकारः कौण्डभट्टः अस्य कैयटमतस्य खण्डनं करोति।

**भूषणसारकारस्य कौण्डभट्टस्य मतम्**–भूषणकारो वदति यत् अत्र 'अब्राह्मणः' इत्यत्र नञः वाच्यार्थः आरोपितब्राह्मण्यम् इति कदापि न संभवति, अयं तात्पर्यार्थः भवतु नाम, तेन किम् ? तात्पर्यञ्च मानसबोधस्य विषयः न तु शाब्दबोधस्य विषयः। यदि तात्पर्यमपि शाब्दबोधस्य विषयः स्यात् तर्हि सादृश्यादयः षडर्थाः अपि नञर्था स्युः। कण्ठतः उच्चारितानां शब्दानामेव शाब्दबोधो भवति। नञ्समास घटकीभूतस्य नञिति निपातस्य षड्र्थाः भवन्ति–

**''तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः।। इति।**

१. सादृश्यम्, २. अभावः, ३. भेदः, ४. अल्पता, ५. अप्राशस्त्यम्, ६. विरोधश्च। अत्र एतेषामुदाहरणानि यथा–१. अब्राह्मणः–ब्राह्मणसदृशः, अत्र नञः सादृश्यार्थोऽस्ति। २. अपापम्–पापस्य अभावः, अत्र पापाभावः अर्थोऽस्ति। ३. अनश्वः–अत्र अश्वाद् अन्यः नञर्थोऽस्ति। ४. अनुदरा–अल्पोदरा अर्थात् अल्पोदरवती कन्या, अत्र नञः अल्पः अर्थः अस्ति। ५. अपशवः–अनुत्तमाः पशवः, अत्र नञर्थः अप्राशस्त्यम् अस्ति। ६. अधर्मः–धर्म विरोधः अत्र विरोधः अर्थः अस्ति। अनेन प्रकारेण तत्सादृश्यमिति कारिकां प्रपठ्य पूर्वोक्तार्थसहितानि उदाहरणानि अत्र प्रदर्शितानि। एतानि सर्वाण्यपि उदाहरणानि मानसबोधविषयकानि आर्थकम् अर्थमादाय अन्यत्र प्रसङ्गानुसारं सुस्पण्टानि सन्ति।

तदेवम् उपर्युक्तप्रकारेण नञः अभावरूपोऽर्थः सुष्पष्टः जातः। अत्रेदमिदानीं ज्ञातव्यमस्ति यत् नञ् संगतपदार्थेन सह नञः संगतिः विशेषणत्वेन भवति आहोस्वित् विशेष्यत्वेन अर्थात् नञः कुत्र विशेष्यत्वेन अन्वयो भवति ? कुत्र च विशेषणत्वे न इत्येव विचारणीयमस्ति।

नञर्थोऽभावो यदा स्वप्रतियोगिनि (यस्याभावः गृह्यते तस्मिन्) विशेषणं स्यात् तदा तत्र कः अर्थः ? का च विसंगतिः? इति पक्षमादाय विचारयति ग्रन्थकारः कौण्डभट्टः तथाहि-यस्य वस्तुनः अभावो गृह्यते तद्वस्तु अभावस्य प्रतियोगीत्युच्यते। अत एव उच्यते यस्याऽभावः सः प्रतियोगी, यत्राभावः-यस्मिन् अभावः सोऽनुयोगी। तदेवम् 'असर्वः' इति पदस्य अभावप्रतियोगी सर्वः इत्यर्थे कृते सति सर्वपदस्य प्राधान्यात् 'असर्वः' इति पदे सर्वनामसंज्ञा सिद्धयति। उत्तरपदार्थप्रधानो भवति तत्पुरूषः अतः सर्वपदस्य प्राधान्यम् आगतम्। अस्मात् प्राधान्यादेव 'अनेकम्' इति पदे उत्तरपदस्य एकपदस्यानुसारमेकवचनान्तता सिद्धयति। 'अनेकमन्यपदार्थे' इति सूत्र पठितमनेकमिति पदे न एकम् इति अनेकम् इति नञ् समासे नञर्थाभावस्य प्रतियोगी एकः, तत्र एकस्मिन् अभावः विशेषणत्वेन अन्वितः। संख्यावाचकः एकशब्दः नित्यैकवचनान्तो भवति। अतस्स एक एवास्ति नञ्समासे च उत्तरपदार्थत्वात् प्रधानम् अपि अस्ति। अतः 'अनेकम्' इत्यत्र एकवचनान्तता सिद्धयति, अन्यथा तु एकवचनान्तता न सिद्धयेत्। एवमेव 'सेव्यतेऽनेकया सन्नतापाङ्गया' इत्युदाहरणे 'अनेकया' इत्यत्रापि बोध्यम्।

'अब्राह्मणः' इत्यत्र अभावः ब्राह्मणे प्रतियोगिनि विशेषणम् एवास्ति। भेद प्रतियोगी ब्राह्मणः इति च शाब्दबोधः। अत्रापि उत्तरपदार्थस्य प्राधान्यात् अत्र तत्पुरूषसमासः बोध्यः। 'अत्वं भवसि' अत्र न त्वम् इति विग्रहः। शाब्दबोधश्च भेदप्रतियोगी त्वं भवसि। अत्रापि नञर्थः विशेषणम् एव। अत्र वाक्ये 'अत्वम्' इति पदेन यस्य संकेतो भवति तस्यैव संकेतः सिप्रत्ययेन भवति अतः उभाभ्यामेक एव संकेतितो भवति अतः भूधातोः मध्यमपुरूषैकवचनम् आयाति।

अनहं भवानि-अत्रापि अहं पदेन यस्य संकेतो भवति तस्य एव संकेतः मि प्रत्ययेन क्रियते अतः उभाभ्यां मिलित्वा कश्चिद् एक एव संकेतितोऽर्थः भवति। अत एव भूधातोः उत्तमपुरूषस्य एकवचनमागच्छति। अत्र भेदप्रतियोगी अहं भवामि इति शाब्दबोधः अत्रापि नञर्थो विशेषणमेव।

अत्वं भवसि, अनहं भवामि, इत्यादौ यदि त्वदभावः मदभावः इत्येवम् अभावस्य विशेष्यत्वं स्यात् तर्हि अभावांशे युष्मदस्मदोः विशेषणत्वात् सिमिप्रत्ययौ न स्याताम्। यतोहि सि-मि प्रत्ययाभ्यां संकेतितोऽर्थः भिन्नः तथा युष्मदस्मद्भ्यां संकेतितोऽर्थः भिन्नः, येन न तु मध्यमपुरूषः भवितुं शक्नोति नापि उत्तमपुरूषः अपितु शेषे प्रथमः इत्यनेन प्रथमपुरूष एव स्यात्। अस्माकं (वैयाकरणानाम्) मते तु अत्वं भवसि इत्यत्र भेदप्रतियोगि त्वदभिन्नाश्रया भवनक्रिया इति शाब्दबोध तथा अनहं भवामि इत्यत्र भेदप्रतियोगिमदभिन्नाश्रया भवनक्रिया इति शाब्दबोधो भवति।

नञर्थोऽभावः यदा स्वप्रतियोगिनि विशेष्यं भवति तदा कथमर्थ बोधः? का च विसंगतिः ? इति इदानीं विचार्यते-

अयं भाव-गोणत्वेऽपि 'एतत्तदोः सुलोपोऽकोरनञ् समासे हलि' (६.१.१३२) इति सूत्रेण अकचः ककाररहितस्य नञ्समासाघटकीभूतस्य एतद् तथा तद्शब्दस्य सुप्रत्ययस्य लोपः क्रियते। अत्र एतत्तदोः सर्वनाम संज्ञा यथावद् भवति, न तु निषिद्धा भवति, अत्र सूत्रे 'अनञ्समासे' इति निषेध एव ज्ञापकम्। अत एव 'असः शिवः' इत्यत्र सुलोपवारणाय सूत्रे 'अनञ्समासे' इत्यंशः एतत्तदोः शब्दयोः विशेषणं मत्वा सूत्रे पठितः। यद्यपि 'असः शिवः' इत्यत्र गौणत्वात् तद्शब्दस्य सर्वनाम संज्ञा प्रतिषिद्धा भवति तथापि 'अकोः' विशेषणदानेन

साकच्क्योः एतद्तदोः व्यावृत्या उभयोः सर्वनामत्वस्य संसिद्धिः जायते। 'अनञ्समासे इति ग्रहणेन एतद् सम्यग्रूपेण सिद्ध्यति।

इदानीमत्र अभावस्य विशेष्यत्वे सति समुत्पन्नानां विसंगतीनां क्रमशः समाधानां क्रियते-

१. 'अनेकमन्यपदार्थे' इति सूत्रघटकीभूते 'अनेकम्' इति पदे एकवचनस्य संगतिः कथं भविष्यति इति जिज्ञासायामाह-न एकम् इति अनेकम् अत्र अनेकमिति पदात् एकस्माद् भिन्नः, इत्यर्थक रणात् द्विवचने 'अनेके' अथवा बहुवचने 'अनेकानि' इति भवितव्यम् यतोहि समासः सदा द्वयोः उत त्रयाणां पदानां भवति न तु एकस्य पदस्य अतः अत्र एकवचनं किमर्थम् ? इति विसंगतिः। अस्याः विसंगतेः समाधानं कुर्वन्नेवं वदति विशेष्यतावादी यत् 'अनेकमन्यपदार्थे इति सूत्रे 'सुबामन्त्रिते' पराङ्गवत् स्वरे' (२.१.२) इति सूत्रात् एकवचनस्य 'सुप्' इत्यस्य विशेष्यपदस्य अनुवृत्तिः भवति, तस्मात् कारणादत्र 'अनेकम्' इति पदे एकवचनं दृश्यते, यतोहि नियमोऽयं वर्तते यत् असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमः। अर्थात् यद् वचनं विशेष्ये भवति तदेव विशेषणेऽपि भवति, अतोऽत्र नास्ति काचिद् विसंगति।

द्वितीयं समाधानमिदमपि अस्ति यत् 'अनेकम्' इति पदात् यदि द्विवचनम्, तथा त्रिपदबहुव्रीहिकरणार्थं बहूनां पदानां समासकरणाय बहुवचनमपि आनेतव्यं स्यात् तदा तु द्वयोः पदयोः बहुव्रीहिरेव न सिद्ध्येत् अतः उभयोः द्विपदत्रिपदबहुव्रीह्योः संग्रहाय एकवचनमेव उचितम् अथवा जातौ एकवचनमेव सुवचम्, अथवा 'एकवचनम् उत्सर्गः करिष्यते' इति नियमात् औत्सर्गिकम्-स्वाभाविकम् एकवचनम् अस्तीति विज्ञेयम्। अनेकम् इत्यत्र उत्तरपदार्थप्राधान्याद् एकवचनमित्येव समाधानं नास्ति।

२. शिशुपालबधमिति काव्यस्य चतुर्थसर्गस्य द्विचत्वारिंशत्तमे श्लोके 'अनेकया' इति पदमागतम् अस्ति। तच्च पदं 'योषया' इति पदस्य विशेषणमस्ति। अतः 'अनेकया' इत्यत्र विशेष्यानुसारमेकवचनमिति विशेषणपदे स्वाभाविकम् अस्ति। अथवा प्रत्येकया स्त्रिया सह सेवन क्रियाऽन्वयप्रदर्शनाय कविना एकवचनप्रयोगः कृतः स्यात्। तत्र उत्तरपदार्थप्राधान्यात् कारणात् एकवचनमित्येव वक्तुं न शक्यते। एवमेव 'अनेके' इत्यत्रापि 'वीराः' इति बहुवचनान्तं विशेष्यमाश्रित्य समाधानं कर्तुं शक्यते।

३. अत्वं भवसि इत्यत्र युष्मद्शब्दस्य त्वद्भिन्नेऽर्थे लक्षणाऽस्ति। एवमेव 'अनहं भवामि' इत्यत्रापि अस्मद्शब्दस्य मद्भिन्नार्थे लक्षणास्ति। नञ् च द्योतकोऽस्ति। अतः भिन्नेन युष्मदर्थेन सह तिङः-सिप्रत्ययस्य सामानाधिकरण्यस्य सत्त्वात् पुरूषव्यवस्थापि सूपपन्ना भविष्यति। त्वद्भिन्नाभिन्नाश्रयिका भवनक्रिया इत्येवं शाब्दबोधोऽपि सुस्पष्टः। एवमेव 'न त्वं पचसि' इत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाऽभावः, इति बोधः अभाव विशेष्यकः संजायते।

४. असमासस्थले नञः क्रियायामेव अन्वयो भवति। अतः 'घटो नास्ति' इत्यत्र घटादभिन्नः आश्रयो यस्याः, एतादृशी या भवन क्रिया, तस्या अभावः इत्येवं शाब्दबोधोऽत्र विज्ञेयः। नञः वाच्यार्थोऽभावोऽस्ति। स च अभावः कुत्रचित् तु अत्यन्ताभावे अर्थे कुत्रचिच्च अन्योऽन्याभावे अर्थे दृश्यते। उभयथा हि उदाहरणानि प्राप्यन्ते। तद्यथा-अत्यन्ताऽभावस्य उदाहरणम्-बन्ध्या सुतो नास्ति। अत्र बन्ध्यायाः पुत्रस्य त्रैकालिकः सर्वथाः अभावः, अतो अत्र अत्यन्ताभावो भवति। अन्योऽन्याभावस्योदाहरणं यथा-'घटः पटो न' इति। अयं घटोऽस्ति न तु पटः इत्यस्यार्थः, अत्र पटभेदवान् घटः, इति बोधः। अत्र नञः अन्योऽन्याभाव उच्यते। पटस्य घटे अभावः, घटस्य च पटे अभावः इति।

■ पता : एसोसिएट प्रोफेसर, रामानन्दाचार्य सं.वि.वि. जयपुर

# आचार्यरामनारायण त्रिपाठी

■ गिरिधर त्रिपाठी

व्याकरणवेदान्त और धर्मशास्त्र निष्णात आचार्य राम नारायण त्रिपाठी का जन्म गोरखपुर जनपद में मुख्यालय से ५० किलोमीटर पर पुण्यसलिला सरयू के उत्तर दिशा में जगदीशपुर ग्राम के सरयूपारीण विप्रवंश में हुआ। आपके पिता श्री बाल विहारी त्रिपाठी एवं माता श्रीमती धन्ना देवी थी।

कैशोरावस्था होने पर आपने गांव के समीप प्राथमिक शिक्षा प्राप्तकर क्रमशः नव्यव्याकरण का आश्रण करके प्रथमा-मध्यमा परीक्षा उत्तीर्ण करके आप काशी आ गये। यहां मनोयोगपूर्वक अध्ययन करके आपने १६४८ ई. में नव्य व्याकरणाचार्य परीक्षा उत्तीर्ण की। काशी एवं अन्यत्र अध्यापन करते हुए आपने शाङ्करवेदान्त एवं धर्मशास्त्र विषय की आचार्य परीक्षा उत्तमाङ्क के साथ स्वर्णपदक पूर्वक उत्तीर्ण किया। आपके गुरुजनों में प्रमुख स्वतन्त्र स्वतन्त्र पं. रघुनाथ शर्मा एवं वैयाकरणकेशरी पं. मुरलीधर मिश्र आदि थे।

आचार्य त्रिपाठी १६६८ में लखनऊ विश्वविद्यालय के प्राच्य संस्कृत विभाग में क्रमशः प्राध्यापक एवं विभागाध्यक्ष हुये। वहां अध्यापन करते हुए आपने अपार यश अर्जित किया। १६८२ में सेवानिवृत्ति के पश्चात् आपने नैमिषारण्य के वैदिक पौराणिक शोध-संस्थान एवं सम्पूर्णानन्द संस्कृत विश्वविद्यालय के सरस्वती भवन पुस्तकालय में पर्यवेक्षक के रूप में संस्कृतवाङ्मय की उल्लेखनीय सेवा की। आपने अध्यापनकाल में एवं उसके अनन्तर संस्कृत एवं हिन्दी में शताधिक शोध निबन्ध लिखे, जिनका प्रकाशन शोध पत्रिकाओं अभिनन्दनादि ग्रन्थों में हुआ।

लोकोत्तरप्रतिभा के धनी आचार्य त्रिपाठी ने विभिन्न विद्वद्गोष्ठीयों एवं सभाओं में निबन्ध वाचन एवं उद्बोधन प्रदान किया। लखनऊ केन्द्रीय संस्कृत विद्यापीठ के आप सम्मान्य सभापण्डित रहे हैं।

आचार्य त्रिपाठी ने अब तक बारह ग्रन्थों का प्रणयन किया है जिनमें स्वप्नविमर्श कालिकल्पद्रूवल्लरी, संस्कृत अध्यापन विधि, ऋतु-विलास, एवं शशिकला महाकाव्य प्रकाशित तथा अन्य अप्रकाशित है। आन्जनेय स्तोत्र, पाणिनीय संज्ञा विमर्श, सर्वज्ञात्मुनि, निविशेषादूतवाद, उणादि शब्द कोश, शैव सिद्धान्त परिचय। ये अप्रकाशित ग्रन्थ है जिनकी पाण्डुलिपि सुरक्षित है।

आकाशवाणी से आपकी वार्तायें निरन्तर प्रसारित होती रही है। आपका दूरदर्शन में सम्वाद एवं कवितापाठ भी बहुधा हुये है। तपःपूत आचार्य त्रिपाठी काशी के विद्वद्समाज में समान रूप से आदृत है। इनके विशिष्ट वैदुष्य के कारण सम्पूर्णानन्दसंस्कृतविश्वविद्यालय वाराणसी ने आपको शास्त्रप्रौढी योजना में सम्मान्याचार्य (विजिटिंग प्रोफेसर) नियुक्त किया। काशी में आपके पाण्डित्य का लाभ छात्र अध्यापक सभी उठाते रहे हैं।

आचार्य त्रिपाठी ८४ वर्ष की आयु में अस्वस्थ रहते हुए भी संस्कृत सेवा में तत्पर रहते हैं। आज भारतवर्ष में आपके सदृश आचारसम्पन्न आचार्य विरल हैं।

अध्यापनं वै ब्राह्मणस्य वृत्तिः इस प्रदीपकार कैयट के वचन को चरितार्थ करते हुए संस्कृत ज्ञानसपिपासुओं के आप आश्रयभूत आचार्य है। आचार्य रामनारायण त्रिपाठी उत्तरप्रदेश संस्कृतसंस्थानम् द्वारा वर्ष १६८५ में विशिष्टसंस्कृतसाहित्यपुरस्कार, १६६७ में 'शङ्करपुरस्कार' तथा वर्ष २००० में व्यासपुरस्कार से सम्मानित हैं।

१६६६ वर्ष भारतगणराज्य के महामहिम राष्ट्रपति ने आचार्य त्रिपाठी को 'राष्ट्रपतिपुरस्कार' से सम्मानित किया है।

महामनीषि आचार्य रामनारायणत्रिपाठी को समस्त संस्कृतवाङ्मय के संवाहक मानते हुए 'उत्तरप्रदेश संस्कृत संस्थानम्' आपको विश्वभारती नामक अपने सर्वोच्च सम्मान से वर्ष २००५ में सम्मानित किया।

■ पता : लखनऊ विश्वविद्यालय, लखनऊ

# स्वाध्याय चिन्तनस्य वैश्विकदृष्टिः

■ अरुण कुमार मिश्रः

"स्वाध्यायोऽध्येतव्याः" इत्यध्ययनविधिमङ्गीकृत्यैव अयं निबन्धः कृतः। तत्र विश्वेऽस्मिन् सर्वे धर्माः (सम्प्रदाया मता वा) प्रायशः केनचित्महापुरुषेण प्रवर्तिताः प्रायोजिताः सम्बर्द्धिताः प्रचारिताश्च। शिष्यानुशिष्यपरम्परया प्रचलिताः अद्यावधि दृश्यन्ते। एतेषु केचन महापुरुषविशेषेण स्वयंगृहीतानुभवादेव प्रादुर्भूताः, यथा बौद्धधर्मः, केचन भगवतः प्रेरणदेवदूतेन प्रेषितेन पुस्तकेन, यथा खिष्टधर्मः, इस्लाम धर्मश्च। अस्मिन् विषये प्रर्क्तकस्योपदेशः ईश्वरीयप्रेषितग्रन्थाश्च प्रमाणरूपेण गृह्यन्ते। यत्र क्वचित् संशयो भवति, तत्र-तत्र उपदेशनिष्ठनिर्देशात् पुस्तकनिष्ठनिर्देशाच्च व्यवहारः प्रवर्तते। विदुषां कृताः समाधानाश्चापि प्रमाणरूपेण स्वीकृताः। सर्वे अनुयायिनः प्रवर्तितान् विधिनिषेधनियमान् अनुपालयन्ति। एते सर्वे धर्माः परवर्त्तिनः। भारतवर्षे धर्मस्य मूलं वेद एव इति कृत्वा सर्वे अनुयायिनः आस्थानुसारं एव व्यवहरन्ति। वेदाः विद्वद्भिः अपौरुषेयाः मन्यन्ते। अतोऽस्माकं धर्मः "सनातनधर्मः" इति नाम्ना ज्ञायते। सनातनशब्देन एवं ज्ञायते यदेषामन्तः कोऽपि न जानाति "अनादिनिधनमेवेति" इति स्थितः। अतः सम्प्रदायाविच्छिन्नत्वे सति अस्मर्यमाणकर्त्तृकत्वम् एव वेदः निगमागम वा इति निर्विवादः। अपौरुषेयविषयेऽपि किञ्चिच्चिन्त्यम्। मनुष्यः सर्वज्ञो भवितुं नार्हति। अतः अयं मनुष्यकृतिः न सम्भाव्यते। ईश्वरेणाप्यस्यनिर्माणं न सम्भवति। यतो हि येन यदुत्पद्यते स (उत्पादकः) उत्पद्यमानस्य पूर्वभावी भवति, न च पश्चाद्भावी। परमेश्वस्य ज्ञानं तस्यास्तित्वं च वेदेनेव ज्ञायते, अतएव वेदस्यानन्तरमेव तस्य स्थितिर्भवति। ततः स कथं पूर्वभावी वेदस्य कर्त्ता भवितुमर्हति ? अतः ईश्वरेणापि वेदस्य प्रणनयनं न सम्भवति। अपरं च विद्-ज्ञानेन धातुना निष्पन्नो वेदशब्दः ज्ञान एव तत्तु स्वतः सिद्धः, ब्रह्मस्वरूपः, सर्वस्ययोनिः (वेद शब्देभ्य एवादौ पृथक् संस्था च निर्ममे' इत्यादयः)[1] अतः कर्त्ता कथमपि न कल्पनीयः। एवं ज्ञानत्वाद्वेदोपि अपौरूषेयः।

ध्यानयोगानुगत अन्तर्दृष्ट्या दृष्टः, शब्देनैवाधिगतः शब्दादेव व्युत्पद्यमानो भवति। उक्तं भर्तृहरिणा - "स्वानुभूत्यैकमानाय नमः शान्ताय तेजसे।"[2]

शब्देन प्रतिपाद्यमानत्वात् ऋषिभिः अधिगतत्वात् शब्दमाध्यमेनैव-स्वानुभवंगतं ह्युक्तत्वाद् "शब्दराशिर्वेदः" इत्यपि श्रूयते। "उक्तं च हरिणाऽपि-

**न सोऽस्ति प्रत्ययो लोको यः शब्दानुगमादृते।**
**अनुबिद्धमिवज्ञानं सर्वं शब्देन भासते।।**[3]

सर्वाणि शास्त्राणि वेदमाश्रित्य एव प्रणीतानि अतः तान्यपि प्रमाणत्वेन स्वीकृतानि आचार्यैः। अतः धर्माः ज्ञानार्थं शिष्यस्योपदेशाः आचरणानिं च सदा स्मृतिपथे उपस्थितानि भवन्तु इति कृत्वा तेषांस्मरणं अभ्यासं च सर्वे धर्मानुयायिनः कुर्वन्ति। आवश्यकीयं कृत्यं तेषामिदं इति प्रतिपादितम्। इदं एवं कर्म स्वाध्यायाध्ययनस्यान्तर्गतं विद्यते। यमवलम्ब्यमयम् प्रबन्धः।

सर्वे धर्माः जीवनसंग्रामे द्विविधाः प्रयुक्ताः। ऐहिकः सुखशान्त्यर्थं, मोक्षं, कैवल्यं, निर्वाणं, स्वर्गादिकं वा प्राप्तुम् अमुष्मिकं च। अनुयायिनां कृते धर्मस्य ज्ञानं, प्रवर्त्तकानामुपदेशाश्च सर्वदा सर्वथा ध्येयाः अभ्यासनीयानि,

स्मर्त्तव्यानि च। एतदभ्यासेन सर्वे प्रेरिताः भवन्ति-तत्र उपदेशानां लेखनं, पठनं स्मरणं मुर्हुर्मुहुः अभ्यासनं च स्वाध्यायशब्देनात्र निगदितः।

जनै-बौद्धानुयायिनः स्व-स्व प्रवर्त्तकानामुपदेशान् पालयन्ति पाठयन्ति, अभ्यस्यन्ति, पठन्ति, मनन्ति च। इस्लामानुयायिनोऽपि ज्ञानस्य प्राधान्यं मन्यन्ते।[४]

आयतरनां पाठे अशुद्धिः मा भूतः अतः अस्मानेन कुरानशरीफ ग्रन्थस्य प्रमाणिकी लिपीन् कृत्वा कारयित्वा च स्वस्य संरक्षणे मिश्रदेशे, बसरादेशे शामादि देशे च प्रेषितवान येन तत्रत्यानुयायिनः शुद्धोच्चारणेन कुरानस्य पाठं कुर्युः।[५]

कुरानस्य पाठ एव न महत्त्वपूर्ण अपितु आत्मशुद्धिरपि करणीया। नमाजे, व्याख्याने कतिपय अवसरेषु 'कुरानखानी' (कुरानपारायणश्च) भवति। खिष्टानुयायिनोऽपि चर्चेषु प्रार्थनायां नित्यं, विशेषतः रविवासरे, बायविलस्यांश पठन्ति, उपदिशन्ति च। एवं सर्वेऽपि धर्मानुयायिनः स्व-स्व ग्रन्थस्य पाठं अविकलरूपेण अवसरविशेषेषु नित्यपूजायामपि अवश्यं कुर्वन्ति येन धर्मकार्ये च्युतिः मा भवेत्।[६] The Concept of aquiring religion merit by reciting various parts of Kuran is an eco of the persion leelief in the merit of reciting Avestan vendidad. In both creeds, the recital of the sacred Book relieves man of awy demerits aeqired on earth, it is essential, even, for the salvation of the sowl. Both Muslimes and Zoroastrians read the Holy Bork for srveral days ofter the death, of a member of the family."

वेदेष्वनेकाः शाखाः प्रचलिताः सन्ति-यथा माध्यन्दिन, वाजसनेयी, कौथुमादयः। शाखा नाम वेदस्यांशः यस्य स्वाध्यायः परम्परया प्रचलति। शाखाया अध्येतारः मन्त्राणामुच्चारणं मन्त्राणामर्थः मन्त्राणादीन् यज्ञेषु विनियोगादीन् जानन्ति। अन्यानपि उपवीतिनो पाठयन्ति च। तत्र स्वर, आनुपूर्वी, पदपाठादयः-क्रमेणाध्ययनेन अपूर्वः उत्पद्यते येनाध्यायिनः महत् पुण्यं प्राप्नुवन्ति।

इह लोके सुखं भुक्त्वा अन्ते मोक्षमधिगच्छन्ति। येषां वेदपठनेऽधिकारः नास्ति तेभ्यः वेदा-धारित एव अन्यान्यपि शास्त्राणि विद्वद्भिः प्रणीतानि। तत्र सर्वत्र एव स्वाध्यायस्य महत्वं गीतायम्। अतः प्रबन्धेऽस्मिन् वेदेष्वु स्वाध्यायः इत्यारभ्य ब्राह्मणग्रन्थेषु आरण्यकग्रन्थेषु, उपनिषत्सु वेदाङ्गेषु, श्रौत, धर्म, गृह्यादि, सूत्रेषु, धर्मशास्त्रेषु (धर्मशास्त्रेण स्मृतयः उक्ताः)[७]।

रामायणेषु, महाभारतेषु, पुराणेषु, गीतायाम्-योगशास्त्रे, मीमांसायाम्, वेदान्ते, जैनागमे, बौद्धागमे कथं रूपेण ज्ञायते ? अध्ययनस्य किं फलम् ? इत्यादि विषयाः अत्र निबन्धे ग्रथिताः येन सर्वेषां जनानां स्वधर्मे, स्वदेशे, स्वसंस्कारे, स्वसंस्कृतौ, स्वभाषायामनुरक्तिः भवति। राष्ट्रचेतना उद्बुद्धा भवेत्। उक्तं च मनुना ऋग्वेद-ऋचामधिकृत्य-

**य आवृणोत्याविततथं ब्रह्मणाश्रवणावुभौ।**
**स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन।।[८]**
**सपत्नक्षयणो विषामिराष्ट्रो विषासहिः।**
**यथाहमेषां वीराणां विराजानि जनस्य च।।[९]**

अनेन स्वाध्यायकर्मणा-

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभागवेत्।।**

## संदर्भ-सङ्केत

१. मनुस्मृ. १/२१

२. नीतिशतकस्य-मङ्गलश्लोक

३. वाक्य पदीय-ब्रह्मकाण्डः

४. कुरानशरीफस्य पारा ३० सूरा. इक्कारा (साक्षात्कारे मौलाना अब्दुलानासीर कासमी हदीस विभाग, मदरसा जामा इस्लामिया, वाराणसी)

५. कुरानशरीफस्य हिन्दी अनुवादम् इति पुस्तकस्य भूमिकायाम् पृ. ७६

६. Why i am not a Muslim. By P. 44

ibn - Warra Q.

Prometheous Book, 59, John Glem Drive

Amherst, Newyork, 14228 - 2197 - 1995

७. मनु. पूर्वोक्तम् मनु. २/१०

८. मनु. २/१४४

९. अथर्ववेद

■ पता : आचार्यः, श्रीमाता वैष्णों देवी गुरूकुल चरण पादुका, कटड़ा, जम्मू

# प्रातिभासिकसत्त्वोपपत्तिः

■ धनञ्जयकुमारपाण्डेय

अथेह वेदान्तदर्शनमधिकृत्य प्रातिभासिकतत्त्वं विव्रियते। वेदान्तवाक्यैरप्यस्य स्वरूपलाभो यशावसरं वर्णयिष्यते। सर्वेषां वेदान्तानां निर्विशेषचिति ब्रह्मण्येव परमंतात्पर्यमिति वेदान्तविदो वदन्ति। तदर्थोपपत्तय एव सर्वे विचारा प्रवृत्ताः। सर्वथाऽबाध्यत्वमेव सत्त्वमत्राभिषिच्यते पारमार्थिकत्वलक्षणं, किन्त्वस्याबाध्यत्वं किमपेक्षमिति धिया व्यावहारिकसत्त्वमायाति विचारणासु सर्वत्र। एवञ्च सत्त्वद्वयं तत्र तत्रोपपत्तिमधिगच्छति। प्रातिभासिकसत्त्वव्यवस्थितौ सर्वेऽपि विवदन्ते। अद्वैतिनस्तावद् एतस्य पृथक् सत्त्वमभ्युगच्छन्तः संगिरन्ते-बाध्यत्वान्यशानुपपत्त्या तावदधिगन्तव्यं भवति सत्त्वमस्येति। अतश्च सर्वोऽपि तत्प्रतिपादको विचारः सूत्रभाष्यादिग्रन्थाहत आरभ्यते परमेशप्रीत्यर्थमिति।

शारीरिकभाष्यारम्भ एव भगवत्पादैः समन्वयाधिकरणे 'आत्मा वाऽरे द्रष्टव्य'[1] इत्यादिश्रुतितात्पर्य विषयीभूतस्यात्मनः सर्वधर्मातीतस्य[2] ''इदं तु पारमार्थिकं कूटस्थनित्यं, व्योमवत्सर्वव्यापि, सर्वक्रियारहितं नित्यतृप्तं स्वयं ज्योतिः स्वभाव''मित्यादिवचोभिः पारमार्थिकत्त्वं सन्न्यरूपि। आरम्भणाधिकरणस्वारस्येन[3] ''मृचिकेत्येवसत्त्यमिति''श्रुतितात्पर्यविनिश्चयावगमादस्याद्वैतब्रह्मणः सर्वबाधावशेषत्वेन पारमार्थिक सत्त्वमावेद्यते। तदनु सत्यानृतयुगलीभावस्य नामरूपात्मकद्वैतप्रपञ्चस्य नैसर्गिकोक्त्या तदवरञ्चायाति व्यावहारिकं सत्त्वम्। प्रत्यक्षादि प्रमाणानामविद्यावद्विषयत्वं संस्थाप्य चाग्रे ''न चैतस्मिन्सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वभुपपद्यतः''[4] इत्यादिनाऽध्यासभाष्यनिरूपणेन प्रमातृत्वादीनां तन्मूलहानोपादानादिसर्वव्यवहाराणाञ्च व्यावहारिक सत्त्वं श्रुत्यभिप्रेतं वर्णितं भवति। भगवत्पादोक्तसारञ्चाकलय्य श्रीमिश्रवर्याः ''श्रुतिस्मृतीतिहास पुराणगोचरस्य चिदात्मनो नित्यशुद्धबुद्धमुक्तस्वभावस्य सत्त्वेन निर्वाच्यत्वमभ्युपेत्य''[5] अबाधिता स्वयं प्रकाशतैवास्य सत्ता, सा च स्वरूपपेमात्मनो न तु तदतिरिक्तं सत्तासामान्य समवायोऽर्थक्रियाकारिता वेति'' ग्रन्थेन तामेव परमार्थिकीं सत्तामधिजग्मुः।

यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतिवाक्यानुसारि ''अपरोक्षत्वाच्च प्रत्यागात्मसिद्धेरिति[6]भगवद्वाक्यमपि ब्रह्मणोऽपरोक्षत्वं संसूचयत्सर्वप्रपञ्चभानस्यापि तदधीनत्वं विवृणुते। अन्यथा तदपरोक्षत्वमन्तरा प्रत्यक्षादिव्यवहारोऽपि व्याहन्येत। एतदेव भामत्यां व्याख्यातमस्ति। चिदात्मनोऽपरोक्ष ताप्रशायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्ग इत्युक्त्वा श्री मिश्राः प्रमाणभूतां श्रुतिमपि'' तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वामिदं विभातीति''[7] ददृशुः। एवं रीत्या सर्वत्रापि भाष्यभामत्योः प्रतिपादनासु सर्वासु सत्त्वद्वयं विस्पष्टं श्रूयते यत्र नास्ति विप्रतिपत्त्यवसरः।

भ्रमविषयाणां पौनः पुन्येनोल्लेखादायाति प्रातिभासिकं सत्त्वम्। सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरतीति भगवद्वचसा भ्रमभातपदार्थसत्त्वं निगदव्याख्यातं भवति। तदग्र एव[8] ''तथा च लोकेऽनुभवः शुक्तिका हि रजतवदवभासत'' इत्यनेन लोकानुभवस्य बाधकत्वो-पपचिरपि शुक्तिरूपस्य सत्त्वमवद्योतयति। तदेव[9] ''न केवलेयमनृतता परीक्षकाणां सिद्धा अपि तु लौकिकानामपीत्यनेन भाष्यभामत्यां प्रातिभासिकस्वीकार पक्षोऽव लोक्यते। अध्यास निरूपणवेलायामवभास पदमहिम्ना व्यावहारिकप्रातिभासिकसत्ते बोधिते। अत एव तत्र[10] ''प्रत्यया-न्तर बाधश्चास्यावसादोऽवमानो वा, एतावता मिथ्याज्ञानमित्युक्तं भवतीति''-टीकाकृतोऽवचोयन्। वर्णितेनानेन सत्तात्रैविध्यमेवापद्यते।

[११]"स्वप्नस्यापि स्मृतिविभ्रमरूपस्यैवं रूपत्वादिति"भामतीग्रन्थेन साक्षादेव प्रातिभासिकर सत्त्वोक्तिः सङ्गच्छते। स्वाप्न शुक्तिरूप्यभ्रमयोः अनिर्वचनीयता मुखेन प्रातिभासिकता समान मेवावेद्यते। अत एवैतद विवृतं तावत् कल्पतरूपरिमले तद्यथा-[१२]

"एवञ्च सिद्धान्त्यभिमता शशश्रृङ्गादिशब्दजन्या असत्प्रतीतिः न शुक्तिरजतादिज्ञानवदध्यासो नापि घटादिज्ञानवत्प्रमा किंतूभयविलक्षणं ज्ञानमात्रमिति" एतेन, प्रातिभासिकसत्ताऽन्यैर्व्यावृत्ता तिसृषु सत्तासु अन्यतमत्वेन स्थानं लभते।

"अपि च स्यादेतदेवं, यदि रज्जुस्वरूपश्रवण एवं सर्पभ्रान्ति, संसारित्वभ्रान्तिब्रह्मस्वरूपमात्रेण निवर्तेत"[१३]। इत्यादि प्रतिपादनेन भ्रमपदार्थस्योल्लेखो जायते, येन तस्य पारिशेष्यादवगम्यते प्रातिमासिकत्वम्। अत्र भ्रान्तिरिति पदेन प्रातिभासिकोल्लेखात् नाम्ना नोल्लेखः कृत इत्यपि निराकृतं वेदितव्यम्। एतेनाव पारमार्थिकत्वं यथोपवर्णितं भवति, तथैव प्रातिभासिक सत्ताऽपि व्याख्याता।

एवं रीत्या दहराधिकरणे "[१४]तस्माद्यदविद्याप्रत्युपस्थापितं मपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोष कलुषित मनेकानर्थ तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादि गुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते सर्पादिविलयनेनेव रज्ज्वादीनित्यादिना" सत्त्वत्रयमुपदर्शितम् भवति। तदग्र एव "तेषां सर्वेषांमात्मैकत्व सम्यगुदर्शन प्रतिपक्ष भूतानां प्रबोधायेदं शारीरकमारब्धम्"[१५] इति भाष्यग्रन्थेन यदुक्तं तस्य सारोऽपि विलक्षणत्वाधिकरणमधि-कृत्योपन्यस्तो भगवता-तद्यथा-"[१६]अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः। तच्च सम्यग्ज्ञान मेकरूपं वस्तुतन्त्रत्वात्। एकरूपेणाहयवस्थितोऽर्थः परमार्थः। लोके च तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते। यथाग्निरूष्ण इति। तत्रैवं सति सम्यग्ज्ञाने पुरूषाणां विप्रति पचिरनुपपन्ना। इति"। "[१७]सर्वव्यवहाराणां प्रागू ब्रह्मात्मताविशानात्सत्त्य त्वोपपचेः, स्वप्न व्यवहारस्येव प्राक् प्रबोधादिति" ग्रन्थेन व्यावहारिक प्रातिभासिक सत्त्वयोर्महदन्तरं स्पष्टीकृत्य भगवताऽत्रापि तैविध्यमेतदुपपाद्यते। रचनानुपपत्त्यधिकरणे ब्रह्मणः सजातीयादिसर्वभेद रहितस्य विषयविषयिभावानुपपत्तिं प्रदर्श्य सर्वस्यास्य विकार भेदस्य वाचारम्भणमात्रत्व प्रतिपादनेनानिर्माक्ष शङ्काः[१८] "स्वप्नेऽपि नोपजा यत इति प्रोक्तम्। तदनु "व्यवहारे तु यत्र यथा दृष्टस्तत्पयतापक तापकभावस्तत्र तथैव" स इति भाष्यवचनेन व्यावहारिक स्वाप्निकयो र्निवृत्यन्यथानुपपत्त्या चर्चे कृते इति।

"[१९]एवं हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वं ज्ञायते यदि ब्रह्मेव तत्त्वं जगतो भवेत्। यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति", इति भामती ग्रन्थेनापि विस्पष्टमेवात्मनः सर्वथाऽबाध्यात्मक सत्त्वं निर्देशयदन्य द्वय स्यापि सत्त्वे अवबोधयति।

एवञ्च यन्निवर्तते तस्य सत्त्वमवश्यमेवाभ्युपेयम्। सानिवृत्तिर्यथा व्यवहारदशायन्नानां वस्तूनांमात्मावगत्या श्रूयते, तथैव शुक्त्याद्यधिष्टान-साक्षात्कारेण निवर्तक ज्ञानेन वा रजतादिपदार्थानां तज्ज्ञानामपि निवृत्तिर्दृश्यते। निवृत्त्यन्यथाऽनुपपत्त्याऽवश्यमेव कस्यचित्सतः भ्रमभावपदार्थस्य सत्त्वं स्वीकरणीयमिति रीत्या बलादेव तस्य प्रातिभासिकत्वं सिद्ध्यति। तत्र तत्र च ब्रह्म विद्योपपत्तये निर्विशेष-वस्तुलाभाय द्वैतात्मक प्रपञ्चस्य विनिवृत्तिरूपयुज्यते।

"यत्र हि हैतमिव भवति तदितरं इतरं पश्यतीत्यादि"[२०]श्रुत्या व्यावहारिक सत्ता साक्षादेवावेद्यते। अपि च प्रपञ्चस्य ब्रह्मप्रभातिरिक्ता बाध्यत्वोक्तौ यथा ब्रह्मप्रभा बाध्यत्वं सिद्धयति। तथैव ब्रह्मप्रभातिरिक्तया प्रमया शुक्त्यादि ज्ञानेनाधिष्ठान साक्षात्कारेण रजतादीना मपि बाध्यत्वमिष्टं भवति।

रजतादिप्रतीतेस्तु लोक दशायामेव बाधो, सर्वलोकसिद्धो दृश्यते। तदर्थश्चायं बाधो न श्रुत्यावेद्यतेऽपुरूषार्थत्वात् आवेद्यते चायं प्रपञ्च बाधः पौनः पुनेयन पुरूषार्थावाप्तये परप्राप्तौ, तदर्थ एवारम्भो युक्तः। अतश्च व्यावहारिकत्वोपपत्त्याऽर्थतस्सिध्यति रजतादिवाधो येन प्रातिभासिक त्वमुपद्यते नात्र संशयः।

अत्रेदमवधारणीयं भवति-अद्वैतसिद्धिकृद्भिस्तावन्मिथ्याशब्दः अनि वचनीयता-वचनः इति पञ्चपादिकाकृन्मत विवेचनावसरे व्यलेखि-[२१] "तथा हि अत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमान-त्वानधिकरणत्वमिति।" अत्र प्रतीय मानस्य प्रातिभासिकरजतादेस्तज्ज्ञानस्य च न कयाऽपि रीत्याऽसत्त्वमपहनोतुं शक्यम्। सिद्धान्ते तत्तत्प्रातिभासिक स्थलेषु तत्तदवच्छिन्नचैतन्यनिष्ठाविद्यापरिणाम-स्यैवानिर्वचनीयत्वं युज्यते। अन्यथा एकत्र विक्षेपशक्तिमद ज्ञानोपहित चैतन्यादाकाशाद्युत्पत्तिश्रवणात्तस्य सत्त्व मन्यत्रासत्त्वमिति न स्यात्। एवञ्चासत्त्व व्यावृत्तमिदं प्रातिभासिकसत्त्वमुक्तं भवति।

अपि च ब्रह्मनश्चियादेव साक्षात्काराद् विलीयतेऽयं प्रपञ्चस्तवत् शुक्तिसाक्षात्कारनाश्यमिदं रजतमिति प्रतीयते। सदेवेत्यादिश्रुत्यवधारणेन एवपदमहिम्नाऽन्यस्य प्रतीयमानस्य यथाऽयाति व्यावहारिकसत्त्वं तथैव शुक्त्याद्यधिष्ठान साक्षात्कारात् प्राक् प्रतीयमानरजतादीनां सत्त्वोल्लेखः कार्यः, पारिशेष्याच्च तस्य केवलं प्रतिभासमात्र शरीरस्योच्यते प्रातिभासिकत्वम्। छान्दोभ्योपनिषदि दृष्टान्तमुखेनास्य समर्थनं कृतं विद्यते तद्यथा-[२२]

"उच्यते-'स्वाभाविकस्यात्मन्यकियेऽध्यारोपितस्य कर्त्रादिकारक क्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानम्। रज्ज्वादाविव सर्पाद्याध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्रः इति"।

अनेन अध्यारोपकथनेन प्रतीयमानत्वाविशेषात् सत्त्वस्वीकृत्या सर्पाद्याध्यारोपल क्षणज्ञानोक्त्या चानिर्वचनीयरजतादिसत्त्वं व्याख्यातमस्ति। "संध्ये सृष्टिराह हि" इति सूत्रभाष्ये "न तावत्स्वप्ने रथादीनामुपचितो देशः सम्भवति। नहि संवृते देहदेशे रथादयोऽवकाशं लभेरन्" इति प्रतिपादनेन प्रातिभासिकता रथादीनां लभ्यतेऽन्यथा तत्रापि पुरूषार्थत्वं प्रसज्येत। "एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यात इतिभामतीग्रन्थेन व्यावहारिकप्रातिभासिकयोमिथ्यात्वनिश्चये समानेऽपि स्थिरास्थिरत्वेन भेद उपयुज्यते। एकस्य व्यवहार दशायां बाधोऽभिप्रेयतेऽवरस्य ब्रह्मसाक्षात्कारेणेत्येतदत्यन्तं स्पष्टमिति नात्र विप्रतिपत्तिगन्धः। अनिर्वचनीयायां ख्यातौ पूर्वोक्तस्यैव मण्डनादधिगम्यते प्रागुक्तः सर्वविचारो नेह प्रतन्यते विस्तरभयादिति।

अद्वैतसिद्धौ सत्तात्रैविध्योपपादनावसरे न्यायामृतोक्तदूषणानि निराकृतान्येव।

त्रैविध्योपपत्तिरपि प्रातिभासिक त्वोपपत्तिं प्रकाशयते। तत्रत्योविचारस्तावदस्यां विचारणायां संक्षेपतो विविच्यते तदुपपत्त्यर्थम्। सत्तात्रैविध्योपपादने अद्वैतसिद्धौ प्रातिभासिकसत्त्वमेतन्मण्डितमस्ति। न चैतेन विभागस्य तात्त्विकत्वोपन्यासादद्वैत क्षतिरिति शङ्क्यम्-तादृशस्य विभागस्य व्यावहारिकत्वमेवाद्रियते। अतश्चोपपद्यते त्रिषु प्रातिभासिकसत्त्वम्। ननु न्यायामृतकृन्मते तैविध्यमेतन्नोपपद्यते-प्रातिभासिकात् शुक्तिरूप्यादेश्यकृष्टत्वं तावद्दृश्यते स्वाप्नरूप्यस्य, तथैव अविद्यानिवृत्तेरपि व्यावहारिकादुत्कृष्टत्वमुपपद्यते एवेति, कथं त्रैविध्योपन्यास इति पूर्वपक्षः। अत्र "स्वाप्ने प्रातिभासिकनिकृष्टत्वे प्रमाणाभावादि"[२२] इत्यनेन ग्रन्थेन स्वाप्नरूप्यस्यापि मायामयत्वेन प्रतिभासमात्र शरीरत्वेन वा, प्रातिमासिकत्वमुपयुज्यते। स्वाप्न जागरयोः समानमानत्वमेवोक्तं भवति। ननु जागृद्दशायां स्वप्नकालापेक्षयाऽधिष्ठानतावच्छेद कस्येदमशस्थाधिक सत्ताकत्वेन स्वप्नावस्थितस्य तस्यापि प्रातिभासिकत्वेन कथं न

निकृष्टत्वमिति चेन्न इदमंशस्य तदानीमधिष्ठानावच्छेदकत्वाभावादेव ततो निकृष्टत्वं व्याहन्यते। यद्यपि सरस्वतीचरणैः"[२३] तत्राधिष्ठानमविद्यावच्छिन्नमेव चैतन्यमिति"रीत्याऽपाकृतमेतत् न युक्तिमपि सहते। अविद्यानिवृत्तेस्तु संसारकालीन सत्त्वान्तर्गतत्वेन परिहारोऽपि सम्यमुक्तः।

पुनश्च सरस्वतीमिस्तत्र व्यावहारिकप्रातिभासिकयोर्वाध्यत्वाविशेषेऽपि किन्नि बन्धनो भेद इति ग्रन्थेनाक्षिप्तोऽयं विभागः। यद्यपि न बाध्यत्वसाम्येन तयोरैक्यं पर्यवस्यति, अन्यथा शुक्तिसाक्षात्कारेणैव शोकमोहादिसर्वक्लेशनिवृत्तिरस्यात्। आत्मविदो, ज्ञात्वा देवं मुच्यते सर्वपारौरित्युपनिषद्वाक्येन ज्ञानसमनन्तरं बन्धाऽभावः श्रूयते, सच बाध्यत्वाविशेषाद् ब्रह्मज्ञानयमन्तराऽपि प्रसज्येत तर्हि ब्रह्मभावस्योपनिषन्मात्र गोचरत्वं विरूध्येत, श्रुतेश्चाप्रामाण्यमित्यप्यवगन्तव्यम्। तथापि वादप्रचुरायां कथायां प्रागुक्तार्थः स्पष्टी क्रियते। मायाविद्ययोरभेदात् खलु तयोर्न मायिकत्ववाविद्यकत्वाभ्यां भेद स्यात्। एवमेव स्वाप्निकजवाहरणादेरपि अर्थक्रियाकारित्वमुप्युज्यत एव। एतदवसरे तयोभेदप्रसाधने श्रीसरस्वतीवचनं भवति-

"सप्रकारकनिष्प्रकारकज्ञानबाध्यत्वाभ्यां, शुद्ध ब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा, महावाक्यजन्यधी बाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा, स्वबाधकधीबाध्यत्व तदन्यधीबाध्यत्वाभ्यां वा भेदसम्भवादिति" कथनेन स्पष्टमेव प्रतिभासिकत्वं व्यावहारिक सत्त्वाद् भिद्यते। अनया रीत्या सर्वत्रापि प्रातिभासिक सत्त्वोपपत्त्या माध्वाभिमत भ्रमस्थलीयासतोऽत्यन्तं व्यतिरिक्तं सदनिर्वचनीयमुत्पद्य मानं न केनापि कथञ्चिद् वारयितुं शक्यम्।

मिथ्यात्वानुमानसाद्यकदृश्यत्वहेतोर्विवरणावसरे वृत्तिव्याप्यत्वं दृश्यत्वमिति अद्वैतसिद्धौ निर्वचनं कृतमस्ति। अब वृत्ति विषये प्रातिभासिकत्वोपपत्तये किञ्चिद् यथावेदान्त शास्त्रभवतार्यते। वृहदारण्यकोपनिषद्वाक्येन श्रूयते-[२४]

"कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाघृतिरघृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति वृत्तयोऽत्र मनसो दृश्यन्ते, प्रतिपादितश्चायमर्थो भगवता "मनसोऽन्तःकरणस्य रूपाण्ये तानि"[२४] इति मनो नामान्तःकरणमित्यपि भाष्ये व्याख्यातमस्ति। उक्तश्रुत्यनुरोधान्मनस्तादात्म्यापन्नो मनसोऽन्तःकरणस्य परिणामविशेष एव धीत्व जाति विशिष्टो वृत्तिपदेनोच्यते। एतत्तु चन्द्रिकाकृन्मतेना वगन्तव्यम्।

अत्रेदं बोध्यम्-विमतं मिथ्या दृश्यत्वात् शुक्तिरूप्यवदिति प्रयोगे दृष्टान्ते तादृशस्य वृत्तिव्याप्यत्वलक्षणदृश्यत्वस्याभावाद् दृश्यत्वहेतौ मिथ्यात्वस्य व्याप्ति ग्रह एव न स्यात्, तत्कथमिति पृच्छायामुच्यते-अन्तःकरणस्य परिणामभूतायां वृत्तौ ज्ञानत्वरूपधीत्वजातेः सत्त्वेऽपि शुक्तिरजतादिभ्रमरूणविद्यावृत्तौ तादृशधीत्वरूपजाति स्वीकारात् श्रुत्युक्त वृत्ति रूपज्ञानमात्रस्य मनःपरिणामोक्तिरसङ्गतैव स्यात्। श्रुत्यनुरोधात् तादृशजातेश्नङ्गीकारे प्रातिभासिक स्थले मिथ्यात्वसिद्धिश्च न स्यादित्युभय याऽपि असङ्गतिरेवेति ध्येयमिति। अतश्चायं परिहारोऽभिधीयते-श्रुतौ अन्तःकरणपरिणाम रूप ज्ञानस्यैव मनस्वादात्म्यमुपपद्यते। ज्ञानाख्याया अविद्या वृत्ते स्तावन्नोपपद्यते मनस्तादात्म्यं येन श्रुप्यर्थे काचिद् सङ्गतिरवतार्येत। तत्सत्त्वेऽपि शुक्तिरजतादिस्थले इदं रजतमिति दशायां इदमित्यंशे विशेष्याकाराचेति अविद्यावृत्त्यभ्युपगमात् वृत्तिद्वयावच्छिन्नचैतन्ये धीत्वजातिः स्वीक्रियत एव। एतदुक्तं बालबोधिन्याम्-तद्यथा[२५]

"अत्र यथा रजतवत् रजतवादात्म्यमपि अध्यस्तं द्वयोरविद्यापरिणाम त्वात्, तथा इदमाकारमनोवृत्त्यवच्छिन्ने चैतन्ये रजताकाराऽविद्यावृत्तिस्तत्तादात्म्यञ्च आविद्यकमेवोत्पद्यते" इति। एवञ्च दृश्यत्व हेतोर्विद्यमानतया तत्र मिथ्यात्वं प्रसज्यते। यत्र मिथ्यात्वं प्रसज्यते तस्यावश्यमेव सत्त्वं वक्तव्यं भवति, तस्मात् अकामेनापि तस्य प्रातिभासिकत्वमभ्युपेयमिति निश्चयः। अनिर्वचनीयायाः ख्याते सर्वतोऽपि वलवत्त्वं भाष्यादिग्रन्थेषु द्रष्टव्यम्। विस्तरस्तु तत्त्व प्रदीपिकायामन्वेष्टव्यं भवति।

श्रीचित्सुखाचार्यमतेनानिर्वचनीयत्व सिद्धौ कारिकैषा श्रूयते-[२६]

**प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।**
**गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः।। इति,**

एतद्व्याख्यानकाले स्वयमेव श्लोकार्थः स्पष्टी कृतो विदुषा चित्सुखमुनिना-''सत्त्वेनासत्त्वेन च विचारा सहत्वे सति सदसत्त्वेन च यद् विचारं न सहते तदनिर्वाच्यम्'' इति। अग्रे च पुनः ज्ञानबाध्यत्व लक्षणमनिर्वचनीयत्व -मिति प्रोक्तम्। एतेनोत्तरज्ञाननिवर्त्येपूर्वज्ञानेऽतिव्याप्तिरपि न शङ्कनीया, बाधेनात्र प्रतिपन्नोपाधावभावबोधनात्। तस्मात् प्रतिपन्नोपाधौ कालत्रय सत्तानिषेधस्यैव बाधपदबोध्यत्वमायाति। एवञ्चोक्तकालत्रयनिषेधो बाधस्तद्विषयत्वञ्च बाध्यत्वमिति वर्ण्यते। शुक्तिकायां प्रतिपन्नरजतस्य कालत्रयेऽपि तत्र सत्ताभावस्य निषेधकज्ञानेन नेदं रजतमिति बाधप्रत्ययेन बोध्यमानत्वात् देशान्तरस्थस्य प्रमितस्य तस्यासत्त्व बोधनं न युक्तम्। न च शुक्तिशकलेऽविद्यमानस्य रजतस्या प्रसक्तत्वान्निषेधोऽपि युक्त इति बोध्यम्। न च तत्र रजताभासः प्रतीयते किन्तु रजतमेवाविद्यापरिणाभूतम -निर्वचनीयम्। पुनश्च निषेध प्रतियोगित्वं तावन्न प्रातिभासिकरजते सङ्गच्छते, तदानीं तस्य मासमानत्वादिति, कुत्र तादृशं प्रतियोगित्वमिति जिज्ञासायां प्रदीपिकायां वर्णितम्-तद्यथा-[२७]

''तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेध प्रतियोगीति पूर्वाचार्य वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाल्लौकिकरजतात्मत्वेनापरोक्ष तथा प्रतीतस्य कालत्रयेऽपि लौकिकरजतमिदं न भवतीति निषेध प्रतियोगितामङ्गीकृत्य नेतव्या। न चैवं सत्यन्यथाख्यातेः प्रसक्तिः। इति।

अनेन श्रीचित्सुखीयप्रतिपादनेन पुरोवर्तिनि शुक्तिरजते तदर्थिनः पुरूषस्य प्रवृत्तिदर्शनात्तावदपरोक्षत्वमपि तादृशमेव कल्पितं मन्तव्यम्। न हि तादृशापरोक्षमन्तरा प्रवृत्तिरभ्युपेयते, दृश्यते च प्रवृत्तिरिति धिया तत्रावश्यमेवानिर्वचनीयं रजतं तत्सत्त्वं च कल्प्यते। एवञ्च शुक्तिरजंततादात्म्यस्य सदसद्विलक्षणत्वात्तत्र प्रातिमासिकत्वं सिध्यति। किमस्ति तत्र प्रमाणमिति पृच्छायां सत्यां ख्यातत्त्वे सति बाध्यत्वान्यथानुपपत्तिरेव प्रमाणत्वेनावगन्तव्यं भवति।

अतोऽद्वैतवादिभिः प्रातिमासिक सत्त्वं तत्र तत्र वेदान्त सन्दर्भेषु वर्णित भवति। निर्विशेषेचिति श्रीपशुपतिबाबाभिधाने मे रतिर्भूयादिति तत्त्व राजसरोरूहेषु सर्वमिदि समर्प्यातो विरमामि, इति राम्।

## संदर्भ-सङ्केत


१. वृहदारण्यकोपनिषत् -२-४-५
२. समन्वयाधिकरणस्थ शारीरिकभाष्यम्
३. छान्दोभ्योपनिषत् -६-१-१
४. अध्यासभाष्यम्
५. अध्यासभाष्यभामत्याम्
६. अध्यासभाष्यम्
७. मुण्डकोपनिषत्-२-२-१०


■ पता : उपाचार्यः, वैदिकदर्शनविभाग, संस्कृत विद्या धर्मविज्ञान संकाय, काशी हिन्दू विश्वविद्यालय, वाराणसी

# पुराणेषु कालगणना

■ आशुतोष कुमार झा

गुणानां साम्यावस्था प्रकृतिः। प्रकृतेः संबन्धिनो ये गुणाः सत्त्वादयः तेषां साम्यं गुणक्षोभात्पूर्वस्था। स च क्षोभात्पूर्व निर्विशेषः।

**''प्रभावं पौरूषं प्राहुः कालमेके यतो भयम्।**
**अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः।।**
**प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि।**
**चेष्टा यतः स भगवान् काल इत्युपलक्षितः।।''[1]**

मानवीति संबोधनं महत् उत्पन्ना अलौकिकं जानातीति। एतादृशस्य यतश्चेष्टा स कालः। कालादेव गुणानां क्षोभः। स कालो भगवानेव, रूपपञ्चकमध्ये गणनात्। ननु भगवतः काल इति संज्ञा कृत इत्याकाङ्क्षायामाह...

**''अनादिरेव भगवान् कालोऽनन्तोऽजरोमराः।**
**सर्वगत्वात्स्वतन्त्रत्वात्सर्वात्मत्वान्महेश्वरः।।**
**ब्रह्माणो बहवो रूद्रा ह्यन्ये नारायणादयः।**
**एको हि भगवानीशः कालः कविरिति श्रुतिः।।[2]**

''कलयत्याकलयतीति''। सर्वे हि प्राणी येन रूपेण कृत्वा सर्वमाकलयति मृत्युभीत इव हि सर्वमाकलयति। अतः काल इति भगवानिवोपलक्षित उपलक्षणविधया बोधितः। न हि काल इति साक्षाद्भगवन्नाम किन्तु प्राणीनां बोधनं हेतुत्वेन निरूपितः।

एवं कालं भगवद्भूपत्वेनोक्त्वा तस्योपलक्षणतां निरूपयति एक एव भगवान् सर्वप्राणिनामन्तः पुरूषरूपेण वर्तते, बहिः कालरूपेण अन्यथा भगवतो व्याप्तिर्न स्यात्। बहिमुर्खात् कालरूपेण भक्षयति अन्तर्मुखान् पुरूषेणाप्यायतीति। अतएव सत्त्वानां सर्वेषां भगवान् स्वमायया सर्वभवनसामर्थ्येनोभयविधो भूत्वा बहिः काले लयं प्राप्नोति अन्तः पुरूष इति। कालो भयजनकः अभयरूपश्च पुरूष इति विशेषः। कालकल्प सृष्टिमुक्त्वा कालस्वरूपं स्थौल्यसौक्ष्म्यरूपं प्रकर्षाप्रकर्षकाष्ठे निरूपयति। कालो ह्यत्र परमाण्वादिसम्वत्सरान्तः स्थूलसूक्ष्मरूपः सूर्यगत्वा लक्ष्यते। यावान् सूर्यः परमाणुलक्षणं प्रदेशमतिक्रामति तावान् कालः परमाणुर्यावद् द्वादशराश्यात्मकं भुवनमतिक्रामति तावान् कालः परममहान् संवत्सरात्मक इत्येवं परमाण्वादिकालं निरूपयितुं तावत्परमाण्वादिकाल परिच्छेदकं सूक्ष्मं स्थूलं च पदार्थमाह चरम इति द्वाभ्याम्।

यस्य द्वैधीभाव कर्त्तुमशक्यः सर्वेषां चरम इत्यर्थः स पदार्थः परमाणुर्विज्ञेयः। स च सदा सत्यः सन्मूलत्वात् यतः येभ्यः परमाणुभ्यः नृणां तार्किकादीनामैक्यभ्रमो भवति। अखण्डानां परमाणूनां नाशासंभवात् ते नित्याः तदैक्यम् विश्वम्।

**२परमाणुः=१अणुः, ३अणुः=१त्रसरेणुः,**
**३त्रसरेणुः=१त्रुटिः, १००त्रुटिः=१वे ाः१**
**अणुद्वौपरमाणुस्स्यात्तत्ररेणुस्त्रयः स्मृतः।**
**जलार्क रश्म्यवगतः खमेवानुपतन्नगात्।।**[३]

त्रसरेणुः प्रत्यक्षः। गवाक्षगतजालरन्ध्र प्रविष्टेषु अर्करश्मिषु सूर्यकिरणेषु अवगतो दृष्टः सन् यः असौ अतिलघुत्वेन खमाकाशमेवानुपतन् अगात् गतो भवति स त्रसरेणुः तथा च "जालान्तर्गते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठस्तु यो भागः परमाणु स उच्यते।

**३वे ाः = १लवः, ३लवः = १निमेषः,**
**३निमेषः = १क्षणः, ५क्षणः = १काष्ठा,**
**१५काष्ठा = १लघुः, १५लघुः = १ नाडिका।**

"षट्पलताम्रविनिर्मितं प्रस्थप्रमित जलपूर्तियोग्यं पात्रं चतुर्भिः स्वर्णमाषै श्चतुरंगुलमितशलाकारूपेण रचितैः कृतं मूलच्छिद्रं तेनच्छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं जले निमग्नं भवति तावान् कालो नाडिका।[४]

**२नाडिका = १मुहूर्त्तः, ६/७नाडिका = २प्रहरः,**

**४प्रहरः = १दिनम्, ४प्रहरः = १नक्तम्,**

**८प्रहरः = १अहोरात्रम्।**

पुनः विष्णुपुराणो[५]............

**३०काष्ठा = १कला, ३०कला = १मुहूर्त्तः,**

**३०मुहूर्त्तः = १अहोरात्रम्, १५अहोरात्रम् = १ पक्षः,**

**२पक्षः = १मासः, १मासः = १पितृणामहोरात्रम्,**

**२मासः = १नृणामृतुः १२मासाः = १नृणाम् वर्षम्।**

तत्र शुक्लकृष्णभेदेन द्वौ पक्षौ। नराणां मासेन पितृणाम् अहोरात्रं भवति अर्थात् नराणां पक्षन्यां पितृणां दिन-रात्रिर्भवति। शुक्लपक्षे पितृणां दिनं, कृष्णपक्षे च तेषां रात्रिर्भवति। नराणां एकस्मिन् वर्षे असुराणां देवानां च अहोरात्रं भवति। अयनरूपे तस्य अहोरात्रं भवति अर्थात् यदा अर्कः उत्तरायणे भवति तदा देवानां दिनं यदा दक्षिणायने तदा तस्य रात्रिः। दक्षिणायने अर्कः तदा असुराणां दिवा उत्तरायणं तस्य रात्रिः.........

**"शुक्ले चापि दिनन्तेषां कृष्णे नक्तं प्रकीर्तितम्।**
**वत्सरेण नराणाञ्च सुराणाञ्च दिवानिशम्।।"**[६]

पुनः द्वादश मासषडर्तुविषये.........[७]

**वसन्तश्चैत्र वैशाखमासयुग्मेन कीर्तितः।**
**ज्येष्ठाषाढ़द्वयेनैव ग्रीष्मस्तु परिकीर्तितः।।**
**श्रावणादिमसषट्कं दक्षिणायनमेव च।**

वसन्तः = चैत्रवैशाखयुग्मेन, ग्रीष्मः = ज्येष्ठाषाढ़युग्मेन, वर्षा = श्रावणभाद्रपदयुग्मेन, शरत् = आश्विनकार्तिकयुग्मेन, हेमन्तः = मार्गशीर्षपौषयुग्मेन, शिशिरः = माघफाल्गुनयुग्मेन। एकस्मिन् वर्षे द्वौ अयनौ भवतः। माघादिषट्कमासैः उत्तरायणम्। श्रावणादिषट्कमासैः दक्षिणायणम्। वर्षस्य पञ्चप्रकाराः उल्लेखिताः पुराणेषु। सूर्यसंक्रान्तिरूपो मानस्सौरस्तन्मानेन द्वादशमासाः संवत्सरः यावता बृहस्पतिरेकस्मिन् राशौ चरित तस्य द्वादशभागः बार्हस्पत्यमासस्तन्मानेन द्वादशमासाः परिवत्सरः कुशीवृत्ता व्यवह्रियमाणस्त्रिंशद्दिवसात्मको मासः सावनसंज्ञकस्तन्मानेन द्वादशमासाः इडावत्सरः दर्शावधिर्मासश्चन्द्रस्तन्मानेन द्वादशमासा अनुवत्सरः इन्द्रो सप्तविंशति नक्षत्रभ्रमणात्मको मासो नाक्षत्रमासस्तन्मानेन द्वादशमासावत्सरः।

सप्तविंशति नक्षत्राणि भवन्ति। श्रवणच्छाया अभिजिन्नामकमेकनक्षत्रं भवति। अभिजिन्नक्षत्रेण सह अष्टाविंशति नक्षत्राणि भवन्ति। तेषां नामानि ब्रह्मवैवर्तपुराणे एवम् विद्यते.......

**"अश्विनी भरणी चापि कृत्तिका रोहिणी तथा।**
**मृगशिरो तथाऽऽर्द्रा च नक्षत्रे द्वे पुनर्वसुः।।**
**सप्तविंशतिनक्षत्रं कलत्रञ्च श्रुतौ सुतम्।**
**अभिजिन्छ्रवणच्छाया तेनाष्टाविंशतिः स्मृताः।।[८]**
**नृणाम् १वर्षम् = देवस्य १ अहोरात्रम्,**
**नृणाम् ३६० वर्षम् = १ दिव्यवर्षम्**
**१२०० दिव्यवर्षाणि = १ चतुर्युगम् (सन्यासन्यांशसहितम्)**
**सत्यत्रेताद्वापरकलिरूपेण चतुर्युगम्।**
**चतुर्युगं द्वादशभिस्तद्विभागं निबोात्।**
**कथितञ्च.....**
**चतुयुर्ग द्वादशनिरतद्विभागं निबोात।**
**चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्।।**
**तस्य तावच्छतीसन्यांशश्च कृतस्य तु।**
**त्रिशतीद्विशती सन्या तथा चैकशती क्रमात्।।**
**अंशकं षट्शतं तस्मात्कृत सन्यांशकैर्विना।**
**त्रिद्व्येकाा च साहस्रं विना सन्यांशकेन तु।।**
**त्रेताद्वापरतिष्याणां कालज्ञाने प्रकीर्त्तितम्।**
**एतद् द्वादशसाहस्रं साािकं परिकल्पितम्।।[९]**

सत्ययुगस्य मानम् = ४०००+४०० (सन्ध्या) +४०० (सन्ध्यांश)=४८०० दिव्यवर्षाणि

=४८००ग३६० =१७२८००० मानुषवर्षाणि।

त्रेतायुगस्य मानम् = ३०००+३००(सन्ध्यांश) =३६०० दिव्यवर्षाणि = ३६००ग३६० =१२६६०००

मानुषवर्षाणि।

द्वापरयुगस्य मानम् =२०००+२०० (सन्ध्या) + २०० (सन्ध्यांश) = २४०० दिव्यवर्षाणि = २४०० ग३६० = ८६४००० मानुषवर्षाणि।

कलियुगस्य मानम् = १०००+१०० (सन्ध्यांश) = १२०० दिव्यवर्षाणि = १२००ग३६०=४३२००० मानुषवर्षाणि।

१००० चतुर्युगाणि = ब्रह्मलोकस्य १ दिनम् = ब्रह्मलोकस्य १ रात्रिः =१कल्पः।

**निशावसान आरब्गो लोककल्पोऽनुवर्तते।**
**यावद्दिनं भगवतो मनून् भुञ्जंश्चतुर्दश।।**
**स्व-स्वं कालं मनुर्भुक्ते साधिकां ह्येकसप्ततिम्।**
**मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः।।**
**भवन्ति चैव युगपत्सुरेषाश्चानु ये च तान्।**[१०]

१ कल्पः = १४ मनुः, ७१ चतुर्युगात् किञ्चित् अधिकं = १ मन्वन्तरः,

२००० चतुर्युगम् = ब्रह्मणोऽहोरात्रम्, २०००गचतुर्युगम् = ब्रह्मवर्षम्,

७२०००ग१०० चतुर्युगम् = ब्रह्मणः परमायुः, परमायु/२ = परार्धम्।

उक्तञ्च-

**कालसंख्या समासेन परार्द्धद्वय कल्पिता।**
**स एव स्यात् परः कालः तदन्ते प्रतिसृज्यते।।**
**निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्।**
**तत्पराख्यं तद ञ्च परार्द्धमभि ीयते।।**[११]

ब्रह्मलोके सूर्यगतिः नास्ति, परञ्च ब्रह्मलोकवासिजनाः अहोरात्रविषये जानन्ति। त्रिंशद् ब्रह्मदिव्यदिवसैः एकः धातुर्मासः भवति। द्वादशभिर्मासैः एकः ब्रह्मवर्षम् स्यात्। ब्रह्मणः स्ववर्षेण शतवर्षपर्यन्तमायुर्भवति। ब्रह्मणः परमायुतुल्यं श्रीं हरेरेको निमेषः।

**तत्र सूर्यगतिर्नास्ति शक्रपातानुसारतः**
**दिवानिशञ्च जानन्ति ब्रह्मलोकनिवासिनः।**
**दण्डद्वयं नरपलं शक्रपातेन तत्फलम्**
**एवं त्रिशद्दिनेनैव ातुर्मासः प्रकीर्त्तितः।।**[१२]

एवमेव सर्वेषु पुराणेषु कालविषये उल्लेखः विद्यते तथा च तन्मध्ये साम्यता अपि विद्यते।

पादटिप्पण्यः

१. श्रीमद्भागवतमहापुराणस्य स्कन्धे-०३ अध्याये-२६, श्लोकः १६-१७
२. कर्मपुराणस्य पूर्वभागे अ.-०५, श्लोकः१६-१७
३. श्रीमद्भागवतमहापुराणस्य स्कन्धे-०३, अध्याये-११, श्लोकः ५
४. श्रीमद्भागवतमहापुराणस्य स्कन्धे-०३, अध्याये-११, श्लोकः ५
५. विष्णुपुराणे षष्ठ अंशे अध्याये-३, श्लोकः-०५-०६
६. ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे अध्याये-६६, श्लोकः ८३
७. ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे अध्याये-६६, श्लोकः ६०-६३
८. ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे अध्याये-६६, श्लोकः ६८-७३
९. कर्मपुराणे पूर्वभागे अध्याये ०५, श्लोकः १०-१३
१०. श्रीमद्भागवतमहापुराणे स्कन्धे ०३, अ.-११ श्लोकः २३-२४
११. कर्मपुराणे पूर्वभाग : अध्याये०५, श्लोकः १-२
१२. ब्रह्मवैवर्तपुराणे अ. ५, श्लोकः ८७

■ पता : रा.सं.सं., लखनऊ परिसर, लखनऊ

# संस्कृतस्य विकासमार्गेऽवरोधः, करणीयानि कार्याणि च

■ हेमन्त कुमार जोशी

देवभाषासंस्कृतं विश्वस्य सकलपरिष्कृतभाषासु प्राचीनतमा वर्तते। भाषायामस्यामेव भारतीयानां मननं, चिन्तनं, गवेषणं, अनुभूतिश्च एतत्सर्वं समन्वितमस्ति। वैदिक- कालादद्यावधिपर्यन्तम् अक्षुण्णधरा एतस्याः प्रवाहिता भवति। संस्कृतशब्दार्थ एव परिष्कृतः, निर्मलः, शुद्धः, अलङ्कृतश्चास्ति। धर्मिकदृष्ट्या भाषेयं देववाणी सुरभारती चापि कथ्यते।

देवानाह्वायितुं मन्त्रादिनिर्माणम् अस्यामेव भाषायां सञ्जातम्। तेषु मन्त्रेषु दिव्यशक्तिर्वर्तते। एतदपि कथयितुं शक्यते यत् देवताभिरियमेव भाषाऽवगम्यते भाष्यते च।

आचार्यदण्डिशब्देषु-

**संस्कृतं नाम देवी वागन्वाख्याता महर्षिभिः।**
**भाषासु मधुरा मुख्या दिव्या गीर्वाणभारती।।**[1]

भारतीयसभ्यतायाः संस्कृतेश्च सम्पोषिका वर्तते संस्कृतभाषा। अनयोर्विकासाय अद्वितीयं योगदानमस्ति संस्कृतस्य। भारतीयसभ्यतासंस्कृतिविकासे संस्कृतयोगदानं स्वीकुर्वाणोऽकथयद् भारतस्य उच्चतमन्यायालयः–

"The Indian People and the Indian Civilisation were born, so to say, in the lap of Sanskrit and it went hand in hand with the historical development of Indian People, and gave the noblest expression to their mind and calturs with has come down to our day as an inheritance of Priceless order for India. may, for the entire World.[2]"

संस्कृतभाषा न मृता न म्रियते न मरिष्यति इति निश्चप्रचम्। परं यादृशो विकासः पुराकाले संस्कृतभाषाया आसीत्, मध्यकाले विविधभाषागत-आक्रमणैः संस्कृतविकासमार्गेऽपि अवरोधे जातः। संस्कृतविकासमार्गेऽवरोध्स्य कारणं न केवलं भाषागताक्रमणं वर्तते, अपितु अन्यान्यपि बहुविधनि कारणानि सन्ति यत्र कारणभूता वयमपि स्मः प्रायेण।

## राजभाषा नास्तीति संस्कृतम्-

राजकीयक्षेत्रेषु या खलु भाषा प्रयुज्यते, सा राजभाषा कथ्यते। संविधानपरिबद्धभाषा सर्वैरेव समाद्रियते। प्रत्यक्षत्वेन न केनापि अपमानं कर्तुं शक्यते राजभाषायाः। संस्कृतं राजभाषा अभविष्यत्तु राजकीयकर्मचारिणोऽपि संस्कृतभाषां प्रायोक्ष्यन्, तदनु सामान्यलोकजनैरपि संस्कृतमेव प्रायुज्यत। एतत्कारणेन परितो विकास एवादृश्यत। परं नास्तीति एतत्सर्वम्। संस्कृतविकासमार्गेऽवरोधस्य एतत्प्रमुखं कारणं विद्यते। संविधाननिर्मातृविधिमन्त्रिणा डॉ.

भीमराव अम्बेडकरमहाभागेन तु संस्कृतं राजभाषा भवेदिति प्रस्तावितमासीत्-

India's Law Minister Dr. B.R. Ambedker is among those who have sponsored of the Indian Union. One of his supporters is Dr. B. V. Vesker, India,s Deputy Minister for External Affairs another Mr. Naziruddin Ahamad.[3]

## त्रिभाषासूत्रो संस्कृताभावः-

राष्ट्रियशिक्षानीतिः (१६६८-१६८६) इत्यनुसारं विद्यालयस्तरे भाषाशिक्षणाय त्रिभाषासूत्रास्य क्रियान्वयनम् अनिवार्यमस्ति। एतदनुसारं भाषात्रायं पाठनीयमस्ति-हिन्दी, अंग्रेजी, आधुनिकभारतीय भाषा च। अत्र नास्ति संस्कृतम्। एतत्सन्दर्भे सर्वोच्चन्यायालेन ४ अक्टूबर १६६४ ईसवीयतमे वर्षे केन्द्रीयमाध्यमिकशिक्षापरिषदपि (CBSC) आदिष्टा यत्तया त्रीषु मासेषु पाठ्यक्रमे संसोधनं कृत्वा त्रिभाषासूत्रो संस्कृतं वैकल्पिकविषयत्वेन समावेशनीयम्। किन्तु CBSC इत्यनया एतख प्रारब्धम्, येन विद्यायेषु संस्कृतशिक्षणेऽत्यन्तं प्रतिकूलप्रभाव आपतितः। सर्वोच्चन्यायलयेन इथमादिष्टमासीद्यथा-

"In the aforesait premises, we direct the Board (CBSE) to include Sanskrit as an Clective subject in the syllabus under consideration. Necessary amendment in the syllabus shall be made within a period of three months from today."[4]

सम्प्रति केन्द्रीयविद्यालयेष्वपि संस्कृतं केवलं षष्ठीकक्षातः अष्टमीं यावदेव वर्तते। ततोऽग्रे संस्कृतं पाठ्यक्रम एव नास्ति। तर्हि उच्चशिक्षायां कः पठिष्यतीति संस्कृतम् इति समस्यात्मकः प्रश्नः। एतावदेव नापितु केन्द्रीयविद्यालयसंगठनं २०११-२०१२ शैक्षणिकसत्रात् षष्ठकक्षातः अष्टकक्षापर्यन्तं संस्कृतस्य विकल्पे जर्मन, प्रेंच, चाइनीज, स्पेनिशादि-चत : भाषा अध्यापनस्य निर्देशमदात्।[५]

सममेव वैदेशिकभाषासु प्रशिक्षणं नेतुं संस्कृतशिक्षका अपि निर्दिष्टाः, यद् ते संस्कृतस्य स्थाने एता भाषा अपि अध्यापयितुं शक्नुयुः। एतत्तु संस्कृतेन सह त्रिभाषासूत्रास्यापि निरादरं वर्तते, यतोहि त्रिभाषासूत्रो कुत्रााापि वैदेशिकभाषापाठनस्य नियमो न विद्यते।

नवोदयविद्यालयेषु तु कस्यामपि कक्षायां संस्कृताध्यापनं न भवति। परं त्रिभाषासूत्रमसौ आचरति। संस्कृतविकासमार्गेऽवरोधस्य एतदपि प्रमुखं कारणं दरीदृश्यते। विद्यार्थिषु राष्ट्रस्यैकताया अखण्डतायाश्च भावनाविकासाय सहायकं भवति संस्कृतम्। पाठ्यक्रमात् संस्कृतस्य निष्कासनं भारतीयसंस्कृत्युपरि छद्मवदस्ति। संस्कृतं भारतस्य परम्परायाः प्रतीकमस्ति।

## प्राचीनगुरुकुलाभावः-

यद्यप्यधुना भूरिशः संस्कृतविश्वविद्यालयाः, संस्कृताकादम्यः, संस्कृतसंस्थानानि च वर्तन्ते देशे संस्कृतरक्षणाय

प्रचाराय विकासाय च, तथापि प्राचीनगुरुकुलाभावत्वेन संस्कृतविकासमार्गेऽवरोधे जायते। प्राचीनकाले गुरुकुलवासिभिः संस्कृतमेव व्यवह्रियते भाष्यते आचर्यते स्म। परमिदानीन्तनसंस्कृतविश्वविद्यालयेषु न्यूनत्वं दरीदृश्यते एतस्य संस्कृतवातावरणस्य। यद्यपि बहुभिश्छात्रौः संस्कृततन्तु अधीयते परं भाषया व्यवहारेण वा नास्तीति तेषां जीवनं संस्कृतम्। गुरुकुलेषु तु सकलजीवनमेव संस्कृतमयं भवति स्म, इदानीन्तु संस्कृतज्ञैरपि गुरूकुलानां स्थाने आंग्लविद्यालया (PUBLIC SCHOOL) समुद्घाट्यन्ते।

## षड्यन्त्रापूर्वकदुष्प्रचारः -

संस्कृतविरोध्निो दुष्प्रचारं विदधति यत् संस्कृतमधीत्य पूजादिकर्मकाण्डमेव विधतुं शक्यते। राजकीयक्षेत्रोषु केवलम् अध्यापनवृ त्त विहाय अन्या काऽपि वृत्तिर्नैव लभ्यते संस्कृतधयेतृणा। भाषेयं क्लिष्टा व्याकरणमेतस्या दुर्बोधमिति धरणा जनानां मनसि विद्यते।

सर्वप्रथमं ११९२ ईसवीयवर्षे मुहम्मदगौरी कालादेव संस्कृतशिक्षायाः पतनमारब्धम्। औरंघह्जेबमृत्योरनन्तरं १७०७ ईकृ वर्षे अशान्तिसाम्राज्यं प्रसृतं भारतवर्षे, येन प्राचीनभारतीयशिक्षाप्रकल्पो जीर्णोऽभवत् प्रतिदिनम्। संस्कृतभाषोपेक्षया शिक्षोद्देश्यानि परिवर्तितानि। वर्तमानभारतीयशिक्षाया आदर्शभूतः 'लार्डमैकालेकृ १८३८ ई. वर्षे भारतमागतः। असौ आघ्ग्लसाहित्यमेव साहित्यं मनुते स्म। तस्य संस्कृते संस्कृतौ च किञ्चिदपि प्रीतिर्नासीत्। तेन तु संस्कृतसभ्यतासंस्कृतिविषयकं यत् षड्यन्त्रां विहितमासीद्यत् सर्वेऽपि भारतवासिनोऽधुनाऽनुचरन्तो दृश्यन्ते। तेन दुरुक्तमासीद्यथा–

I proporse that we replace her old and ancient education system, her culture for if the Indians Think that all that is forsign and english is good and greater than their own. They will lose their-esteem, their native self-calture and they will become what we want them. A truly dominated nation."[6]

## महत्वेऽज्ञानता-

कीयन्महत्त्वं वर्तते संस्कृतस्य प्रायेण नहि जानन्ति सामान्यजनाः। संस्कृतिः संस्कृताश्रिता। संस्कृतिर्नाधिगन्तुं पार्यते संस्कृतज्ञानमन्तरा। न केवलं भारतीयसंस्कृति- संरक्षणार्थमेवावश्यकं संस्कृतमपितु राष्ट्रभाषायाः समुखमतेः साध्कम्, जीवनदर्शनस्य दर्शकम्, विश्ववाघ्मयस्य पथप्रदर्शकम्, भारतीयभाषाणां सम्पोषकम्, राष्ट्रिय- भावनाभिवृद्धेर्मूलम्, भारतीयज्ञानविज्ञानस्य मूल ेतम्, आध्यात्मिक्याः, भौतिक्याश्च समुखतेः साध्नमस्ति संस्कृतम्। चरक- सुश्रुतबौधयनशुल्वसूत्राशून्यावधरणापरमाणुवाद- सिद्धान्त-अनन्तावधरणागुरूत्वाकर्षणसिद्धान्त- वराहमिहिररचित- वृहत्संहितापाईमानादिकं ज्ञानं विज्ञानञ्च सर्वमप्यत्रा सखिहितं वर्तते। संस्कृतस्य महत्त्वं प्रतिपादयन्तोऽकथयन्तः महात्मागान्धिनो यत्–

''प्रत्येक हिन्दुस्तानी विद्यार्थी को संस्कृत अवश्य पढ़नी चाहिए।[7]

संस्कृतविकासमार्गेऽवरोधस्येदमपि प्रमुखं कारणं यद् प्रायशोऽधिका भारतीया नहि जानते संस्कृतमहत्त्वम्।

## योग्यताछात्रावृत्त्याभावः -

संस्कृताधयेतृणां छात्राणां कृते योग्यताछात्रावृतेरभावः परिदृश्यते। सामान्य-परिषत्परीक्षायां यो हि सर्वोच्चस्थानं लभतेऽसौ पुरुष्कारेत्वेन सम्मान्यते। परं संस्कृतछात्रास्तत्रोपेक्ष्यते। विद्यालयीयमहाविद्यालयीयसंस्कृतछात्रोभ्यो योग्यताछात्रावृत्तेरभावो वर्तते, अत इदमपि कारणमवरोध्स्य।

## प्राचीनपाठ्यक्रमः -

स एव पाठ्यक्रम उत्तमो मन्यते यो हि कालानुसारं परिवर्तते। संस्कृतपाठ्यक्रमो नो बहुप्राचीनः, तत्रा खलु समयानुसारं परिवर्तनमपेक्षते। यतोहि प्राचीनपाठ्यक्रमस्य विद्याया वा उद्देश्यमासीद्यत् "सा विद्या या विमुक्तये. . परमिदानीमुद्देश्यमेव परिवर्तितं यत् "सा विद्या या नियुक्तये..। तर्हि संस्कृतविकासाय पाठ्यक्रमेऽपि कश्चन दोषः परिलक्ष्यते।

## जनजागरणाभावः -

संस्कृतज्ञानां जागरणाभावेनैव संस्कृतविकासेऽवरोधः समुत्पद्यते। समग्रेऽपि भारतेऽद्य लार्डमैकाले कृपया आंग्लप्रभावः परिदृश्यते। केन्द्रीयविद्यालयेषु दशमिकक्षापर्यन्तं संस्कृतमादौ विद्यमानमासीत्, परं सम्प्रति नवदशकक्षाभ्यामवारयन् संस्कृतमेते। संस्कृतस्य सर्वविधविकासाय भारतसर्वकारस्य मानवसंसाध्नविकासमन्त्रालयाधीनेऽद्यापि संस्कृतप्रभागो विद्यते। तत्रा चत्वारि सृजितपदानि आसन् संस्कृतविदुषां कृते तत्रा सहायकशिक्षाधिकारी (AEO) संस्कृतम्, शिक्षाध्किारी (E.O) संस्कृतम्, सहायकशिक्षासलाहकारः (AEA) संस्कृतम्, उपशिक्षासलाहकारश्च (DEA) संस्कृतम्। संस्कृतज्ञानां समुचितजागरणाभावेन सम्प्रति तेषु एकोऽपि संस्कृतविद्वाख विराजते। अन्ताराष्ट्रियख्यातिलब्ध-इन्दिरागाँधी- मुक्तविश्वविद्यालये प्रायः सर्वेऽपि विषया वर्तन्ते परं संस्कृतस्य तत्राप्यभावो दृश्यते। व्यक्तिगतविद्यालयेषु तु आंग्लवैतरणी प्रवहत्येव, सर्वकारस्तु सर्वकारीयविद्यालयेष्वपि संस्कृतं निवाक्षर्य प्रथमकक्षातः आंग्लशिक्षणं दातुमुत्यते। अतः जनजागरणाभावे संस्कृतावरोधः सञ्जायते।

## अन्यभाषया पाठनं भाषाया अप्रयोगश्च-

दौर्भाग्यमेतत् संस्कृतस्य, यशषेयं हिन्दीभाषया पाठ्यते लिख्यते च। विधीयतेऽस्माभिर्विद्यावारिधिः (Ph.d) संस्कृतविषये, तत्रा शोध्प्रबन्धे विंशतिप्रतिशतमपि संस्कृतं न भवति। तथैव कक्षासु संस्कृतशिक्षकैर्भाषाप्रयोगोऽपि नहि क्रियते। यदि शिक्षकेण एव भाषा न भाषिष्यते तर्हि छात्रोण कुतः। संस्कृताध्येतृभिः पत्राव्यवहारे, कार्यालयेषु, दूरभाषे, सघट्टणके, आहारे व्यवहारे च नहि प्रयुज्यते भाषैषा। अतः कारणमिदमपि प्रामुख्येन भजते। आंग्लविद्यालयेषु (Public School) प्रथमकक्षातः अध्ययनाध्यापनं भाषणञ्चापि सर्वमाग्लभाषामाध्यमेनैव सम्पद्यते,

परमस्माकं विश्वविद्यालयेष्वपि नास्तीति नियमोऽयम्।

## शोध्स्य विज्ञानप्रयोगस्य चाभावः-

संस्कृतेऽन्वेषणकार्यस्य अभावो वर्तते। अन्वेषणेनैव संस्कृतवाघ्मयस्य महत्त्वमुत्कर्षश्च अवगम्येते। पाश्चात्यैरप्यघहीक्रियते यद् विश्वस्यऽमूल्यज्ञानविज्ञानं संस्कृतवाघ्मये सखिहितमस्ति। तैस्तु सिद्धमपि यत्-

Sanskrit Language is Most language for Computer and Softwara.[८]

पाश्चात्यभाषावैज्ञानिकैः पाणिनिव्याकरणं Best creation of human intelligence इति कथितम्। परं संस्कृतज्ञैः न किमपि विज्ञानमन्विष्यते संस्कृतवाघ्मये। विज्ञानप्रयोगाभावेऽपि संस्कृतावरोधे जायते।

एतदतिरिच्य बहुविधवरोधैः समं संस्कृतायाधुना करणीयानि कार्याण्यपि सन्ति, यानि संस्कृतज्ञैः संस्कृतसमाराधकैश्च विध्यानि सन्ति।

१. संस्कृतशिक्षकप्रशिक्षणम्- विद्यालयस्तरे गुणात्मकविकासाय संस्कृतध्यापकानां प्रशिक्षणमपेक्षितमस्ति। यत्रा निम्नविन्दुष्वपि यथोचितं ध्यानं

विधेयम्-

(अ) शिक्षणविधै परिवर्तनम्- यस्मिखध्यापनं रोचकं प्रभावात्मकञ्च भवितुं शक्नुयात्।

(आ) मूल्याघङ्कनविधै परिवर्तनम्।

(इ) संस्कृताध्याकानां कृते कम्प्यूटरप्रशिक्षणम्।

(ई) शिक्षकछात्राद्वाभ्यामेव संस्कृतसम्भाषणशिविरायोजनम्।

(उ) शिक्षणं रोचितुं दृश्य-श्रव्योपकरणां प्रयोगः।

२- संस्कृतपाठ्यक्रमे पाठ्यपुस्तकेषु च परिवर्तनम्-सम्प्रति विभिखराज्यस्थ- विद्यालयस्तरीयपाठ्यक्रमे पाठ्यपुस्तकेषु चाभावद्वयं दृष्टिपथि आयाति-

(अ) संस्कृतभाषायाः सामान्यज्ञानस्याभावः (Basic Knowledge).

(आ) संस्कृतवाघ्मये सखिहितज्ञानविज्ञानस्य चाभावः।

अत एव एतदपेक्षितमस्ति।

३- उत्तरमध्यमा-(प्राक्-शास्त्राी) कक्षासु विज्ञान-गणितयोः पठनपाठनमनिवार्यं भवतिव्यम्। तथैव आधुनिक विद्यालयेषु मध्यमाकक्षासु (११-१२) विज्ञानवर्गस्य छात्रोभ्यः संस्कृतपठनावसरः प्रदेयः। विज्ञानविषयाभाव एव

सम्प्रति संस्कृतछात्राा आयुर्वेदपाठ्यक्रमे (B.AMS) प्रवेष्टुं नार्हन्ति।

४- व्यावसायिकं प्रशिक्षणम्- लोकप्रियत्वं कथमाप्नुयात् संस्कृतं तत्कृते संस्कृतसम्बद्धाधोलिखितव्यावसायिकप्रशिक्षणमनिर्वायम्।

(अ) योगे अंशकालिकपाठ्यक्रमः।

(आ) अंशकालिकसंस्कृतानुवादपाठ्यक्रमः।

(इ) शास्त्रिास्तरे आधुनिकविषयसघहणकः पाठ्यक्रमे समायोजनीयः।

(ई) ज्योतिषकर्मकाण्डपुराणादिकस्य (Diploma) पाठ्यक्रमः सत्रचालनीयः।

अनेन जीविकोपार्जनेन सह पुराणेषु निहितनैतिकशिक्षापि छात्रोरभिज्ञाप्यते।

५. प्रशासनिकसेवापरीक्षाहेतोः अध्ययकेन्द्रम् (I.A.S. Coaching Center)- एतत्कृतेऽधययनकेन्द्राणि सत्रचालनीयानि। अत्रा विषयद्वयमवधेयम्।

(अ) प्रशिक्षणाय छात्राचयनं प्रवेशपरीक्षया कर्त्तव्यम्।

(आ) प्रशिक्षणाय चितेभ्यश्छात्रोभ्यो योग्यतानुसारं छात्रावृत्तिरपि प्रदेयाः।

६. संस्कृतभाषाव्यवहारः - संस्कृतज्ञा अध्येतारश्च संस्कृतमाश्रित्यैवाधिकाधिकं व्यवहरेयुः। पत्रादिव्यवहारे वादविवादे भाषणे लेखने दूरभाषे च संस्कृतमेव प्रयुञ्जीरन्। दैनिकसमाचारपत्राणि दूरदर्शनपत्रापत्रिकासु विज्ञापनादिमाध्यमेन संस्कृतप्रचारो विध्येः। पारम्परिकविद्यालयमहाविद्यालयविश्वविद्यालयेषु सर्वमपि कार्यं संस्कृतमाध्यमेन भवेत्।

७. व्याकरणस्य सरलीकरणम्- संस्कृतव्याकरणं सरलीकृत्य व्याकरणनियमाः प्रयोगशैल्या शिक्षणीयाः।

८. संस्कृतस्यानिर्वायशिक्षणम् - हिन्दी-आंग्लभाषाभ्यां सहैव संस्कृमपि सर्वेषु विद्यालयेष्वनिवार्यं भवेत्। त्रिभाषासूत्रोऽपि संस्कृतस्थानं रक्षणीयं परिपालनीयत्रच। प्रार्थनासभा अपि संस्कृतभाषायां स्युः। प्रार्थनासभाषु संस्कृतसूक्तिरेका, तस्या भावार्थश्च छात्रोभ्यो मञ्चाच्छिक्षणीयः। सर्वत्रा संस्कृतं संस्कृतमाध्यमेन एव पाठनीयम्।

६. संस्कृतनिमन्त्राणपत्राम्- यथा हि सर्वेऽपि संस्काराः संस्कृतभाषया संपाद्यन्ते, तथैव विवाहादिसंस्काराणामान्त्राणनिमन्त्राणपत्राण्यपि संस्कृतभाषायामेव प्रकाशनीयानि संस्कृतज्ञैः।

१०. आधुनिकगुरुकुलस्थापनम्- आधुनिकांग्लविद्यालयाः स्थाप्यन्ते सम्प्रति। ते खलु विद्यालया नैतिकचारित्रिाकदृष्ट्या शून्याः। तर्हि साम्प्रतं गुरुकुलसदृशविद्यालयाः संस्थापनीयाः। यत्रा संस्कृतेन सह विविधविषयाः स्युः।

११. संस्कृतपरिवारनिर्माणम् - नालमिति संस्कृततैरुच्चपदं सम्प्राप्य। तदनु स्वपुत्रापुत्रीश्च संस्कृतं सम्पाठ्य संस्कृतपरिवारा निर्मेयाः।

एतत्करणीयकार्यं न केवलमेकाकिना विधतुं शक्यते, अपितु राष्ट्रियसंस्कृत- संस्थानस्य, संस्कृतभारत्याः, भारतदेशस्थ-संस्कृत-अकादमीनां, विविध्संस्कृतनिष्ठ- सामाजिकसघहठनानां संस्कृत-विदुषात्र्च सहयोगेन प्रकर्तुं शक्यते। प्रामुख्येनात्रा सर्वकारसहयोगोऽपि अपेक्षते। अस्माकं सर्वकारश्चेत् संस्कृते प्रत्यध्किं यत्नशीलो भविष्यति तर्हि तत्समयो नूनमेवायास्यति यदा देवभाषेयं स्वस्थानं पुनरलघङ्करिष्यति। अन्ते कथयितुं शक्यते यख मृता म्रियते न मरिष्यति वेति संस्कृतम्।

## सन्दर्भसंकेत-


१. काव्या. परि. श्लोक- पृ. ३१

२. १९९४ (6) SCC579, Para 12, Sanskrit Commission 1957, page-73,
quoted in Judge ment.

३. The Hindu, 11th Sept. 1949.

४. 1994 (6) SCC 579. Para 21.

५. Kvs. Letter No. 110332/7/2010 KVSE/ACAD (KVS Letter dated-5-1-2011, 7-3-2011,
Letter-No. 11029/2/2010 16 Aug, 2011, 1-2-2011) -II/KVSHQ/ACAO

६. Lord Macaulay in his Speach of Feb. 2, 1835 in British Parliament.
- संग्रहीत संस्कृत भारती के पत्रांक.से।

७. नवजीवन पत्रिका ३१.३.१९२७

८. पफोर्ब्सपत्रिका जुलाई १९८७ की एक रिपोर्ट में।


■ पता : शोधच्छात्रः, राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः

# परिश्रमी बनिए-ऊँचे उठिये

■ महिमा तिवारी

श्रम के प्रति उपेक्षा की वृत्ति आज हममें दिनों दिन बढ़ती जा रही है, जिससे हमारे जीवन में अनेको विषमताएं और समस्यायें उठ खड़ी हुई है। जीवन में असन्तुलन पैदा हो गया है। तथाकथित पढ़े-लिखे, शिक्षित कहे जाने वाले वर्ग में तो यह वृत्ति और भी बढ़ती जा रही है। ऐसे लोग श्रम करना अपना अपमान समझते हैं। श्रम के प्रति उपेक्षा के भाव से अभावग्रस्तता गरीबी को पोषण मिलता है क्योंकि किसी भी उपार्जन और उत्पादन का आधार श्रम ही है। समय में श्रम के प्रति दिलचस्पी का निवारण कैसे होगा ? श्रम न करने से शारीरिक प्रणाली असन्तुलितं अस्त-व्यस्त अक्षम बन जाती है और अस्वस्थता की समस्या उठ खड़ी होती है। श्रम के अभाव में मनुष्य जीवन के सहज स्वाभाविक सन्तोष सुख व मानसिक शान्ति से वंचित रह जाता है। क्योंकि श्रम जीवन का धर्म है। श्रम और जीवन का अन्योन्याश्रित सम्बन्ध है। श्रम के साथ जीवन है और जीवन के साथ श्रम। दोनों में से एक को विलग कर देने पर किसी का भी अस्तित्व नहीं बचेगा।

किसी भी उपलब्धि का आधार श्रम है। बिना श्रम के किसी भी क्षेत्र के स्थायी और पूर्ण सफलता अर्जित कर लेना असम्भव है। श्रम की महत्ता का प्रतिवादन करते हुए नीतिकार ने लिखा है-

**''उद्यमेन हि सिध्यन्ति**
**कार्याणि न मनोरथैः।**
**न हि सुप्तस्य सिंहस्य**
**प्रविशन्ति मुखे मृगाः।।''**

उद्यम करने से ही कार्यो की सिद्धि प्राप्त होती है। इच्छा करने या सोचते-विचारते रहने से नहीं होता। सोते हुए सिंह के मुख में पशुगण (हिरन) अपने आप ही नहीं चले जाते।''

इसमें कोई सन्देह नहीं कि बिना उद्यम किये श्रम किये और बात तो दूर है पेट की तृप्ति (भूख मिटाना) करना ही कठिन है। श्रम से खाद्य पदार्थ उपार्जन करने होंगे फिर उन्हें पकाना पड़ेगा और हाथों से मुँह तक पहुँचाना पड़ेगा तभी क्षुधा निवृत्त हो सकेगी। इसी तरह किसी भी कार्य के श्रम का मूल्य चुकाये बिना सफलता प्राप्त न हो सकेगी।

संसार में जो कुछ भी ऐश्वर्य, सम्पदाएँ, वैभव इत्यादि उत्तम पदार्थ है वे सब श्रम की ही देन है। श्रम में वह आकर्षण है कि विभिन्न पदार्थ, सम्पदायें उसके पीछे-पीछे खिंचे चले आते हैं। श्रम मानव को परमात्मा द्वारा दी गयी सर्वश्रेष्ठ सम्पत्ति है। जहाँ श्रम की पूजा होगी वहाँ कभी भी कोई कमी नहीं रहेगी। 'विनोबा जी' के शब्दों में-

''परिश्रम हमारा देवता है।'' जो हमें अमूल्य वरदानों से सम्पन्न बनाता है। परिश्रम ही उज्जवल भविष्य का निर्माण करता है।

इसमें कोई सन्देह नहीं कि हमारी अभाव ग्रस्तता, गरीबी, दीनता का बहुत कुछ कारण पर्याप्त और सही ढंग से श्रम न करना ही है। सामने पड़ा हुआ काम जब श्रम का अंजाम चाहता है और हम हाथ पर हाथ धरे बैठे सोचते रहते हैं तो काम हमें श्राप देता है और हम उसके लाभ से वंचित रह जाते हैं, प्रतिदिन उगता हुआ सूरज हमारे लिए सक्रिय जीवन का श्रम शीलता का सन्देश लेकर आता है किन्तु हम दिन भर गपशप में, खेल-तमाशो में आलस्य और प्रमाद की निद्रा में इस सन्देश की ओर ध्यान नहीं देते फलस्वरूप उस दिन मिलने वाली सफलता और उपलब्धियों से हमें वंचित रहना पड़ता है। हम कोई उन्नति नहीं कर पाते। यह निश्चित है कि श्रम के बिना कोई भी उन्नति नहीं कर सकता।

परिश्रम ही धरती पर मानव-जीवन का आधार है। श्रम के अभाव में मनुष्य को दुःखद परिस्थितियों में गिरने के लिए बाध्य होना पड़ेगा। कार्लाईल ने कहा है-''श्रम ही जीवन है।'' अकर्मण्य निष्क्रिय व्यक्ति को विभिन्न पदार्थों की उपलब्धियों और वरदानों से वंचित रहना होता है। जिससे विभिन्न अभाव, असहनीयता, दीनता के विषमय घूँट को पीने के लिए बाध्य होना पड़ेगा। इन परिस्थितियों में अपमानित, लाचार परतंत्र जीवन मृत जीवन से भी बुरा होता है।

प्रकृति का नियम है कि जो वस्तु उपयोग में नहीं आती वह जल्दी ही नष्ट हो जाती है। विभिन्न पेचीदगियों से भरा मानव शरीर श्रम करने के लिए मिला हुआ है। लम्बे-लम्बे हाथ, पैर, बुद्धि एवं विभिन्न अवयव ठीक-ठीक काम को करने के लिए मिले हैं। जब इस शरीर यंत्र का कोई उपयोग नहीं किया जाता तो यह उसी तरह विकृत और नष्ट होने के लिए बाध्य होता है जिस तरह बेकार पड़ी हुई मशीन जंग लगाकर खराब होकर अनुपयोगी हो जाती है। श्रम से शरीर यंत्र सक्रिय रहता है, इससे इसके विभिन्न अवयव ठीक-ठीक काम करते हैं। उनमें जीवन और सजीव रक्त का दौरा होता रहता है। इसलिए श्रमशील व्यक्ति सदैव स्वस्थ और प्रसन्नचित्त रहता है।

आजकल दिनों-दिन बढ़ती हुई स्वास्थ्य की शिकायत का एक बड़ा कारण हमारे दैनिक जीवन में कठोर श्रम का अभाव भी है।

परिश्रम दो प्रकार से होता है एक शारीरिक और दूसरा मानसिक। आवश्यकता इस बात की है कि शारीरिक और मानसिक श्रम का संतुलन में बनाये रखा जाय। दोनों के सन्तुलन में ही श्रम की पूर्णता निहित है। अकेला मानसिक श्रम अपूर्ण है तो शारीरिक श्रम भी मानसिक योग के अभाव में अपूर्ण रह जाता है।

आवश्यकता इस बात कि है कि हम जीवन में श्रम को स्थान दें। श्रम को जीवन मंत्र बनायें। महात्मा गाँधी ने 'शरीर-श्रम' को एक व्रत मानकर मानव जीवन के लिए आवश्यक माना है। श्रम न करना अपने प्रति और समाज के प्रति एक अधोन्मुखी प्रवृत्ति, अकर्मण्यता, हरामखोरी, कामचोरी और श्रम के प्रति उदासीनता ही है। व्यक्तिगत और सामाजिक सुख-समृद्धि विकास, उन्नति कुशलता के लिए हमें जीवन के श्रम की प्रतिष्ठा करनी होगी।

''परिश्रम ही सफलता की कुञ्जी है।''

■ पता : रा.सं.सं., लखनऊ परिसर, लखनऊ

# ज्योतिषशास्त्रीय-अभियन्तृ (इंजीनियर) योगानां समीक्षणम्

■ नवीन शर्मा

**हिरण्यमये परे कोशे विरजं ब्रह्मा निष्कलम्।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः।।**

ब्रह्माण्डभाण्डोदरेऽस्मिन् समग्रज्ञानविज्ञानरत्नविभूषितसर्वलोककल्याणकारकत्वेन प्रथिताः सन्ति वेदग्रन्थाः। सर्वविधकामनापूरकत्वादुच्यन्ते कल्पतरवोऽपि। वेदस्य षट्स्वङ्गेषु ज्योतिषशास्त्रमेकं प्रयोगात्मकं शास्त्रं वर्तते। अस्य शास्त्रस्य सम्बन्धः लोकैः सह सामान्येन दृश्यते श्रूयते च। अद्यतन-स्पर्धाया युगे सर्वेऽपि जना जीवनयापनार्थमाजीविकामिच्छन्ति। पुरा केचन कृषका भवन्ति स्म, केचन आध्यात्मिकविद्याया अध्ययनेन अध्यापनेन च जीविकोपार्जनं कुर्वन्ति स्म परञ्च अद्यतनीये युगे सर्वेऽपि जना अभिभावका अभ्यर्थिनश्च सर्वकारीय-वृत्तिं प्राप्तुमिच्छन्ति। तदर्थं बहवश्छात्रा इंजीनियरिंग् शिक्षां प्राप्तुमिच्छन्ति। बहुकालात् समाजे इमां समस्यामहं पश्यन्नस्मि। अतो मया बहूनाम् अभियान्त्रिकीणां जन्मकुण्डलीनां सङ्ग्रहः कृतः। तासां जन्मकुण्डलीनां शोधः कृतः, एवं मया ज्ञातं यत् यः कश्चित् इंजीनियरिंग् शिक्षां प्राप्तुमिच्छति वस्तुतः तस्य जन्मकुण्डल्यां इंजीनियरयोगो वर्तते न वा। यदि योगो वर्तते तर्हि सः तस्मिन् क्षेत्रे कृते प्रयासे साफल्यमधिगन्तुमर्हति न वा।

नो चेत् योगं विना कृते प्रयत्नेऽपि साफल्यं न लभ्यते। अतः स जनः असाफल्यमवाप्य पुनरन्यस्मिन् क्षेत्रे जीविकोपार्जनार्थम् अन्यत् शास्त्रं पठितुं वाञ्छति, एवं तस्य जीवनस्य महान् काल इतस्ततो भ्रमणे क्षेत्रपरिवर्तने च गच्छति। ज्योतिषशास्त्रे सामान्येन शिल्पयोगानां वर्णनमुपलभ्यते। वर्तमानसमये शिल्पशब्दोऽयम् अभियन्तृ अथवा इंजीनियरिंग् शब्दरूपेण प्रचलितोऽस्ति। विकासशीलेऽस्मिन् अभियन्तृयुगे सङ्गणक-विद्युत्-मैकेनिकल-केमिकल-मैटेलर्जिकल-बॉयोटेक्नोलोजी-एरोनॉटिकल-सिविल्-आदिषु विभिन्नेषु क्षेत्रेषु जना इंजीनियरिंग शिक्षां प्राप्य विभिन्नक्षेत्रेषु अभियन्तृपदेषु नियुक्ता भवन्ति, आजीविकाञ्च प्राप्नुवन्ति। सर्वेषां जातकानां जन्मकुण्डलीषु ये-ये ग्रहाः बलिनो भवन्ति तेषामनुगुणमेव जातका विभिन्नाभियन्तृशाखासु विशेषज्ञतां प्राप्नुवन्ति। आधुनिकपरिप्रेक्ष्ये इंजीनियरयोगस्य कश्चन सार्वभौमः सिद्धान्तः सुदृढो भवत्विति तत्रादौ-

१. **गणितज्ञ-सङ्गणकाभियन्तृयोगश्च (इंजी-Computiry)**-भौमो बुधश्च गणितस्य कारकौ स्तः। राहुः शुक्रश्च सङ्गणकस्य कारकौ स्तः। अतो भौमो बुधश्च यदा जातकस्य विद्यास्थानं कर्मस्थानं लाभस्थानञ्च प्रभावयतः तर्हि जातको गणितक्षेत्रे साफल्यमाप्नोति। एवं राहुः शुक्रश्च यदि पञ्चमभावं पञ्चमेशं, कर्मभावं कर्मेशं वा अथवा आजीविकाकारकग्रहं लाभभावं वा प्रभावयतः तर्हि जातकः सङ्गणकाभियन्तृक्षेत्रे साफल्यमाप्नोति।

पञ्चमभावस्य बलवतो लग्नस्य वा सम्बन्धो भौमबुधशुक्रराहुग्रहैः सार्धं स्यात्तर्हि जातकः कम्प्यूटर् इंजीनियर् भवति। भौमो द्वितीयभावे शुभग्रहैः सार्धं भवेदेवं बुधो भौमं पश्यति अथवा बुधः केन्द्रे स्यात्तर्हि जातको गणितज्ञो भवति।

बुधग्रहो यदा बलिष्ठो भूत्वा आजीविकाकारको भवति तदा जातको मैथमैटिक्स एवं कम्प्यूटिंग इंजीनियर भवति।

२. **विद्युदभियन्तृयोगः (Electrical Engg.)**- सूर्यभौमकेतुग्रहा विद्युत्कारका वर्तन्ते। अत एते ग्रहा जन्मकुण्डल्यां यदि पञ्चमेशं पञ्चमभावं वा स्वयुतिना दृष्ट्या वा प्रभावयन्ति अथवा कर्मेशं कर्मभावं वा प्रभावयन्ति एवम् आजीविकाकारकग्रहेण सम्बन्धं कुर्वन्ति तर्हि जातक इलेक्ट्रिकल इंजीनियरिंगक्षेत्रे साफल्यमवाप्य आजीविकां प्राप्नोति।

- पञ्चमभावे ऽग्नितत्वराशिः स्यादेवं भौमबुधयोः सम्बन्धः सूर्येण सार्धं स्यात्तर्हि जातक इलेक्ट्रॉनिक इंजीनियर भवति।
- भौमो ऽग्निकारको ऽस्ति। अयं केतुसूर्यादिभिः अग्निद्योतकग्रहैः प्रभावितो भूत्वा आजीविकां द्योतयति तर्हि जातक इलेक्ट्रिकल इंजीनियर भवति।

३. **यान्त्रिकाभियन्तृयोगः (Mechanical Engg.)**-बुधो बुद्धेः कारको ऽस्ति। मेकेनिकलक्षेत्रे साफल्यं प्राप्तुं सूक्ष्मबुद्धेर्गहनचिन्तनस्य च आवश्यकता भवति। अतो बुधो ऽयं यदि तकनीकिकारकग्रहैः सार्धं युतिं दृष्टिं वा करोति तर्हि जातको मेकेनिकल इंजीनियरिंग शिक्षां प्राप्य आजीविकां प्राप्नोति।

४. **रासायनिकाभियन्तृयोगः (Chemical Engg.)**-रसायनस्य मुख्यकारका राहुकेतुशुक्रग्रहा वर्तन्ते एते ग्रहाः पञ्चमभावेन पञ्चमेशेन वा सम्बन्धं कुर्वन्ति अथवा दशमभावेन दशमेशेन वा दृष्टिं युतिं वा कुर्वन्ति तर्हि जातकः केमिकल इंजीनियर भवति।

यदि आजीविकाकारकचन्द्रो राहुग्रहेण प्रभावितो भूत्वा वृत्तिं द्योतयति तर्हि जातको रसायननिर्माणसम्बन्धिकार्ये सन्नियोजितो भवति। अत्र कारणं यत् जलकारकचन्द्रो विषद्योतकराहुग्रहेण प्रभावितो भवति। अतो जातकः केमिकल इंजीनियरिंग शिक्षां प्राप्नोति।

५. **खननाभियन्तृयोगः (Minning Engg.)**- भौमो भूमेः कारकः कथ्यते। शनिग्रह अधोमुखी ग्रहो ऽस्ति। अतो भूमो अन्तस्थवस्तूनां कारको ऽयं शनिः। जन्मकुण्डल्यां यदि उभयोः सम्बन्धो भवति अथवा पञ्चमभावं पञ्चमेशं वा एवं कर्मभावं कर्मेशञ्च अथवा लाभभावं लाभेशं वा प्रभावयतः तर्हि जातकः माइनिंग इंजीनियरिंग क्षेत्रे शिक्षां प्राप्य आजीविकां प्राप्नोति।

शनिर्लौह-कोयला-तैल-भूतलादीनां कारको भवतीति प्रतिपादितमस्ति। अयं शनिः चतुर्थेशो भूत्वा अथवा चतुर्थेशेन सार्धं भूमिकारकेण भौमेन वा सम्बन्धं करोति तर्हि जातको माइनिंग इंजीनियरिंग क्षेत्रे साफल्यमाप्नोति।

६. **जनपदाभियन्तृयोगः (Civil Engg.)**-यदि भौमः चतुर्थेशो भूत्वा चतुर्थेशेन सम्बन्धं विधाय आजीविकां द्योतयति तदा जातकः सिविल इंजीनियर भवति।

शुक्रो बलिष्ठो भूत्वा अभियान्त्रिककारकग्रहैः सार्धं भूत्वा आजीविकां द्योतयति तदा जातको जलविभागस्य इंजीनियर भवति।

निष्कर्षरूपेण ज्ञायते यत् ज्योतिषशास्त्रे एकस्यैव ग्रहस्य अनेकाः वृत्तयः प्रतिपादिता वर्तन्ते, तर्हि कया जीविकया जातकस्य जीवनयापनं भवेदिति अत अस्याः समस्यायाः समाधानार्थं जातकस्य जन्मकुण्डल्यां स्वास्थ्ययोगः, विद्यायोगः, धनयोगः, परिवेशः, वंशपरम्परा, कालः, प्रयत्नादीनामन्वेषणं परमावश्यकं वर्तते एव।

अपि च तकनीकिकारकग्रहाणां दशान्तर्दशायां प्रत्यन्तरदशायां वा जातकः इंजीनियरिंग क्षेत्रे प्रयासं करोति एवं ग्रहाणां बलाबलत्वेन जातकेन परिणामः प्राप्यते। उपरोक्तयोगानामतिरिक्तमपि जन्मकुण्डल्यामनेके अभियन्तृयोगाः भवन्ति येषां विवरणमस्मिन् लघुशोधपत्रे नास्ति सम्भवम्। संक्षेपेण जन्मकुण्डल्याः सम्यक् परिशीलनेनैव इंजीनियरिंग शिक्षां प्राप्तुं निर्णयः कर्त्तव्यः इति साधुः।

## आधारग्रन्थाः


| | | | |
|---|---|---|---|
| १. | व्यवसाय का चुनाव | श्रीजगन्नाथभसीन | रंजन पब्लिकेशन दिल्ली, स-१९९६ |
| २. | बृहत्पाराशर होराशास्त्र | पाराशरः | चौखम्बा सुरभारती वाराणसी, स-२००४ |
| ३. | जातकाभरणम् | ढुंढिराज | चौखम्बा अमरभारती, वाराणसी, स.-२००८ |
| ४. | जातकपारिजातः | वैद्यनाथः | चौ.सं.सं., वाराणसी स-२००४ |
| ५. | जातकतत्वम् | महादेव दैवज्ञः | चौ. सुरभारती प्र. सं-२००० |
| ६. | मानसागरी | श्रीमद्मानदैवज्ञः | चौ.स.सं., वाराणसी, सं.-२००४ |


■ पता : राष्ट्रिय संस्कृत संस्थानम् लखनऊ परिसरः, लखनऊ

# सुत्तनिपात में वर्णित वर्णवाद या जातिवाद

■ पुष्पलता वर्मा

सुत्तनिपात के महावग्ग के अन्तर्गत वशिष्ठ सूत्र में गौतम बुद्ध कहते हैं, न बालों से, न शिर से, न कानों से, न आँखों से, न मुख से, न नाक से, न होंठो से, न आँख की भौहों से, न गर्दन से, न कन्धों से, न पेट से, न जाँघ से, न छाती से, न गुप्त स्थान से, न मैथुन से, न हाथो से, न पैरों से, न अङ्गुलियों से, न नखों से, न ऊरू से, न वर्ण से, न स्वर से, कोई पृथक्-पृथक् भेद मनुष्यो के शरीर में दिखाई देता है जैसा कि अन्य शरीरों में जाति-भेद बोधक चिन्ह दिखाई देता है। मनुष्यों में यह भेद केवल संज्ञापरक है।[१]

इस प्रकार किसी भी वर्ण के विशेषकुल में उत्पन्न होने के कारण उसको उस जाति वाला माना जाय अथवा नहीं, बुद्ध काल में बहुत बड़ी समस्या थी, जिसका स्पष्ट समाधान गौतम ने सुत्तनिपात के महावग्ग के अन्तर्गत वशिष्ठ सूत्र की गाथाओं में किया है। उनका स्पष्ट मत था कर्म से जाति मानी जाय, जन्म से नहीं। इसकी पुष्टि में उन्होंने ब्राह्मण कहे जाने के लिए अनेक प्रकार की कसौटियाँ बताया है, जिनका पालन करने वाला ही ब्राह्मण कहलाने योग्य है, विशेष जाति में जन्म लेने से नहीं। वे आगे कहते हैं-जो अपरिग्रही है, अयाचक है, भव बन्धनों को क्षीण करने वाला है, भय रहित है, संघ एवं आसक्ति रहित है, क्रोध, तृष्णा, मिथ्या धारणाओं को नष्ट करने वाला, अविद्या से रहित अर्थात्-बुद्ध है, जो आक्रोश, हिंसा, बन्धन के बिना द्वेष रहित है, व्रती है, शील सम्पन्न है, तृष्णा रहित है, इन्द्रिय निगृही है, अन्तिम रूप से शरीर को धारण करने वाला है, जो जल में लिप्त न होने वाले कमल की तरह, आरे की नोंक पर नहीं टिकने वाले सरसों के दाने की तरह विषयों में अलिप्त है, जिसने यही दुःख क्षीण कर लिया है, जो वासना और तृष्णा से रहित है, जो गम्भीर प्रज्ञ, बुद्धिमान मार्ग-अमार्गज्ञ है, उच्चतम अर्थ को प्राप्त है, जो गृहस्थ तथा परिव्रजित दोनों से पृथक् है, जो घर से बेघर हो साधनारत है, जो सीमित आवश्यकता वाला है, जो न किसी को मारने वाला है न किसी को मारने की प्रेरणा देने वाला है, उसे ब्राह्मण कहा जाना चाहिए।[२]

गौतम बुद्ध वशिष्ठ शिष्य से कहते हैं कि गोपालन से आजीविका चलाने वाले को कृषक समझना चाहिए, ब्राह्मण नहीं। भले ही वह ब्राह्मण कुल में उत्पन्न हुआ हो। इसी प्रकार शिल्प से आजीविका चलाने वाले का शिल्पी ही समझना चाहिए ब्राह्मण नहीं। व्यापार से आजीविका चलाने वाले को वैश्य समझना चाहिए ब्राह्मण नहीं। इसी प्रकार दूत कर्म से आजीविका चलाने वाले को दूत समझना चाहिए, ब्राह्मण नहीं। चौर कर्म वाले को चौर समझना चाहिए, ब्राह्मण नहीं। शस्त्र कर्म वाले को योद्धा समझना चाहिए, ब्राह्मण नहीं। पौरोहित्य कर्म करने वाले को याजक समझना चाहिए, ब्राह्मण नहीं। ग्राम-राष्ट्र का भोग करने वाले को राजा समझना चाहिए, ब्राह्मण नहीं। ब्राह्मणी माता के कोख से उत्पन्न होने वाले को ब्राह्मण नहीं कहना चाहिए। वह भोगवादी (ब्राह्मण के समान व्यवहार करने वाला) परिग्रही है।[३]

सुत्तनिपात के महावग्ग के अन्तर्गत वशिष्ठ सूत्र में मनुष्य की जातिगत उच्चता और हीनता के विषय में भारद्वाज और वशिष्ठ के शिष्यों का गौतम बुद्ध के साथ एक प्रसंग के माध्यम से पर्याप्त चर्चा मिलती है।

भारद्वाज शिष्य मातृ कुल और पितृ कुल की सात पीढियों तक दोनों ओर से शुद्ध रक्त वाले, जातिवाद के कलंक और निन्दा से रहित, दोष रहित को ब्राह्मण कहे जाने के पक्ष में था। किन्तु वशिष्ठ शिष्य की दृष्टि में शीलवान, व्रत-नियम-पालन में सन्नद्ध ही ब्राह्मण हैं।[४]

इस प्रकार के विवाद के निस्तारण के लिए दोनों गौतम-बुद्ध के पास जाते हैं और उनके निर्णय को स्वीकार करने की बात करते हैं। जाति से ब्राह्मण माना जाय या कर्म से-इस प्रश्न के समाधान के रूप में गौतम कहते हैं-मनुष्य के अतिरिक्त अन्य जातियों में जैसे वनस्पति, वृक्ष, कीट-पतंग, पशु, सर्प आदि, जलचर, नभचर, पक्ष आदि में जातिगत भेद होता है। छोटे-छोटे कीड़ों में यहाँ तक कि चीटियों में भी जातिगत भेद होता है। जिस प्रकार इनमें पृथक-पृथक जन्मजाति चिन्ह दिखाई पड़ते हैं उस तरह मनुष्यों में कोई जातिगत भेद दिखाई नहीं देता-

**''यथा एतासु जातीसु, लिङ्गं, जातिमयंपुथु एवं**
**नत्थि मनुस्सेसु, लिङ्गं जातिमयं पुथु।।**[५]

वैदिक काल में वर्ण और जाति व्यवस्था कर्मो पर आधारित थी। जैसे-अध्ययन-अध्यापन और यज्ञ आदि कर्म करने वालों को ब्राह्मण कहा गया। रक्षा कर्म करने वाले को क्षत्रिय कहा गया। व्यवसाय से आजीविका चलाने वाले को वैश्य बताया गया और सेवा कार्य की प्रधानता वालों को शूद्र कहा गया। परवर्ती काल में धीरे-धीरे यह वर्ण व्यवस्था रूढ़ हो गयी, अर्थात् यजन करने वाले के कुल में जो भी उत्पन्न हो गया उसे ब्राह्मण कहा जाने लगा इसी प्रकार रक्षा कार्य करने वाले के कुल में उत्पन्न होने वाले को क्षत्रिय कहा जाने लगा। व्यापार की प्रधानता वाले कुल में उत्पन्न वैश्य कहे जाने लगे और सेवा कार्य की प्रधानता वाले कुल में उत्पन्न शूद्र कहलाने लगे। यह व्यवस्था भगवान् बुद्ध के काल तक देखी गयी। भगवान् बुद्ध ने इस रूढ़िवादी वर्ण व्यवस्था का पुनर्जागरण किया। उन्होंने कर्म को महत्त्व दिया, न कि रूढिवादी परम्परा पर आधारित कुल को।[६]

गौतम बुद्ध कहते हैं कि संसार में सभी और गोत्र कल्पित हैं। वे व्यवहार मात्र के लिए हैं। अज्ञ लोगों की मिथ्या धारणा में यह नाम गोत्र दीर्घकाल से चली आ रही है। उन अज्ञ लोगों की दृष्टि में ब्राह्मण जन्म से होता है बुद्ध का कहना है कि न कोई जन्म से ब्राह्मण होता है न अब्राह्मण। ब्राह्मणत्व और अब्राह्मणत्व सब कर्म पर आधारित है।[७]

भगवान् बुद्ध की दृष्टि में समग्र संसार कर्म से चलता है, सम्पूर्ण प्रजा कर्म से चलती है, धुरी से बँधे हुए रथ के पहियों के समान सभी प्राणी कर्म से बँधे रहकर अपने कार्य में लगे रहे हैं, अतः ब्रह्मचर्य, संयम एवं इन्द्रिय निग्रह वाले को ब्राह्मण कहा जाना चाहिए। भगवान् बुद्ध वशिष्ठ शिष्य की समस्याओं का समाधान करते हुए अन्त में कहते हैं कि तीनों विद्याओं से युक्त, शान्त चित्त और क्षीण जन्म परम्परा वाला ही श्रेष्ठ ब्राह्मण है। वही ज्ञानियों में और इन्द्र के समान श्रेष्ठ हैं।[८]

गौतमबुद्ध जातिवाद की समस्या और उसके समाधान पर बहुत खुलकर कहते हैं। वे विशेषकर ब्राह्मण जाति के लिए बहुत ही कठोर नियमों के पालन का निर्देश देते हैं। उनके अनुसार जो विरोधियों का विरोध

नहीं करता, अपने ऊपर प्रहार करने वाले पर भी प्रहार नहीं करता, संग्रह योग्य वस्तुओं पर भी अपरिग्रह वृत्ति रखता है, जिसमें किसी के प्रति न राग है, न द्वेष, न मान है, न माख, जो अकर्कश, आदरयुक्त, प्रिय सत्यवाणी बोलता है, जो लोक में किसी भी वस्तु की चोरी नहीं करता, जो इहलोक और परलोक के विषयों में तृष्णा नहीं रखता, जो निरासक्त है, संशय रहित है, निर्वाण सुख में डूबा हुआ है, जो पाप-पुण्य की आसक्ति से रहित है, जो शाक रहित निर्मल और शुद्ध है, जिसकी सभी जन्मों की तृष्णा नष्ट हो चुकी है, जिसने दुर्गम संसार के कारण मोह का परित्याग कर दिया है, जो संसार से पार जा चुका है, जो काम को त्याग चुका है, जो दैहिक और दैविक दुःख से रहित है, जो राग और घृणा से रहित, शीतल स्वभाव वाला है, क्लेश रहित है, सर्वलोक विजयी एवं वीर है, जो प्राणियों की मृत्यु और जन्म को भली-भाँति जान चुका है, जिसकी गति को देवता, गन्धर्व और मनुष्य भी नहीं जानते, जो क्षीणाश्रव हो चुका है, जो अर्हत है, जिसकी भूत-भविष्य और वर्तमान में आसक्ति नहीं है, जो श्रेष्ठ, प्रवर, महर्षि, विजेता, स्नातक और बुद्ध हो चुका है, जो पूर्व जन्म और नरक का ज्ञाता है, जिसका पुनर्जन्म क्षीण हो गया है, उन्हीं को ब्राह्मण जानना चाहिए।[९]

## संदर्भ-सङ्केत

१. सुत्तनिपात, महावग्ग, वशिष्ठसूत्र, गाथासं. २०७ से २१० (प्रकाशक-बौद्धभारती, वाराणसी)
२. सुत्तनिपात, महावग्ग, (प्रकाशक-बौद्ध भारती, वाराणसी), वशिष्ठ सूत्र, गाथा सं.-२१६-२२८
३. सूत्तनिपात, महावग्ग प्रकाशक बौद्ध भारती, वाराणसी, वशिष्ठ सूत्र, गाथा सं.-२११ से २१६
४. वही गाथा सं.-(पृ.-११६)
५. सुत्तनिपात, महावग्ग, (प्रकाशक बौद्ध भारती, वाराणसी) वशिष्ठ सूत्र, गाथा सं.-२०६
६. सुत्तनिपात, महावग्ग, प्रकाशक (बौद्ध भारती, वाराणसी) वशिष्ठ सूत्र (पृष्ठ-११६)
७. वही गाथा सं.-२४७ से २४६
८. सुत्तनिपात, महावग्ग (प्रकाशक बौद्धभारती, वाराणसी)
वशिष्ठ सूत्र, गाथा संख्या- २५३ से २५५
९. सुत्तनिपात, महावग्ग (प्रकाशक, बौद्धभारती, वाराणसी) वशिष्ठ सूत्र (गाथा सं. - २२६-२४६)

■ पता : शोधच्छात्रा, बौद्धदर्शन विभाग, राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय), लखनऊ परिसर, लखनऊ

# वर्तमान परिप्रेक्ष्य में जीवन मूल्य और उनकी शिक्षा

■ प्रवीण कुमार

प्रत्येक समाज स्व व्यवहार के द्वारा विभिन्न प्रकारात्मक मूल्यों को ही मूर्त-अमूर्त रुप से ही प्रदर्शित करता है। वह अपने समुहों को मूल्यों से ओत प्रोत अथवा उनकी सुरक्षा के लिए लगातार महान् यत्न भी करता है। साथ ही नूतन परिस्थितियों में नूतन लक्ष्यों व आदर्शों के निर्माण की प्रक्रिया में नूतन मूल्यों की स्थापना करता है। संस्कृत साहित्य में इन आदर्शों को ही शिक्षा की परिभाषा के रूप में स्वीकार किया गया है। शिक्षा को ही सर्वोत्तम मूल्य संवर्धन का प्रतिमान स्वीकार किया गया है। मनुस्मृतिकार मनु कहते हैं-

**एतत् देश प्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्र शिक्षेरन् पृथिव्यां सर्वमानवाः।**[1]

सामाजिक व्यवहार को प्रेरित करने के लिए मूल्य एक अमूर्त रूप से प्रेरक बोधक सूचक के साथ एक निर्देशक का काम करते हैं। यह लक्ष्य के साथ सामाजिक परम्परा एवं संस्कृति का अंग होने के कारण सामाजिक प्रतिष्ठा एवं धरोहर के रूप में स्वीकार किये जाते हैं। नूतन परिस्थितियों के प्रभाव एवं नूतन चिन्तन के कारण अथवा किसी अन्य कारणों के कारण लगातार गतिशील रहते हैं। इन्हीं गत्यात्मक कारणों में से हम सामाजिक आर्थिक सांस्कृतिक आध्यात्मिक प्रौद्यौगिक एवं देशिक कीर्ति अभ्युदय के आधार पर सामाजिक लक्ष्यों को प्राप्त करने के लिए कुछ विशिष्ट चयन करते है। इस प्रकार मूल्यों की स्थापना होती है। श्रुतियों, स्मृतियों, ऋर्षि-महर्शियों, वेदों-पुराणों एवं लौकिक साहित्यों के माध्यम से आदि काल से समाज निर्देशित होता आ रहा है। प्रत्येक में विशिष्ट उपस्थापन होने के कारण बहुदेववाद से लेकर अहं ब्रह्मास्मि के मध्य जीवन-मूल्य की स्थापना निम्न प्रतिमान में परिलक्षित किया गया है। उपनिषद्कार का वचन भी है-

**श्रुतयः विभिन्नाः स्मृतयः विभिन्नाः नैको मुनिर्यस्य मति विभिन्ना।**
**धर्मस्य तनवं निहितं गुहायां महाजनो येन गता स पन्थाः।।**

अर्थात् मूल्य आप में एक बहुत ही व्यापक एवं अमूर्त सर्जनात्मक चिन्तन है। जिसमें नाना प्रकार के प्रतिमानों का निरीक्षण एवं परीक्षण किया जाता है। समाज विशेष की सांस्कृतिक श्रेष्ठता मूल्यों के सत्यं शिवं सुन्दरम् स्वरूप पर ही आश्रित रहती है। दूसरी ओर सामाजिक सदस्यों के व्यवहार की कसौटी के रूप में भी स्वीकार किया जाता है। वस्तुतः किसी भी समाज की शिक्षा प्रणाली का मूल लक्ष्य इन मूल्यों को प्राप्त करना ही होता है। जिसे शिक्षा के लक्ष्य के रूप में निश्चित किया जाता है ताकि समाज विशेष कि सामाजिक सदस्य निश्चित जीवन शैली को प्राप्त करने में समर्थ हो सके तथा समाज के द्वारा स्वीकृत व्यवहार कर सके। वस्तुतः सामाजिक परिप्रेक्ष्य में जीवन जीने की कला के निश्चित मानदण्ड ही मूल्य कहलाता है।

संस्कृत साहित्य में जीवन-मूल्यों से सम्बन्धित विभिन्न प्रतिमानों का उपस्थापन किया जाता है। यजुर्वेद में निरूपित है-

**दृते दृ ν ह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।**
**मित्र स्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा चमीक्ष्ज्ञामहे।**

अर्थात् यदि सामाजिक राष्ट्रिय एवं स्व का सर्वांगीण विकास करना चाहते हैं तो सभी को हम अपने नेत्रों से मित्रवत् देखें जिससे कि हम ऐसे शक्ति को प्राप्त करने में समर्थ हो जाते है जो हमें सफल सामाजिक होने के साथ-साथ जीवन जीने की कला को भी उपस्थापित करता है। वस्तुतः हमें अपने शिक्षा सिद्धान्तों में इस प्रकार के सुन्दर विचारों को प्रतिमान के रूप में स्वीकार कर जीवन जीने की कला को अग्रसारित करना चाहिए। समाज में सत् प्रवृत्तियों एवं उच्च मानवीय मूल्यों की प्रतिष्ठा पर विशेष बल दिया गया है। यथा-

१. जीवहिंसा से पृथक् रहना।
२. दूसरे के धन को अपहरण करने से निवृत्ति।
३. सत्य भाषण।
४. परनारी चर्चा से।
५. लोभप्रवाह का अवरोध।
६. सभी प्राणियों पर दया।
७. ज्येष्ठों के प्रति विनय।
८. सज्जनपुरुषों से संगति।
६. गुरुजनों के प्रति विनम्रता।
१०. विद्याभ्यास में अभिरुचि।
११. स्वभार्या के प्रति अनुराग।
१२. लोकनिन्दा के भय।
१३. अभ्युदय में क्षमा।
१४. सभा में वाक्यचातुर्य।
१५. युद्ध में पराक्रम।
१६. यश में रुचि।
१७. अतिथिसत्कार।
१८. परोपकारीय तूष्णीभाव्।
१६. परकृतोपकार को उपख्यानादि।

सामान्य तौर पर मानवीय व्यक्तित्व का सर्वांगीण विकास के मानक मूल्य हैं। परनारी चर्चा से विरति एवं स्वभार्या के प्रति अनुराग के विषय में भर्तृहरि का यह प्रतिमान उपयुक्त प्रतीत होता है-

**एको देवः केशवो वा शिवो वा**
**एकं मित्रं भूपतिर्वा यतिर्वा।**
**एको वासः पतने वा वने वा**
**एका नारी सुन्दरी वा दरी वा।[३]**

भारतीया जीवनदृष्टि में सद्वृत अथवा सदाचार जिसको की शील कहा जाता है। शील महत्त्वपूर्ण स्थान स्वीकार किया गया है। भर्तृहरि का यह शील विमर्शण के प्रति कथन उपयुक्त प्रतीत होता है।

''सर्वेषामपि सर्वं कारणमिदं शीलं परं भूषणम्''[४]

जीवन-मूल्यों के सन्दर्भ में तैत्तिरीय उपनिषद् में शान्तिपाठ के रूप में एक प्रचलित प्रतिमान उपस्थापित किया गया है जो हमारे अन्तःकरण में विभिन्न प्रकारात्मक प्रचलित मूल्यों का संवर्धन करता है-

**सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।**

**तेजस्विनावधीतमस्तु मा विद्विषावहै।।[५]**

वस्तुतः उक्त मन्त्र में कहा गया है कि हे ईश्वर! हमारी रक्षा करिए हमारा पालन करिए हमें शक्ति दें ज्ञान दें कि हम एक दूसरे से विद्वष न करें। स्व की सम्पूर्ण स्वतन्त्रता से पूर्व जीवन जीने की कला मूल्यों का ज्ञान एवं व्यवहार परिष्कृत है। श्रीमद्भगवद्गीता में भगवान् श्रीकृष्ण उक्त विषय को प्रस्तुत करते हुए अर्जुन के लिए आचारसंहिता उपस्थापित करते हैं- ''मैं जो कुछ कहा है, अर्थात् गूढ से गूढतम विषयों के विषय में सम्प्रेषण किया है उस पर बार-बार विचार करो। सभी दृष्टिकोणों से इसका निरीक्षण एवं परीक्षण करो। ऐसा करने के पश्चात् जो अच्छा लगे वही करो। इसके लिए तुम स्वतन्त्र हो।

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु।।[६]**

मूल्यों की व्यावहारिकता व्यक्ति के व्यवहार में प्रतीत होता है। उक्त स्थिति में मूल्य उसके व्यवहार के निर्देशक के रूप में काम करता है। वस्तुतः मूल्य ही व्यक्ति के अधिकतम गतिविधियों को क्रियात्मक रूप प्रदान करता है। सामान्य तौर पर व्यक्ति ऐसे कार्यों का चयन नहीं करता जिससे उसके मूल्यों से टकराहट हो। इसका आशय यह नहीं कि जो मूल्य एक बार स्थापित हो गया वह हमेशा वैसा ही रहेगा। इसमें देश, काल, परिस्थितिवशात् शैक्षिक नीतिनिर्धारण के स्वरूप बदलाव आता है। कभी-कभी स्वाभाविक तो कभी-कभी जानबूझकर नीति किया जाता है। अर्थात् जो यह प्रत्येक बदलाव के पीछे मूर्त रूप से मूल्यों का ही बदलाव छिपा होता है।

मूल्य और संस्कृति परस्पर व्यक्ति के सन्दर्भ में एक-दूसरे का पूरक मूल्य वही है जो महापुरुषों समाजसुधारकों के द्वारा प्रतिष्ठापित एवं विकसित किया जाता है। वही संस्कृति व्यक्ति के आचार एवं व्यवहार को प्रभावित करती है। एक प्रसिद्ध शिक्षाशास्त्री ने कहा है- ''शिक्षा का अर्थ मूल्यों के सन्दर्भ में नहीं किया है किन्तु निश्चित शिक्षा जीवनमूल्यों से सहसम्बन्धित है। यह सार्वभौमिक परिवर्तन से ही सिद्ध होता है।[७]

व्यक्ति के व्यक्तित्व के सर्वांगीण विकास के आधार पर शिक्षा के चार आयाम बतलाये गए हैं-

१. मानसिक शिक्षा,

२. बौद्धिक शिक्षा,

३. शारीरिक शिक्षा तथा

४. भावात्मक शिक्षा।

उक्त आयामों के आधार पर प्रतीत होता है कि हमारी शिक्षा प्रणाली असन्तुलित हो गयी है क्योंकि वर्तमान शिक्षा प्रणाली में केवल दो आयामों पर ही पाठचर्या में बल दिया गया है। प्रथम मुख्य रूप से बौद्धिक विकास तथा प्रथमापेक्षया द्वितीय गौण रूप से शारीरिक विकास का महत्त्वपूर्ण स्थान दिया गया है। जबकि शेष दो आयाम मानसिक और भावात्मक बहुलांश रूप में उपेक्षित हैं यही शिक्षा प्रणाली का असन्तुलन है इसका कारण क्या है?

जीवन-मूल्यों का तीव्रतम गति से विघटन के कारण भावी पीढ़ी को अतीव क्षति का भास प्रतीत होता है। यदि उचित समय रहते उन मूल्यों को पुनर्स्थापित संगठित एवं नियन्त्रित नहीं किया जाएगा तो इसका परिणाम अप्रत्याशित रूप से विध्वंसकारी हो सकता है। अतः मानवीय जीवन के प्रति बुरे स्वचरित्र से लेकर महाराष्ट्र चरित्र यावत् मूल्यों की स्थापना के लिए संस्कृत साहित्य में वर्णित प्रतिमानों का प्रयोगात्मक अनुप्रयोग श्रेयस्कर प्रतीत होता है। अत एव विशेषज्ञ शोधकार्यों के माध्यम से वर्णित विभिन्न प्रतिमानों का प्रयोगात्मक स्वरूप प्रतिपादित कर समाज को 'सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग भवेत्।।' के प्रति बोधित करे।

## सन्दर्भः-


१. मनुस्मृति, व्या.-पण्डित रामेश्वर भट्ट, चौखम्बा संस्कृत संस्थान, दिल्ली, २.२०.

२. वेदों के उद्यान के चुने हुए फूल, आ. प्रियव्रत शास्त्री, प्रका.- विजय कुमार गोविन्दराम हासानन्द, ४४०८, नई सड़क, दिल्ली, पृ.सं. २३६.

३. नीतिशतक, भर्तृहरि, व्या.-विनोद कुमार शर्मा, निर्माण प्रकाशन, रामनगर, लोनी रोड, शाहदरा, दिल्ली; पृ.सं.-८२.

४. पूर्ववत्, पृ.सं.-८३.

५. तैत्तिरीय उपनिषद्।

६. श्रीमद्भगवद्गीता, व्या.-स्वामी रामदास, गीताप्रेस गोरखपुर, पृ.सं. ११२०, १८/६३.

७. गान्धीमहोदयस्य जीवनदर्शनम्, डॉ. कमला द्विवेदी, महेश पब्लिकेशन हाऊस, नई दिल्ली।

८. ऋग्वेद।


■ पता : शोधच्छात्र - शिक्षाशास्त्र, रा.सं.सं., लखनऊ परिसर

